म०—काममित्यादि । काममनुमतौ,[१] प्राणहराः सन्निपातज्वरादयः । शेषं सुबोधमिति ॥ ४१ ॥

इति श्रीविजयरक्षितकृतायां मधुकोशव्याख्यायां हिक्का-श्वास-निदानं समाप्तम् ।

भा० टी०—यों तो सन्निपात आदि बहुत से रोग प्राण नाशक होते हैं, परन्तु वे उतने प्राण नाशक नहीं होते जितना कि श्वास और हिक्का ॥ ४१ ॥

[ इति श्रीहरिनारायणशर्मवैद्यकृतायां निदानदीपिकायां रुग्विनिश्चय भाषा टीकायां हिक्काश्वासनिदानम् ।

## अथ स्वरभेदनिदानम् । ( Hoarseness of Voice ) होर्सनेस आफ वाइस

### अथ स्वरभेदस्य निदानपूर्विका संप्राप्तिः ।

प्राणोदानदुष्टिसाधर्म्यात् श्वासे च स्वरभेदो भवतीति श्वासानन्तरं स्वरभेदमाह—

**अत्युच्चभाषणविषाध्ययनाभिघात-**
**संदूषणैः प्रकुपिताः पवनादयस्तु ।**
**स्रोतःसु ते स्वरवहेषु गताः प्रतिष्ठां**
**हन्युः स्वरं भवति चापि हि षड्विधः सः ॥ १ ॥**
**( वातादिभिः पृथक् सर्वैर्मेदसा च क्षयेण च । )**

( सु० उ० अ० ५४ श्लो० २ )

म०—अत्युच्चभाषणेत्यादि । अध्ययनमुच्चैर्वेदादिपाठः, आभिघातः=कण्ठादिदेशे लगुडादिभिराघातः, एतैः संदूषणैरन्यैश्च यथास्वं वातादिकोपनैः, विषं तु सर्वदोषप्रकोपणमेव । स्रोतःसु स्वरवहेषु चतुर्षु, यदुक्तं सुश्रुते—“द्वाभ्यां भाषते, द्वाभ्यां घोषं करोति”—( सु. शा. स्था. अ. ९ ) इति; भाषण-घोषणयोरल्पत्व-महत्त्वाभ्यां भेदः । प्रतिष्ठां=स्थितिं वृद्धिं वा । स इति स्वरभेदः, षड्विधो वातपित्त-कफ-संनिपात-क्षय-मेदो-जभेदात् ॥ १ ॥

भा० टी०—अधिक जोर से बोलने से, विष खाने से, जोर २ पढ़ने से गला में किसी चीज से चोट लग जाने से, दूसरे कुपित करने वाले पदार्थों से भी वातादि कुपित होकर स्वर वाही स्रोतों (स्वर यन्त्र) को विगाड़ कर स्वरभेद कर देते हैं ।

---

१ अनुमतिः सम्मतिः । हिक्काश्वासौ शीघ्रमवश्य प्राणहरौ, सन्निपातादयस्तु विकल्पेनेति भावः ।

इसमें आवाज बिगड़ जाती है। यह स्वर भेद छ प्रकार का होता है—वात पित्त, कफ सन्निपात, मेदस् तथा क्षय से। स्वर यन्त्र चार होते हैं। दो से आदमी बोलता है और दो से चिल्लाता है ॥ १ ॥

अथ वातिकस्वरभेदस्य लक्षणम् ।

वातिकमाह—

वातेन कृष्ण-नयना-ऽनन-मूत्र-वर्चा
भिन्नं शनैर्वदति गर्दभवत् खरं च ।

(सु० उ० अ० ५३ श्लो० ३)

म०—वातेनेत्यादि । कृष्णत्वं मूत्रादिषु स्वरभेदारम्भकदोषस्य सर्वाङ्गव्यापकत्वात्, अर्शोवत् । भिन्नं=भिन्नस्वरं, तदेवाह—गर्दभवत् खरमिति, खरं=निष्ठुरम्, उद्वेजकमिति यावत् ॥—

भा० टी०—वात से आँख, मुह, मूत्र और पुरीष काला होता है और आवाज (स्वर) गदहा की तरह कर्कश निकलती है ॥

अथ पैत्तिकस्वरभेदस्य लक्षणम् ।

पैत्तिकमाह—

पित्तेन पीत-नयना-ऽऽनन-मूत्र-वर्चा
ब्रूयाद्गलेन स च दाहसमन्वितेन ॥ २ ॥

(सु० उ० अ० ५३ श्लो० ४)

म०—पित्तेनेत्यादि । गलेनेति विशेष्योपदर्शनं, दाहसमन्वितेनेति विशेषणस्य विशेष्याधीनप्रतीतत्वात्, गलः सदाहो भवतीत्यर्थः ॥ ३ ॥

भा०टी०—पित्तजस्वर भेद में आंख आदि पीले हो जाते हैं और गला जलता है॥

अथ कफजस्वरभेदस्य लक्षणम् ।

श्लैष्मिकमाह—

ब्रूयात्कफेन सततं कफरुद्धकण्ठः
स्वल्पं शनैर्वदति चापि दिवा विशेषात् ।

(सु० उ० अ० ५३ श्लो० ५)

म०—ब्रूयादित्यादि । दिवा विशेषादिति दिने सूर्यरश्मिभिः कफस्य मार्दवभावाद्विशेषाद्विशिष्टं वदतीत्यर्थः । दिवा विशेषं इति पाठान्तरं न सम्यक् ॥

भा० टी०—कफ के स्वर भेद में हर समय गला कफ से भरा रहता है। आवाज थोड़ी और धीरे निकलती है। दिन में यह बात नहीं होती; क्योंकि सूर्य के घाम की गरमी से कफ कम रहता है।

### अथ सान्निपातिकस्वरभेदलक्षणम् ।

सान्निपातिकमाह—

सर्वात्मके भवति सर्वविकारसम्पत,
तं चाप्यसाध्यमृषयः स्वरभेदमाहुः ॥ ३ ॥

( सु० उ० अ० ५३ श्लो० ६ )

म०—सर्वात्मक इत्यादि । सर्वविकारसम्पदिति उक्तवातादिस्वरभेदलिङ्गयोगः । तं चाप्यसाध्यमिति । अपिशब्दो भिन्नक्रमे, असाध्यमपि; तेन "सर्वजे क्षयजे चापि प्रत्याख्यायाचरेत् क्रियाम्"–( सु. उ. तं. अ. ५३ ) इति सुश्रुतवचनमुपपन्नं भवतीति ॥ ३ ॥

भा० टी०—सन्निपात स्वर भेद में वातादि जनित तीनों स्वरभेद के लक्षण होते हैं। इस स्वरभेद को महर्षियों ने असाध्य कहा है ॥ ३ ॥

### अथ क्षयजस्वरभेदस्य लक्षणम् ।

क्षयजमाह—

धूप्येत वाक् क्षयकृते क्षयमाप्नुयाच्च
वाक्, एष चापि हतवाक् परिवर्जनीयः ।

( सु० उ० अ० ५३ श्लो० ७ )

भा० टी०—धातुक्षय जनित स्वर भेद में आवाज धुँएली निकलती है। बोला नहीं जाता। यह अच्छा नहीं होता; इससे चिकित्सा न करे ॥

म०—धूप्येतेत्यादि । धूप्येत वागिति सधूमेव निर्गच्छन्ती वदनयोऽनुभूयते । क्षयकृत इति धातुक्षयकृते स्वरभेदे। क्षयमाप्नुयाच्च वागिति पदच्छेदः । एष च यदा हतवाग्भवति ओजः क्षयाद्वचनाक्षमस्तदा न साध्यः, अन्यथा तु साध्यः, तेन प्रत्याख्याय क्रियाकरणमुपपन्नं भवति । एषु चापीति पाठे वातादिस्वरभेदेषु मध्ये हतवागसाध्यः, किन्त्वयं पाठष्टीकारैर्न व्याख्यातः ॥ ३ ॥

अथ मेदोजस्वरभेदस्य लक्षणम् ।

मेदोजलक्षणमाह—

अन्तर्गतस्वरमलक्ष्यपदं चिरेण
मेदोऽन्वयाद्वदति दिग्धगलस्तृपार्तः ॥ ४ ॥

( सु० उ० अ० ५३ श्लो० ८ )

म०—अन्तर्गतेत्यादि अन्तर्गतस्वरमिति क्रियाविशेषणम्, 'अन्तर्गतं स्वरम्' इति पाठे तु कण्ठस्यान्तर्गतं यथा भवति तथा स्वरं वचनं वदतीति योज्यम्, 'अन्तर्गलम्' इति पाठान्तरे गलस्यान्तरिति अन्तर्गलं स्वरं वदतीत्यर्थः । दिग्धगल इति श्लेष्मणा मेदसा वा लिप्तगल इत्यर्थः । तृपार्तश्च मेदोरुद्धस्रोतस्त्वात् ॥ ४ ॥

भा० टी०—मेदोज स्वर भेद में हर एक पद साफ नहीं मालूम होते, आवाज भीतर ही रह जाती है । देर में रुक २ कर आवाज निकलती है, कफ गला में भरा रहता है और प्यास लगती है ॥ ४ ॥

अथ स्वरभेदस्य असाध्यलक्षणानि ।

उक्तवातादिजानामेवावस्थायामसाध्यत्वमाह—

क्षीणस्य वृद्धस्य कृशस्य वाऽपि चिरोत्थितो यश्च सहोपजातः ।
मेदस्विनः सर्वसमुद्भवश्च स्वरामयो यो न स सिद्धिमेति ॥ ५ ॥

( सु० उ० अ० ५३ श्लो० ११ )

इति श्रीमाधवकरविरचिते माधवनिदाने स्वरभेदनिदानं समाप्तम् ॥

म०—क्षीणस्येत्यादि । सहोपजात इत्यन्तेन । क्षीणस्य=क्षीणमांसस्य । कृशस्य=अबलस्य । सहोपजातः=जन्मप्रभृतिबद्धः, 'काकस्वर' इति लोके । 'सहोपजात' इत्यत्र 'मदोपजात' इति पाठान्तरम्, मदो रोगविशेषः, मेदस्विनोऽनिस्रुतस्य मेदसाऽऽवृतस्रोतस्त्वेन यो जातः, अमेदस्विनस्तु मेदोदुष्ट्या यो जातः न साध्यः पूर्वमुक्त इति न विरोधः । सर्वसमुद्भवश्चावगाढः सम्पूर्णलिङ्गो वा असाध्यो द्रष्टव्य इति ॥ ५ ॥

इति श्रीविजयरक्षितकृतायां मधुकोशव्याख्यायां स्वरभेदनिदानं समाप्तम् ।

भा० टी०—क्षीणतावस्था में, बुढ़ापा में, कृशता में उत्पन्न तथा पुराना और जन्म से पैदा हुआ स्वर भेद असाध्य होता है । मोटे आदमी का और सन्निपात का स्वर भेद अच्छा नहीं होता ॥ ५ ॥

इति श्रीहरिनारायणशर्मवैद्यकृतायां निदानदीपिकानाम्न्यां
भाषाटीकायां स्वरभेदनिदानम् ।

## अथारोचकनिदानम् ।

( Anorexia Loss Of Taste ) एनोरेक्सिया, लॉस ऑफ टेस्ट

### अथारोचकरोगस्य निदानानि ।

ऊर्ध्वगविकारसाधर्म्यादरोचकमाह—

**वातादिभिः शोक-भयातिलोभ-क्रोधैर्मनोघ्नाशन-रूप-गन्धैः ।**
**अरोचकाः स्युः,**

( चं० चि० अ० २६ श्लो० २०१ )

म०—वातादिभिरित्यादि । एकैकशो वातादिभिस्त्रयः, सन्निपातेनैकः,शोकादिना[1] गन्धान्तेन आगन्तुरेक एव गणनीयः, यतः पञ्चानामेकं लक्षणं वक्ष्यति; सुश्रुते चोक्तम्—"भक्तोपघातमिह पञ्चविधं वदन्ति–" ( सु. उ. त. अ. ५७ ) इति । शोकादिजस्तु यद्यपि [2]वातादिजः, तथापि हेतुप्रत्यनीकचिकित्साकरणार्थं पृथगुक्तः । अतिलोभोऽत्राहितस्य सततोपयोगहेतुतया दोषप्रकोपक इति दर्शयति । अरोचकाः स्युरिति छेदः ॥—

भा० टी०—अरोचक के कारण—अरोचक पाँच प्रकार का होता है । वात से, पित्त से, कफ से, सन्निपात से और आगन्तुक-जैसे भय अतिलोभ, क्रोध, मन बिगाड़ने वाला भोजन, सूरत और गन्ध, आवाज ( कय या खखार आदि ) का स्पर्श-घिनावन चीज छू जाना ।

### अथ वातिकारोचकलक्षणम् ।

वातिकलक्षणमाह—

**परिहृष्टदन्तः कषायवक्त्रश्च मतोऽनिलेन ॥ १ ॥**

( च० चि० अ० २६ श्लो० २०१ )

म०—परीत्यादि परिहृष्टदन्त इति अम्लभक्षणेनेव ॥ १ ॥

भा०टी०—वात के अरोचक में मुंह कसैला और दाँत खट्टा (कोट) रहता है ॥ १ ॥

### अथ पैत्तिकारोचकलक्षणम् ।

पैत्तिकलक्षणमाह—

**कट्वम्लमुष्णं विरसं च पूति पित्तेन विद्यात्,**

( च० चि० अ० २० श्लो० ३२–३४ )

---

१–'शोकादीनामागन्तुत्वेन' इति पाठान्तरम् । २–'वातज.' इति पाठान्तरम् ।

म०—कटूवित्यादि । कटुशब्दोऽत्र तिक्तवाची । यदाह विदेहः—"पित्तेन तिक्ताऽऽस्य-विदाह-कृत् स्यात् स्वाद्वास्य-हृल्लास-करः कफेन"—इति ।—

भा०टी०—पित्त से मुह कड़वा, गरम, फीका और बदबूदार रहता है। फीका वात से होता है, पित्त से नहीं हो सकता, किन्तु इस रोग का ऐसा स्वभाव है कि इस में पित्त से फीका रहता है।

## अथ श्लैष्मिकारोचकलक्षणम् ।

श्लैष्मिकलक्षणमाह—

लवणं च वक्त्रम् ।
माधुर्य-पैच्छिल्य-गुरुत्व-शैत्य-विबद्ध-सम्बद्ध-युतं कफेन ॥२॥
( च० चि० अ० २६ श्लो० २०७ )

म०—लवणमित्यादि । लवणं वक्त्रमिति विदग्धस्य श्लेष्मणो लवणत्वात् । उक्तं हि सुश्रुते—"श्लेष्मा विदग्धो लवणः स्मृतः, पित्तं विदग्धमम्लम्"—( सु. सू. स्था. अ. ४० ) इति । विबद्ध-सम्बद्धयुतमिति विबद्धं च तत् सम्बद्धयुतं चेति विबद्धसंबद्धयुतम् । अत्र विबद्धं=बद्धमिव, भक्षणाद्यसामर्थ्यात्, संबद्धयुतं 'कफेन' इति शेषः, भावे क्तः, कफलिप्तमित्यर्थः । 'विदग्धसंबद्धयुतम्' इति पाठान्तरं सुगमम् । 'विबद्धसन्नद्धयुतम्, इति पाठे विबद्धः सन्नद्धः स च प्रकृतत्वात् कफस्य, सन्नद्धो बद्धः 'णह' बन्धने इत्यस्माद्धातोः पूर्ववत् क्तादि । 'विबद्ध-संस्तम्भयुतम्' इति काश्मीराः ॥ २ ॥

भा०टी०—कफ के अरोचक में-मुह लवाबदार, मीठा, नमकीन, और कफ से लीपा रहता है और खाया नहीं जाता, शरीर में भारीपन मालूम होता है और ठण्ड लगती है ॥ २ ॥

## अथागन्तुजारोचकस्य लक्षणम् ।

आगन्तुजमाह—

अरोचके शोकभयातिलोभक्रोधाद्यहृद्याशुचिगन्धजे स्यात् ।
स्वाभाविकं चास्यमथारुचिश्च,
( च० चि० अ० २६ श्लो० २०१ )

म०—अरोचक इत्यादि । अहृद्यगन्धो=घ्राणोद्वेजको गन्धः । स्वाभाविकं चास्यमिति अविकृतमुखरसत्वं, न तु वातादिवत् कषायत्वादि ॥—

भा०टी०—शोक, भय, अतिलोभ, क्रोध, नाक को बुरा लगने वाला गन्ध, इत्यादि

जूठा और सड़ा, कीड़ा पड़े भोजन से जो आगन्तुक अरोचक होता है, उसमें अरुचि मात्र होती है, मुह का जायका नहीं बिगड़ता ।

अथ सान्निपातिकारोचकलक्षणम् ।

त्रिदोषजमाह—

त्रिदोषजे नैकरसं भवेत्तु ॥ ३ ॥

( च० चि० अ० २६ श्लो० २०३ )

म०—त्रिदोषज इत्यादि । त्रिदोषजे नैकरसमिति वातजाद्युक्तकषायाद्यनेकरसम् ॥ ३ ॥

भा०टी०—त्रिदोषज अरोचक में मुह का स्वाद एकसा नहीं रहता, वात आदि तीनों दोषों का स्वाद रहता है, कसैला, फीका, खट्टा, कड़वा और नमकीन ॥ ३ ॥

अथारोचकस्य लक्षणान्तराणि ।

वातजादिभेदेन मुखविकृतिमभिधायान्यदेशविकृतिमाह—

हृच्छूल–पीडन–युतं पवनेन, पित्ता-
त्तृड्–दाह–चोष–बहुलं, सकफप्रसेकम् ।
श्लेष्मात्मकं, बहुरुजं बहुभिश्च विद्या-
द्वैगुण्य–मोह–जडताभिरथापरं च ॥ ४ ॥

इति श्रीमाधवकरविरचिते माधवनिदानेऽरोचकनिदानं समाप्तम् ।

म०—हृच्छूलेत्यादि । हृदि शूलेन पीडनं हृच्छूलपीडनम् । चोषश्चूषणवत् पीडा । बहुभिरिति त्रिदोषैः । वैगुण्य-मोह-जडताभिरथापरमिति उपलक्षणे तृतीया । वैगुण्यं=मनसो व्याकुलत्वम् । अपरमिति दोषजादन्यमागन्तुजमित्यर्थः । सत्यामपि बुभुक्षायामभ्यवहारासामर्थ्यमरुचिः, अभिलषितमप्यन्नं दीयमानं नाभ्यवहरतीत्यनानाभिनन्दनम्, अन्नस्य श्रवण-स्मरण-दर्शन-गन्ध-स्पर्शनैर्यत्रोद्विजते स भक्तद्वेषः । एवं त्रिविधोऽपि रोगश्चरकसुश्रुताभ्यामरोचकशब्देन संगृहीतः । उक्तं हि वृद्धभोजेन—"प्रक्षिप्तं तु मुखे चान्नं जन्तोर्न स्वदते मुहुः । अरोचकः स विज्ञेयो, भक्तद्वेषमतः शृणु ॥ चिन्तयित्वा तु मनसा दृष्ट्वा श्रुत्वाऽपि भोजनम् । द्वेषमायाति यो जन्तुर्भक्तद्वेषः स उच्यते ॥ यस्य नान्ने भवेच्छ्रद्धा सोऽभक्तच्छन्द उच्यते। कुपितस्य भयार्तस्य यश्च भक्तनिरोधजः"—इति ॥ ४ ॥

इति श्रीविजयरक्षितकृतायां मधुकोशव्याख्यायामरोचकनिदानं समाप्तम् ।

भा०टी०—वातादि जनित अरोचक के अन्य लक्षण—वात के अरोचक में हृदय में शूल, पित्तजमें प्यास,जलन,चूसने ऐसी पीड़ा, कफज में कफ निकलताहै। सन्निपात में ये सब लक्षण-होते हैं। आगन्तुज में मन व्याकुल रहता है। मोह और जड़ता रहती है ॥ ४ ॥

इति श्री हरिनारायणशर्मवैद्यकृतायां निदानदीपिकायां दशविनिश्चय; भाषाटीकायामरोचक निदानम् ।

## अथ छर्दिनिदानम्-( Vomiting ) वामिदिक्

### अथ छर्दिरोगस्य सनिर्वचनं निदानम् ।

छर्द्यामप्यरुचेर्भावात् तथाऽरोचकवत् पञ्चविधत्वादरोचकानन्तरं छर्दिस्तस्या निदानं निरुक्तिं चाह—

दुष्टैर्दोषैः पृथक् सर्वैर्बीभत्साऽऽलोचनादिभिः ।
छर्दयः पञ्च विज्ञेयास्तासां लक्षणमुच्यते ॥ १ ॥
अतिद्रवैरतिस्निग्धैरहृद्यैर्लवणैरति ।
अकाले चातिमात्रैश्च तथाऽसात्म्यैश्च भोजनैः ॥ २ ॥
श्रमाद्भयात्तथोद्वेगादजीर्णात् क्रिमिदोषतः ।
नार्याश्चापन्नसत्त्वायास्तथाऽतिद्रुतमश्नतः ॥ ३ ॥
बीभत्सैर्हेतुभिश्चान्यैर्द्रुतमुत्क्लेशितो बलात् ।
छादयन्नाननं वेगैरर्दयन्नङ्गभञ्जनैः ।
निरुच्यते छर्दिरिति दोषो वक्त्रं प्रधावितः ॥ ४ ॥

(सु० उ० अ० ४९ श्लो० १-४)

म०—दुष्टैरित्यादि । बीभत्सालोचनं=विकृतिदर्शनम् । आदिशब्देनानिष्टगन्धभक्षणादीनां ग्रहणम् । नार्याश्चापन्नसत्त्वाया इति गर्भिण्याः, तस्या गर्भोन्नी-

१—उत्क्लेशितः कोपितः ।

इनेन वातवैगुण्याच्छर्दिः । छादयन्नाननमिति वेगैर्मुखं छादयन्=पूरयन्, अर्दयन्=पीडयन्, अंगभञ्जनैः=अंगभेदैः । छादयति मुखम्, अर्दयति चाङ्गानीति छर्दिः 'छद् अपवारणे' 'अर्द हिंसायाम्' अनयोः पृषोदरादित्वेन रूपसिद्धिः ॥ १-४ ॥

भा० टी०—छर्दिरोग का निदान और शब्दार्थ-छर्दिरोग पाँच प्रकार का होता है-वातज, पित्तज, कफज, सन्निपातज, और घिनावन चीजों के देखने आदि से। अब इनके लक्षण कहे जाते हैं—कारण—अतितरल-बहनशील अति स्निग्ध-तेल घी पड़ा हुआ पदार्थ, मन बिगाड़ने वाला, अतिलवण, विना भूख के खाना, अति भोजन, अहित भोजन, अधिक परिश्रम, घबड़ाहट, अजीर्ण, पेट में कीड़े होना, गर्भ रहने पर, जल्दी २ भोजन करना, और भी घृणा पैदा करने वाले कारणों से जल्दी दोष उभड़ कर बड़े वेग से मुह को भरता हुआ और शरीर में पीड़ा करता हुआ मुह की तरफ से बाहर आता है-कय होती है। इसे ही छर्दि, वमन या वमि ( कय ) कहते हैं ॥ १-४ ॥

### अथ छर्देः पूर्वरूपाणि ।

पूर्वरूपमाह—

हृल्लासोद्गाररोधौ च प्रसेको लवणस्तनुः ।
द्वेषोऽन्नपाने च भृशं वमीनां पूर्वलक्षणम् ॥ ५ ॥

( सु० उ० अ० ४९ श्लो० ५ )

म०—हृल्लासेत्यादि । उद्गाररोधः=उद्गाराप्रवृत्तिः । प्रसेको=मुखप्रसेकः; तस्य लवणत्वं प्रभावात्, आमाशयोत्क्लेशभवत्वेन कफविदाहाद्वा; तनुरघनोऽल्पो वा ॥ ५ ॥

भा० टी०—छर्दि के पूर्वरूप-जी मचलाये, डकार न आवे, मुँह में थोड़ा २ पतला नमकीन पानी भर आवे, खाने पीने में अरुचि रहे ॥ ५ ॥

### अथ वातिकच्छर्देर्लक्षणानि ।

वातजाया लक्षणमाह—

हृत्-पार्श्व-पीडा-मुखशोष-शीर्ष-नाभ्यर्ति-कास-स्वरभेद-तोदैः ।
उद्गार-शब्द-प्रबलं सफेनं विच्छिन्नकृष्णं तनुकं कषायम् ।
कृच्छ्रेण चाल्पं महता च वेगेनार्तोऽनिलाच्छर्दयतीह दुःखम् ॥६॥

( च० चि० अ० २३ श्लो० ६-७ )

म०—हृत्पार्श्वेत्यादि । शीर्ष-नाभ्यर्त्तिः=मस्तके नाभौ च शूलं, तेनार्त्तिमान् अन्तरं 'युक्त' इति शेषः, उपलक्षणे वा तृतीया । अनेन नरश्छर्दयतीति शेषम् । किंभूतं छर्दयतीत्याह—उद्गारेत्यादि । उद्गार-शब्दाभ्यां सशब्दमुद्गारशब्दप्रबलम् । विच्छिन्नं=सान्तरवेगमल्पद्रवं वा, वातस्य स्वतो द्रवत्वाभावात् । तनु=अघनम् । कषायं=कषायरसं, कषायस्य वातकृतत्वात् ॥ ६ ॥

भा० टी०—वातज छर्दि के लक्षण-हृदय, पसवाड़ा, शिर और नाभि में पीड़ा हो, मुह सूखे, खांसी आवे, स्वर भेद हो, कौंच हो, डकार आवे, कय काला रंग या, कसैला, पतला, फेनदार, ठहर २ कर होता है। कय होते समय आवाज और बड़ी तकलीफ होती है, कय साफ नहीं होती और थोड़ी होती है ॥ ६ ॥

अथ पैत्तिकछर्देर्लक्षणानि ।

पित्तजमाह—

मूर्च्छा-पिपासा-मुखशोष-मूर्ध-ताल्वक्षि-सन्ताप-तमो-भ्रमा-ऽऽर्त्तः ।
पीतं भृशोष्णं हरितं सतिक्तं धूम्रं च पित्तेन वमेत्सदाहम् ॥ ७ ॥

( च० चि० अ० २० श्लो० ९ )

म०-मूर्च्छेत्यादि । तमोऽन्धकारदर्शनमिव । धूम्रं=कृष्णलोहितवर्णम् ॥७॥

भा० टी०—पैत्तिकछर्दि के लक्षण-मूर्च्छा, प्यास हो, मुह सूखे, शिर, तालु, और आँखों में जलन हो, आँख के सामने अँधेरा हो जाय; चक्कर आवे, कय का रंग पीला हरा या धुवाँ का रंग हो, गरम हो, कडुवा हो, गला जले ॥ ७ ॥

अथ कफजछर्देर्लक्षणानि ।

कफजामाह—

तन्द्रा-ऽऽस्यमाधुर्य-कफप्रसेक-सन्तोष-निद्रा-ऽरुचि-गौरवाऽऽर्त्तः ।
स्निग्धं घनं स्वादु कफाद्विशुद्धं सरोमहर्षोऽल्परुजं वमेत्तु ॥ ८ ॥

( च० चि० अ० २० श्लो० ११ )

म०—तन्द्रेत्यादि । आस्यमाधुर्यं मुखस्य मधुररसत्वम् । सन्तोष इति सन्तोष इव सन्तोषः, अन्नानभिलाष इत्यर्थः, तृप्तो हि नान्नमभिलषति । अरुचि-रभ्यवहारासामर्थ्यम् । स्वादु=मधुरम् । विशुद्धमनतिशुभ्रं; सुश्रुते-'शुक्लं हिमं सान्द्रकफं कफेन' ( सु. उ. त. अ. ४९ ) इति पाठात् ॥ ८ ॥

भा० टी०—कफजछर्दि के लक्षण—तन्द्रा हो, मुँह मीठा हो, कफ निकले, भोजन न करने पर भोजन किया हुआ मालूम हो, नींद अधिक आवे, अरुचि रहे, शरीर में भारीपन रहे, कय चिकना-गाढ़ा-मीठा-साफ और कफ युक्त हो। कय होते समय रोयें खड़े हो जाँय। पीड़ा कम हो ॥ ८ ॥

## अथ सन्निपातिकछर्देर्लक्षणानि ।

त्रिदोषजामाह—

शूला-ऽविपाका-ऽरुचि—दाह-तृष्णा—श्वास—प्रमोह-प्रबला प्रसक्तम् ।
छर्दिस्त्रिदोषाल्लवणा—ऽम्ल—नील-सान्द्रोष्ण-रक्तं वमतां नृणांस्यात् ९

( च० चि० अ० २३ श्लो० १३ )

म०—शूलेत्यादि । शूलादिभिः प्रमोहान्तैः प्रबला शूलादिप्रबला । प्रसक्तं=निरन्तरम् । त्रिदोषादित्यत्र 'त्रिदोषा' इति पाठान्तरे त्रिदोषजेत्यर्थः ॥ ९ ॥

भा० टी०—सन्निपातिकछर्दि का लक्षण- शूल हो, अन्न हज़म न हो, अरुचि रहे, दाह, तृष्णा, श्वास, मूर्च्छा अधिक हो, कय नमकीन, खट्टा रंग में नीला, लाल, गरम और गाढ़ा हो ॥ ९ ॥

## अथ छर्देरसाध्यलक्षणानि ।

असाध्यमाह—

विट्-स्वेद-मूत्रा-ऽम्बु-वहानि वायुः स्रोतांसि संरुध्य यदोर्ध्वमेति ।
उत्सन्नदोषस्य समाचितं तं दोषं समुद्धूय नरस्य कोष्ठात् ॥ १० ॥
विण्-मूत्रयोस्तत्सम-गन्ध-वर्णं तृट्—श्वास हिक्कार्ति-युतं प्रसक्तम् ।
प्रच्छर्दयेद्दुष्टमिहातिवेगात्तयाऽर्दितश्चाशु विनाशमेति ॥ ११ ॥

( च० चि० अ० २३ श्लो० १४, १५ )

म०—विडित्यादि । उत्सन्नदोषस्य=उद्गतदोषस्य दोषमिति पित्तं कफं वा, स्वेदादिकान् वा तद्दुष्टान् धातुमलान् । तदिति यस्माद्विडादिवाहिस्रोतोदुष्टिस्ततो हेतोर्विण्मूत्रयोः सम-गन्ध-वर्णं छर्दयतीति योज्यम् । इयं तु छर्दिविकृतिविषम-समवायारब्धा त्रिदोषजेति केचित् । अन्ये त्वाहुः—सर्वा एव छर्दयः प्रबला एवंविधाः सत्योऽसाध्याः स्युरिति ॥ १० ॥ ११ ॥

१ प्रच्छर्दयेद् वामयेद् ।

भा० टी०— वायु दोषों के उभड़े रहने पर पुरीष, स्वेद-पसीना, मूत्र, जलवाही स्रोतों को रोक कर इकट्ठे हुए पित्त, कफ, पसीना धातु और मलों को ऊपर लाकर पाखाना पेशाब के रंग का और बदबूदार बड़े वेग से छर्दि पैदा करता है। तृष्णा, हिचकी, श्वास होता है। हर वक्त कय हुआ करती है, उस कय से मनुष्य शीघ्र प्राण छोड़ देता है॥ १०-११॥

अथागन्तुछर्देर्लक्षणानि।

आगन्तुजामाह—

**वीभत्सजा दौर्हृदजामजा च असात्म्यजा च क्रिमिजा च या हि।**
**सा पञ्चमी ता च विभावयेच्च दोषोच्छ्रयेणैव यथोक्तमादौ॥१२॥**

(सु० उ० अ० ४९ श्लो० १०)

म०—वीभत्सजेत्यादि। दौर्हृदजा=दौर्हृदालाभजा, आमजा=अजीर्णजा, असात्म्यजा=असात्म्यभक्षणादिसंभूता, क्रिमिजा=कोष्ठक्रिमिसंभवा; वीभत्सजेत्यादिना क्रिमिजान्तेनैकत्वेनैव गणनीया, आगन्तुजत्वसामान्यात्। सापञ्चमीति त्रिदोषजापेक्षया सामान्येनागन्तुजैव, आगन्तुज्वरवत्; यदि तु वीभत्सजापेक्षया क्रिमिजा पञ्चमीति गण्यते, तदा तां च विभावयेत्[२]। दोषोच्छ्रयेणैवेत्यनेन क्रिमिजाया एव दोषसम्बन्धः स्यात्, ततश्च वीभत्सजादीनां चिकित्सोपयोगी दोषसम्बन्धो न लभ्यते। अन्ये तु तद्दोषपरिहारार्थं 'सा पञ्चमी ताश्च' इति बहुवचनान्तं पठन्ति, एवं सति अन्तर्गणनाया न प्रयोजनमिति अन्तर्गणनां नाद्रियन्ते। कथमत्र दोषोच्छ्रयो विभावनीयः? इत्याह— यथोक्तमादाविति। आदौ=वातादिलक्षणे इत्यर्थः॥ १२॥

भा० टी०—आगन्तुज छर्दि के लक्षण-वीभत्सजा=पीप, गुद, मूत्र, आदि के देखने बदबू के सूँघने, अपवित्र वस्तु के स्पर्श आदि से उत्पन्न। दौहृदजा=गर्भ रहने पर स्त्रियों का,जो खाने पीने देखने सुनने का मन चले, उसके न प्राप्त होने से असात्म्यजा अहित भोजन से उत्पन्न और क्रिमिजा=पेट में कीड़ों के रहने से उत्पन्न। ये पांचो आगन्तुक छर्दि हैं,इन्हें पहले कहे हुए वात आदि की छर्दि के लक्षणों से जानें॥ १२॥

अथ क्रिमिजछर्देर्लक्षणानि।

क्रिमिजाया लक्षणमाह—

**शूल-हृल्लास-बहुला क्रिमिजा च विशेषतः।**
**क्रिमिहृद्रोगतुल्येन लक्षणेन च लक्षिता॥ १३॥** (सु० उ० अ० ४९ ...)

---

१ दोषोच्छ्रयेण दोषवृद्ध्या। २—विभावयेद् जानीयात्।

म०—शूलेत्यादि । क्रिमिहृद्रोगतुल्येन लक्षणेन लक्षितेति क्रिमिहृद्रोगे क्रिमिलक्षणात् यत् पीडादिकं तदस्यां भवतीत्यर्थः ॥ १३ ॥

भा० टी०—क्रिमिजा छर्दि के लक्षण—क्रिमिज छर्दि में यह विशेषता है कि शूल हो, जी मचलाय, और क्रिमि से उत्पन्न हृद्रोग के लक्षण होते हैं ॥ १३ ॥

अथ छर्देः साध्यासाध्यविवेकः ।

असाध्यलक्षणमाह—

**क्षीणस्य या छर्दिरतिप्रसक्ता सोपद्रवा शोणित-पूय-युक्ता ।**
**सचन्द्रिकां तां प्रवदेदसाध्यां साध्यां चिकित्सेन्निरुपद्रवां च ॥१४॥**

( च० चि० अ० २३ श्लो० १७ )

इति श्रीमाधवकरविरचिते माधवनिदाने छर्दिनिदानं समाप्तम् ॥

म०—क्षीणस्येत्यादि । सचन्द्रिकामिति मेदः प्रभृतिधातूनां स्नेहः प्रवर्तमानो मयूरपिच्छचन्द्रिकावत् प्रतिभाति । निरुपद्रवामिति कासाद्युपद्रवरहिताम् । तदुक्तम्—"कासः श्वासो ज्वरो हिक्का तृष्णा वैचित्त्यमेव च । हृद्रोगस्तमकश्चैव ज्ञेयाश्छर्देरुपद्रवाः"—इति ॥ १४ ॥

इति श्रीविजयरक्षितकृतायां मधुकोशव्याख्यायां छर्दिनिदानं समाप्तम् ॥

भा० टी०—छर्दि का साध्यासाध्य—क्षीणता में उत्पन्न, बराबर होनेवाली-बीच में रुके नहीं, उपद्रवयुक्त, जिसमें खून और पीप गिरे, मेद आदि धातुओं की चिकनाई मिली रहने से कय में मोर की पंख की तरह चमक नज़र आये, तो छर्दि असाध्य और यदि कोई उपद्रव न हो तो साध्य समझ कर वैद्य उसकी चिकित्सा करे ॥ १४ ॥

अथ छर्दिरोगस्योपद्रवाः ।

तस्या उपद्रवमाह—

**( कासः श्वासो ज्वरो हिक्का तृष्णा वैचित्त्यमेव च ।**
**हृद्रोगस्तमकश्चैव ज्ञेयाश्छर्देरुपद्रवाः ॥ १५ ॥)**

भा० टी०—छर्दि के उपद्रव-खांसी, श्वास, ज्वर, हिचकी, प्यास, बेसुधी होना, हृद्रोग, आँख के सामने अँधेरा होना ( ॥ १५ ॥ )

इति श्रीहरिनारायणशर्मवैद्यकृतायां निदानदीपिकायां रुग्विनिश्चय भाषाटीकायां छर्दिरोग निदानम्

## Thirst (थर्स्ट)

### अथ तृष्णारोगस्य सम्प्राप्तिः ।

छर्देस्तृष्णोपद्रवत्वाच्छर्द्यनन्तरं तृष्णानिदानं, तस्याः सम्प्राप्तिमाह—

**भय-श्रमाभ्यां बलसंक्षयाद्वा ऊर्ध्वं चितं पित्तविवर्धनैश्च ।**
**पित्तं सवातं कुपितं नराणां तालुप्रपन्नं जनयेत्पिपासाम् ॥**

म०—भयेत्यादि । पित्तविवर्धनैरिति कट्वम्लोष्णादिभिः क्रोधोपवासादिभिश्च स्थान एव सञ्चितं=कुपितं च पित्तं, वातश्च भय-श्रम-बल-क्षयैः कुपितः, ऊर्ध्वं प्रसरन् पिपासां जनयति । तालिवत्युपलक्षणम्, तेन क्लोमाद्यपि बोध्यम्, तस्य पिपासास्थानत्वेनोक्तत्वात् । चरकेऽप्युक्तम्—"रसवाहिनीश्च धमनीर्जिह्वामूल-गल-तालुक-क्लोम्नः । संशोष्य नृणां देहे कुरुतस्तृषामतिबलौ तौ तु" ( च. नि. स्था. अ. २२ )—इति ॥—

### अथान्नकफा-ऽऽमजानां सम्प्राप्तिः ।

अन्न-कफा-ऽऽमजानां संप्राप्तिमाह—

**स्रोतस्स्वपांवाहिषु दूषितेषु दोषैश्च तृट् संभवतीह जन्तोः ॥ १ ॥**

म०—स्रोतःस्वित्यादि । ननु, अपांवाहिष्विति बहुवचनं विरुद्धम्, 'द्वे उदकवहे' ( सु. शा. स्था. अ. ९ )—इति सुश्रुतेनोक्तत्वात् । नैवम्, तयोरेव प्रतानयोगादिति । दोषैरिति अन्न-कफा-ऽऽमैः, दुष्टिकर्तृत्वात् दुष्टदोषसंबन्धाद्वाऽन्ना-ऽऽमयोरपि दोषत्वमिति गदाधरः ॥ १ ॥

भा०टी०—तृष्णा(प्यास) रोग की सम्प्राप्ति—पित्त बढ़ानेवाले-कटु, अम्ल, उष्ण, क्रोध, उपवास आदि से अपने स्थान ( हृदय ) में इकट्ठा और कुपित हुआ पित्त, तथा भय, श्रम और नाताकती से कुपित वात, तालु, क्लोम, जिह्वामूल, और कण्ठ में जाकर मनुष्यों को प्यास का रोग पैदा करता है ॥ १ ॥

### अथासां भेदाः ।

**तिस्रः स्मृतास्ताः क्षतजा चतुर्थी क्षयात्तथा ह्यामसमुद्भवा च ।**
**भक्तोद्भवा सप्तमिकेति तासां निबोध लिङ्गान्यनुपूर्वशस्तु ॥ २ ॥**

म०—तिस्र इति वातादिभिः प्रत्येकम् । क्षतजेति क्षतनिमित्ता व्रणिनां या भवति । चतुर्थीत्यनेनोक्तानां चतसृणां सुखसाध्यत्वं वोधयति, अन्यासां तु कष्टसाध्यत्वम् ॥ २ ॥

भा० टी०—श्रम, कफ, आमदोष से जल वाहिनी नलियों के विगड़ जाने से प्यास होती है । तृष्णा के भेद-तृष्णा सात प्रकार की होती है । १ वात की, २ पित्त की, ३ कफ की, ४ क्षत चोट व्रण आदि से, ५ धातुक्षय से, ६ आम से, ७ भोजन से । इनमें पहली तीन सुखसाध्य और वाकी ४ कष्टसाध्य होती हैं ॥ २ ॥

( ताल्वोष्ठ-कण्ठा-ऽऽस्य-विशोष-दाह-सन्ताप-मोह-भ्रम-विप्रलापाः ।
पूर्वाणि रूपाणि भवन्ति तासामुत्पत्तिकाले तु विशेषतो हि ॥ )

( सु० उ० अ० ४८ श्लोक ५ )

भा० टी०—तृष्णा के उत्पत्ति काल में विशेषतः ये लक्षण होते हैं—( पूर्वरूप ) तालु-ओष्ठ, कण्ठ, मुह सूखे, दाह अन्दर, वाहर शरीर गरम हो, मूर्च्छा भ्रम, प्रलाप ॥

( सु० उ० अ० ४८श्लो० ३ )

## अथ वातिकतृषाया लक्षणानि ।

वातजामाह—

क्षामास्यता मारुतसंभवायां तोदस्तथा शङ्ख-शिरःसु चापि ।
स्रोतोनिरोधो विरसं च वक्त्रं शीताभिरद्भिश्च विवृद्धिमेति ॥ ३ ॥

( सु० उ० अ० ४८ श्लो० ४ )

म०—क्षामास्यतेत्यादि । क्षामास्यता=शुष्कदीनमुखत्वम् । स्रोतोनिरोध इति रसाम्बुवाहिधमनीनिरोधः । शीताभिरद्भिरित्यनेन वायोः शीतस्य शीताम्बुना वृद्धिरित्यनुपशयनिदर्शनम् । चकराच्चरकोक्तनिद्रानाशस्य ग्रहणम् । यदाह चरकः-"निद्रानाशः शिरसो भ्रमस्तथा शुष्क-गल-तालुः" [ च. चि. स्था. अ. २२ ]-इति ॥ ३ ॥

भा० टी०—वातज तृष्णा के लक्षण-मुँह ( चेहरा ) सूख जाय और उतर जाय, कनपटी और शिर में सूई कोंचने जैसी पीड़ा हो, गला वन्द हो जाय, मुँह फीका हो, और वात के ठण्डा होने को वजह से ठण्डे पानी से प्यास वढ़े ॥ ३ ॥

## अथ पैत्तिकतृष्णाया लक्षणानि ।

पित्तजामाह—

मूर्च्छा-ऽन्नविद्वेषविलाप-दाहा रक्तेक्षणत्वं प्रततश्च शोषः ।
शीताभिनन्दा मुखतिक्तता च पित्तात्मिकायां परिदूयनं च ॥४॥

( सु० उ० अ० ४८ श्लो० ७ )

म०—मूर्च्छेत्यादिना । विलापोऽत्र प्रलापः । प्रननस्य शोषोऽनीव पर्नी तृष्णा । शीताभिनन्दा=शीतेच्छा, 'गुरोश्च हलः'—इत्यकारप्रत्ययः । परिदृग्न-मुपतापः, परिधूपनम्' इति पाठोऽन्तः क्षोभणम्, धूमानिर्गम इव वा । चकारात् पीत-विण्-मूत्र-नेत्र-त्वादयो ग्राह्याः ॥ ४ ॥

भा० टी०—पित्तज तृष्णा के लक्षण-मूर्च्छा, अन्न में अरुचि, प्रलाप, दाह, आंखों का लाल होना, कितना ही पानी पीया जाय मगर मुंह गला सूखता ही रहे, ठण्डी चीजों की इच्छा होना, मुंह तीता रहे, गरमी मालूम हो ॥ ४ ॥

## अथ श्लैष्मिकतृष्णाया लक्षणानि ।

श्लेष्मजामाह—

वाष्पावरोधात्कफसंवृतेऽग्नौ तृष्णा बलासेन भवेत्तथा तु ।
निद्रा गुरुत्वं मधुरास्यता च तृष्णार्दितः शुष्यति चातिमात्रम् ॥५॥

( सु० उ० अ० ४८ श्लो० ८ )

म०—वाष्पेत्यादि । स्वकारणकुपितेन कफेनोपरिष्टादाच्छादितेऽन्तरग्नौ कफावरुद्धवाष्पेण पावकोष्मणाऽधोगतेनाम्बुवहस्रोतःशोषणात् कफजा तृष्णा भवति । ननु कफजा तृष्णाऽनुपपन्ना ? कफस्य वृद्धस्य केवलद्रवस्य पिपासाकर्तृत्वायोगात्, वातपित्तयोरेव तृष्णाकर्तृत्वेनोक्तत्वात् । यदुक्तम्—"पित्तं सवातं कुपितं नराणाम्"—इत्यादि । चरकेऽप्युक्तम्—"नाग्नेर्विना तर्षः पवनाद्वा, तौ हि शोषणे हेतू"—( च. चि. स्था. अ. २२ ) इति । सुश्रुतेऽप्युक्तम्—"सन्रस्याग्नेय-वायव्य-गुणावम्बुवहानि तु । स्रोतांसि शोषयेतां ततस्तृष्णा प्रजायते" ( सु. उ त. अ. ४७ )—इति । अत आह—तथेति=उक्तप्रकारेण कफादग्नेर्वाष्पावरोधादिना, न तु स्वगुणेन; अत एव चरके कफजा तृष्णा न पठितैव, सुश्रुतेन तु चिकित्साभेदार्थं पठिता; हारीतेनापि सपित्तेनैव श्लेष्मणा तृष्णा पठिता न तु केवलेन । यदाह—"स्वाद्वम्ललवणाजीर्णैः क्रुद्धः श्लेष्मा सहोष्मणा । प्रपद्याम्बुवहं स्रोतस्तृष्णां संजनयेन्नृणाम् ॥ शिरसो गौरवं तन्द्रा माधुर्यं वदनस्य च । भक्तद्वेषः प्रसेकश्च निद्राधिक्यं तथैव च । एतैर्लिङ्गैर्विजानीयात्तृष्णां कफसमुद्भवाम्"—इति ॥ ५ ॥

भा० टी०—अपने कारणों से कुपित कफ उदराग्नि को ऊपर से घेर लेता है, पर अग्नि का वह भाफ़ नीचे की तरफ फैलकर जलवाही सोतों को सुखाकर तृष्णा पैदा कर देता है । इस प्रकार से कफ से तृष्णा पैदा होती है । इसमें नींद अधिक लगती है, और

में भारीपन रहता है, मुह मीठा रहता है। प्यास खूब लगती है। और रोगी का शरीर सूखता है ॥ ५ ॥

### अथ क्षतजन्यतृष्णाया लक्षणम् ।

क्षतजामाह-

**क्षतस्य रुक्-शोणितनिर्गमाभ्यां तृष्णा चतुर्थी क्षतजा मता तु ।**

( सु० उ० अ० ४८ श्लो० ६ )

म०-क्षतस्येत्यादि । —शस्त्रादिक्षतयुक्तस्य ॥-

भा० टी०—क्षतज तृष्णा के लक्षण-पेड़ वगैरह से गिरने, हथियार और किसी कारण से चोट लगने से और फूट जाने से पीड़ा होती है और खून निकलता है, इससे भी तृष्णा होती है ॥

### अथ क्षयजतृष्णायोलक्षणानि ।

क्षयशब्दस्यानेकविषयत्वात् क्षयजां विशेषयन्नाह-

**रसक्षयाद्या क्षयसंभवा सा तयाऽभिभूतश्च निशादिनेषु ॥ ६ ॥**
**पेपीयतेऽम्भः स सुखं न याति तां सन्निपातादिति केचिदाहुः ।**
**रसक्षयोक्तानि च लक्षणानि तस्यामशेषेणभिषग् व्यवस्येत् ॥७॥**

( सु० उ० अ० ४८ श्लो० १० )

म०—रसक्षयादित्यादि । पेपीयते=पुनः पुनः पिवतिः एतच्च विशेषपरम्, सर्वतृष्णासु तथाभूतत्वात् । यदाह सुश्रुतः—"सततं यः पिवेद्वारि न तृप्तिमधिगच्छति । पुनः काङ्क्षति तोयं च तं तृष्णार्दितमादिशेत्"–( सु. उ त. अ. ४८ ) इति । रसक्षयोक्तानि च लक्षणानि सुश्रुतोक्तानि । तद्यथा,—"रसक्षये हृत्पीडा कम्पः शोषः शून्यता तृष्णा च"—)सु. सू. स्था. अ. १५ ) इति । तस्यां=क्षयजायाम्, अशेपेण=कात्स्न्येंन ॥ ६–७ ॥

भा० टी०—क्षयज तृष्णा के लक्षण-रस धातु के क्षीण हो जाने से क्षयज तृष्णा होती है। इसमें रोगी रात दिन वार २ दम पर दम पानी पीता रहता है परन्तु प्यास जरा भी बंद नहीं होती। इसमें रसक्षय के ( हृदय में पीड़ा, कम्प, मुह सूखना, हृदय खाली मालूम होना,शरीर सूखना,प्यास लगना)ये सब लक्षण होते हैं। कोई इसे सन्निपात की तृष्णा बतलाते हैं ॥ ६–७ ॥

### अथ आमजतृष्णाया लक्षणम् ।

आमजामाह—

**त्रिदोषलिङ्गाऽऽमसमुद्भवा च हृच्छूल-निष्ठीवन-सादकर्त्री**

( [illegible] )

म०—त्रिदोषेत्यादि । त्रिदोषलिङ्गा=त्रिदोषलिङ्गयुक्ता । आमात्त्रिदोषकोपः स्यादिति ॥—

भा० टी०—आमज तृष्णा के लक्षण—आम से उत्पन्न तृष्णा में वात आदि तीनों तृष्णा के लक्षण होते हैं। इसमें हृदय में शूल, बार २ थूकना, और शरीर सुस्त रहता है॥

### अथ अन्नजतृष्णाया लक्षणानि ।

भक्तोद्भवामाह—

**स्निग्धं तथाऽम्लं लवणं च भुक्तं गुर्वन्नमेवाशु तृषां करोति ॥८॥**

( [illegible] )

म०—स्निग्धमित्यादि । चकारात् कटु च, ननु तिक्त-कषाय-मधुराणामग्रहणं? गुरुशब्देन मात्रागुरु, द्रव्यगुरु च गृह्यते । हृद्दलेन तु पञ्च तृष्णाः पठिताः वात-पित्त-क्षया-ऽऽमोपसर्गजा ( च. चि. स्था. अ. २२ ) इति; तत्र, कफजा आमजायामेवावरुद्धा; क्षतजा वातजायां; भक्तजा च वातजायां, भक्तावरणेन वातप्रकोपात्, पित्तजायां वा, विदाहेन पित्तप्रकोपात् । सुश्रुते चोपसर्गजा यथास्वं दोषजासु । ननु. मद्यजाऽपि सुश्रुतेन मदात्यये ( सु. उ. त. अ. ४७ ) पठिता, तत् कथं सप्तेत्युच्यते ? सत्यं तस्या वातपित्तजायामवरोधः, एवं हृद्दलेनापि ॥ ८ ॥

भा० टी०—भक्तोद्भवा तृष्णा के लक्षण—चिकनी चीजें, खटाई, नमक, चरपरा, देर में हजम होने वाली चीजें अधिक खाना और खुराक से अधिक खाना, इन कारणों से शीघ्र ही तृष्णा होती है ॥ ८ ॥

### अथोपसर्गजतृष्णाया लक्षणानि ।

तत्रोपसर्गजामाह—

**दीनस्वरः प्रताम्यन् दीनः संशुष्क-वक्त्र-गल-तालुः ।**
**भवति खलु योपसर्गात्तृष्णा सा शोषिणी कष्टा ॥ ९ ॥**

( [illegible] )

म०-दीनेत्यादि । दीनस्वरः= क्षामवचनः, प्रताम्यन्=मुह्यन्, दीनः=क्लान्तः उपसर्गादित्युपद्रवाद्रोगात्, उपद्रवशब्दश्च सामान्येन रोगमात्रेऽपि वर्तते, यथा— "निरूहोपद्रवाचिकित्सितं व्याख्यास्यामः" ( सु. चि. स्था. अ. ३८ ) इत्यत्र । कष्टा=कष्टसाध्या, व्याधिकर्षितदेहत्वात् ॥ ९ ॥

भा० टी०—आवाज़ मन्द हो जाय, ग़शी सी रहे, थकावट मालूम हो, मुह, गला, तालु, सूखे, किसी रोग के होने पर हो, धातु सुखाने वाली ऐसी तृष्णा कष्ट साध्य होती है ॥ ९ ॥

### अथ तृषोपसर्गाः ।

तानेवोपसर्गानाह—

ज्वर-मोह-क्षय-कास-श्वासाद्युपसृष्टदेहानाम् ।

( च० चि० अ० २४ श्लो० १५ )

म०—ज्वरेत्यादि । आदिशब्देनातीसारादीनां ग्रहणम् ॥-

भा० टी०—ज्वर, मूर्च्छा, क्षय, कास, श्वास, अतिसार, प्रमेह रक्तपित्त आदि रोग की हालत में उत्पन्न कष्ट साध्य होती है ॥

### अथासामसाध्यलक्षणानि ।

असाध्यानां लक्षणमाह—

सर्वास्त्वतिप्रसक्ता रोगकृशानां वमिप्रयुक्तानाम् ।
घोरोपद्रवयुक्तास्तृष्णा मरणाय विज्ञेयाः ॥ १० ॥

( च० चि० अ० २४ श्लो० १६ )

"क्षीणं विचित्तं बधिरं तृषाऽऽर्तं विवर्जयेन्निर्गतजिह्वमाशु" ॥११॥

( सु० उ० अ० ४८ श्लो० १३ )

इति श्रीमाधवकरविरचिते माधवनिदाने तृष्णानिदानं समाप्तम् ।

म०—सर्वास्त्वित्यादि सर्वा वातजादयः, अतिप्रसक्ता=अतिप्रवृद्धाः । घोरोपद्रवयुक्ता=मुखशोषादिभिर्बलवद्भिरुपद्रवैः समन्विता इति जेज्जटः ॥ १० ॥

इति श्रीविजयरक्षितकृतायां मधुकोशव्याख्यायां तृष्णानिदानं समाप्तम् ।

भा० टी०—असाध्य तृष्णा के लक्षण-जो मनुष्य किसी रोग से कृश हो गया हो, कफ आती हो, इस हालत में उत्पन्न तृष्णा, तथा बंद न होनेवाली और भयङ्कर [illegible], मुखशोष आदि उपद्रवों से युक्त तृष्णा सातों में कोई भी उत्पन्न हो तो असाध्य होती है। उससे रोगी नहीं बचता ॥ १० ॥

भा० टी०—जिस तृष्णा रोगी का शरीर क्षीण हो, कान बहरा हो गया हो, जीभ बाहर निकल गई हो तो दवा न करे ॥ ११ ॥

इति श्रीहरिनारायणशर्मवैद्यकृतायां निदानदीपिकायां [illegible]
भाषाटीकायां तृष्णानिदानम् ।

## अथ मूर्च्छा-भ्रम-निद्रा-तन्द्रा-संन्यास-निदानम् ।

### अथ मूर्च्छारोगस्य निदानपूर्विका संप्राप्तिः ।

( मूर्च्छा=Fainting or Syncope. ) फेन्टिङ्ग या सिंकोपी ।

तृष्णायां मोहो भवतीति तृष्णानन्तरं मूर्च्छा, उक्तं हि—"तृषितो मोहमाप्नोति मोहात् प्राणान् विमुञ्चति" इति; तस्या निदानं सम्प्राप्तिं चाह—

क्षीणस्य बहुदोषस्य विरुद्धाहारसेविनः ।
वेगाघातादभीघाताद्धीनसत्त्वस्य वा पुनः ॥ १ ॥
करणायतनेषूग्रा बाह्येष्वाभ्यन्तरेषु च ।
निविशन्ते यदा दोषास्तदा मूर्च्छन्ति मानवाः ॥ २ ॥
संज्ञावहासु नाडीषु पिहितास्वनिलादिभिः ।
तमोऽभ्युपैति सहसा सुख-दुःख-व्यपोहकृत् ॥ ३ ॥
सुख-दुःख-व्यपोहाच्च नरः पतति काष्ठवत् ।
मोहो मूर्च्छेति तामाहुः षड्विधा सा प्रकीर्तिता ॥ ४ ॥
वातादिभिः शोणितेन मद्येन च विषेण च ।
षट्स्वप्येतासु पित्तं तु प्रभुत्वेनावतिष्ठते ॥ ५ ॥

( [illegible] )

म०—क्षीणस्येत्यादि । वहुदोषस्येति विपुलदोषस्य न त्वनेकदोषस्य; तथा सत्येकदोषजायाः संप्राप्तिर्नोक्ता स्यात् । वेगाघातान्मलादिवेगधारणात् । अभिघातात् लगुडादेः । हीनसत्त्वगुणस्य । करणं=मनः, तस्यायतनानि=बाह्यानि चक्षुरादीनि, आभ्यन्तराणि मनोवहानि स्रोतांसि, यैरागत्य मनश्चक्षुरादीन्यधितिष्ठति अथवा बाह्यानि=कर्मेन्द्रियाणि, आभ्यन्तराणि=धीन्द्रियाणि; तेषु यदा उग्रा दोषा निविशन्ते तदा मूर्च्छन्तीति योज्यम् । पुनः कया संम्प्राप्त्या इत्यत आह—संज्ञावहास्वित्यादि । संज्ञावहनाडीशब्देन सिराधमनी=स्रोतसां ग्रहणमित्याहुः, यतस्तैर्मन इन्द्रियदेशं प्राप्नोति । पिहितासु आवृतासु । तमो=मनोगुणोऽज्ञानहेतुः, अभ्युपैति=वर्धते, सहसा=झटिति । अन्येषु तमोबहुलेषु रोगेषु मदात्ययादिषु सत्त्वरजसी न तथा लीयेते, यथा मूर्च्छायामित्यत आह—सुखदुःखव्यपोहकादिति=सुखदुःखयोरसंवित्तिकरम्[1] । एतत्तु प्रायिकत्वेनोक्तम्, ( त्रिविधं ज्ञानं भवति हेयोपादेयोपेक्षणीयभेदात्, ) तेनोपेक्षणीयज्ञानाभावो ज्ञेयः । व्यवहारार्थं तत्पर्यायवाह—मोहो मूर्च्छेति । वातादिभिस्तिस्रः, शोणित-मद्य-विषैश्च तिस्रः; एवं षट् । प्रभुत्वेनेति व्यापकत्वेन, तेन वातजादिष्वपि ज्वरवद्रोगमहिम्नाऽवश्यं पित्तसम्बन्धः, अत एव वक्ष्यति,—"मूर्च्छा पित्त तमःप्राया" इति; चिकित्सायां च शीताक्रियाविधानमिति ॥ १–५ ॥

भा० टी०—मूर्च्छा रोग का निदान और संप्राप्ति–व्याधि आदि से क्षीण मनुष्य, जिसके शरीर में दोष बहुत हों, विरुद्ध भोजन करने वाला, मल मूत्र का वेग रोकने वाला, लाठी आदि से चोट लग जाना, सत्वगुण कम हो जाना, इस प्रकार के मनुष्यों के बाहरी इन्द्रियों में—(आँख कान नाक जीभ त्वचा) और भीतरी इन्द्रिय–मनो वाही स्रोतों में, जिनके द्वारा मन, आँख आदि इन्द्रियों में लगता है, जब दोष चले जाते हैं तब मनुष्य मूर्च्छित होते हैं । उन संज्ञावाही स्रोतों को, जिनके द्वारा मन सब इन्द्रियों में लगता है, जब वात आदि दोष घेर लेते हैं तो एकाकी तमोगुण बढ़ने लगताहै, उसके बढ़ जाने से मनुष्य को सुख दुःख का ज्ञान नहीं रहता और कटी लकड़ी के समान जमीन पर गिर पड़ता है । इसे ही मूर्च्छा या मोह कहते हैं । मूर्च्छा रोग छः प्रकार का होता है । वात से, पित्त से, कफ से, खून से, मद्य से और विष से । सिर्फ ये छः कारण हैं, किन्तु प्रधानतः पित्त छओ प्रकार के मूर्च्छा रोग में रहता है । यह रोग पित्त प्रधान है ॥ १–५ ॥

---

1—अज्ञानकारकम् ।

## अथ मूर्च्छायाः पूर्वरूपाणि ।

तस्याः पूर्वरूपमाह—

हृत्पीडा जृम्भणं ग्लानिः संज्ञादौर्बल्यमेव च ।
सर्वासां पूर्वरूपाणि,—यथास्वं ता विभावयेत् ॥ ६ ॥

( सु० उ० अ० ४६ श्लो० ९ )

म०—हृत्पीडेत्यादि । संज्ञादौर्बल्यमसम्यग्ज्ञानता । सर्वासां पूर्वरूपाणीति छेदः । यथास्वं विभावयेदिति ताः मूर्च्छाः वातादिभेदेन जानीयात् व्यक्तरूपावस्थायाम् ननु पूर्वरूपावस्थायामिति जेज्जटः ॥ ६ ॥

भा० टी०—मूर्च्छा का पूर्वरूप-हृदय में पीड़ा, जँभाई, ग्लानि, मन उदास रहे, होश ठिकाने न रहे, यह मूर्च्छा का पूर्व रूप है, प्रकट हो जाने पर उसे दोषों के लक्षणों से पहचाने कि यह किस दोष से है ॥ ६ ॥

## अथ वातजमूर्च्छाया लक्षणम् ।

ता एवाह ( वातजामाह )—

नीलं वा यदि वा कृष्णमाकाशमथवाऽरुणम् ।
पश्यंस्तमः प्रविशति शीघ्रं च प्रतिबुध्यते ॥ ७ ॥
वेपथुश्चाङ्गमर्दश्च प्रपीडा हृदयस्य च ।
कार्श्यं श्यावाऽरुणा छाया मूर्च्छाये वातसंभवे ॥ ८ ॥

म०—नीलमित्यादि । नीलं=हरितवर्णम्, कृष्णं=कज्जलवर्णम्, अरुणं=ईषल्लोहितम् । तमः प्रविशत्यन्धकारमिव प्रविशति मूर्च्छतीत्यर्थः । शीघ्रं च प्रतिबुध्यत इति वायोः शीघ्रकारित्वात् । कार्श्यं श्यावाऽरुणा छाया, 'भवति' इति शेषः । मूर्च्छायशब्दो मूर्च्छापर्यायः ॥ ७–८ ॥

भा० टी०—वातज मूर्च्छा के लक्षण-पहले आँख के सामने नीला या काला अथवा लाल देख पड़े, बाद अँधेरा मालूम हो और बेहोश होकर गिर पड़े, किन्तु जल्दी ही होश हो जाय, शरीर काँपे, अँगड़ाई हो, हृदय में पीड़ा हो, शरीर दुबला हो और कान्ति श्याम या अरुण वर्ण की हो जाय तो वात की मूर्च्छा समझे ॥ ७–८ ॥

## अथ पित्तजमूर्च्छाया लक्षणम् ।

पित्तजमूर्च्छायमाह—

रक्तं हरितवर्णं वा वियत्पीतमथापि वा ।
पश्यंस्तमः प्रविशति सस्वेदश्च प्रबुध्यते ॥ ९ ॥
( सपिपासः ससन्तापो रक्त-पीता-ऽऽकुलेक्षणः । )
संभिन्नवर्चाः पीताभो मूर्च्छाये पित्तसंभवे ॥ १० ॥

म०—रक्तमित्यादि । वियदाकाशम् । अत्र "सपिपासः ससन्तापो रक्त-पीताकुलेक्षणः" इति क्वचिदधिकः पाठः ॥ ९–१० ॥

भा० टी०—पित्तज मूर्च्छा के लक्षण-पहले लाल, या हरा, अथवा पीला देख पड़े, बाद अँधेरा मालूम हो और बेहोश हो जाय । और पसीना होकर होश हो, प्यास लगे, गरमी मालुम हो कुछ २ शरीर गरम हो, आँखें लाल या पीली और चञ्चल हो जाँय, पाखाना हो, शरीर की कान्ति पीली रहे तो पित्त की मूर्च्छा समझनी चाहिए॥९—१०॥

## अथ कफजमूर्च्छाया लक्षणम् ।

कफजमूर्च्छायमाह—

मेघसंकाशमाकाशमावृतं वा तमोघनैः ।
पश्यंस्तमः प्रविशति चिराच्च प्रतिबुध्यते ॥ ११ ॥
गुरुभिः प्रावृतैरङ्गैर्यथैवार्द्रेण चर्मणा ।
सप्रसेकः सहृल्लासो मूर्च्छाये कफसंभवे ॥ १२ ॥

म०—मेघेत्यादि । तमोघनैरिति तमोभिर्घनैश्च; तमोऽन्धकारः, घनोऽत्र मेघवाची ॥ ११–१२ ॥

भा० टी०—कफ की मूर्च्छा में रोगी आकाश को मेघ की तरह, वा अन्धकार और बादलों से घिरा हुआ समझता है और आँख के सामने अँधेरा मालुम होने पर बेहोश होकर गिर पड़ता है। होश देर में होती है। उसे अपना शरीर ऐसा भारी मालुम होता है कि गीला चमड़ा ओढ़ा है । मुह में पानी भर जाता है और जी मचलाता है ॥ ११–१२ ॥

अथ सन्निपातिकमूर्च्छाया लक्षणम् ।

सान्निपातिकमाह—

सर्वाकृतिः सन्निपातादपस्मार इवागतः ।
स जन्तुं पातयत्याशु विना बीभत्सचेष्टितैः ॥ १३ ॥

(सु० उ० नि० अ० ६ श्लो० १४)

म०—सर्वेत्यादि । ननु, सर्वाकृतिरिति विरुद्धम्, उद्देशे 'षड्विधा सा प्रकीर्तिता' इत्यभिहितत्वात्; सान्निपातजया च सह सप्त प्रसज्येरन् ? उच्यते, उद्देशः सुश्रुतग्रन्थेन चरकग्रन्थेन च विवरणम् । चरके हि पृथग्जास्त्रिसर्वा(सन्नि)पाता(?)पजा चैकेति चतस्रः पठ्यन्ते । यदुक्तमष्टोदरीये—"चत्वारो मूर्च्छाया इति अपस्मारैर्व्याख्याताः"—(च. सू. स्था. अ. १८) इति रक्त-मद्य-विषजानां यथादोषमेतास्वन्तर्भावः; सुश्रुते चैता रक्तादिजा लक्षण-चिकित्सा-भेद-व्याख्यानार्थं साक्षात् पठिताः, त्रिदोषजाया दोषजास्वन्तर्भाव, इत्यभिप्रायेण भेद आचार्ययोः, संग्रहे चात्र सर्वतन्त्रस्वीकारादुभयमपि लिखितमित्यदोषः । अपस्मार इवेति यथाऽपस्मारी महताऽभिघातेन पतति चिरेण प्रतिबुध्यते । अपस्मारे फेनवमिन्दन्तघट्टना-अक्षिवैकृतादिकमधिकमिति भेदः । बीभत्सचेष्टितैरिति फेनवमनादिभिरेव ॥ १३ ॥

भा० टी०—सन्निपात की मूर्च्छा में तीनों दोषों की मूर्च्छा के लक्षण होते हैं, और इस वेग से मूर्च्छा होती है कि मालूम होता है, मृगी आ गई । देखने में सन्निपात की मूर्च्छा और मृगी में कोई फ़र्क नहीं मालूम होता; किन्तु अपस्मार (मृगी) में मुह से फेन निकलता है, दाँत कटकटाता और पीसता है, आँखें टेढ़ी हो जाती और घूमती हैं, ये सन्निपात की मूर्च्छा में नहीं होतीं, यही दोनों में फ़र्क है ॥ १३ ॥

अथ रक्तजमूर्च्छायाः सम्प्राप्तिः ।

रक्तजमूर्च्छासम्प्राप्तिमाह—

पृथिव्यापस्तमोरूपं रक्तगन्धस्तदन्वयः ।
तस्माद्रक्तस्य गन्धेन मूर्च्छन्ति भुवि मानवाः ॥ १४ ॥

(सु० उ० अ० ४६ श्लो० १)

म०-पृथिव्याप इत्यादि । पृथिवी आपश्च एतद्द्वयं तमोरूपं=तमोबहुलम्, उक्तं हि,-"तमोबहुला पृथिवी, सत्व-तमो बहुला आपः (सु. शा.स्था. अ. १ )"-इति । 'पृथिव्यम्भः' इति पाठे अयमेवार्थः । तदन्वयः=पृथिव्यम्भोऽन्वय, 'तन्मयः' इति पाठे पृथिवी-जल-मयः, प्रकृतिविकारभावे मयट् । तस्मादिति=यस्मात् पृथिव्यापस्तमोरूपं रक्तगन्धश्च तदन्वयः, मूर्च्छा च तमः—माया, तस्मादित्यर्थः । भुवि मानवा इति पाञ्चभौतिकत्वेऽपि शरीरस्योद्भूतभूमिगुणा ये ते भुविमानवाः पार्थिवाः, तामसा इत्यर्थः; नतु राजसाः सात्विका वा ॥ १४ ॥

भा० टी०—रक्तज मूर्च्छा के लक्षण-जिन मनुष्यों का तमोगुण अधिक होने से दिल कमजोर होता है वे बाहर खून को देखते ही मूर्च्छित-बेहोश हो जाते हैं । कारण यह है कि पृथिवी और जल में तमोगुण अधिक होता है, और खून में पृथिवी तथा जल का अंश साफ़ जाहिर होता है,इस लिये रक्त में भी तमोगुण अधिक रहता है, अतएव तमोगुणी आदमी खून के गन्ध से ही बेहोश हो जाते हैं, परन्तु जिनका दिल, सत्वगुण अधिक होने से, धैर्ययुक्त, तथा रजोगुण के आधिक्य से मज़बूत होता है, उन्हें खून के गन्ध से मूर्च्छा नहीं होती ॥ १४ ॥

### अत्रापरमतम् ।

ननु चम्पकादिगन्धेनापि मूर्च्छा प्रसज्येत ? तत्रापि गन्धस्य पार्थिवत्वात्, पृथिव्याश्च तमोरूपत्वादित्यत आह—

## द्रव्यस्वभाव इत्येके दृष्ट्वा यदभिमुह्यति ।-

( सु० उ० अ० ४६ श्लो० ६ )

म०-द्रव्यस्वभाव इत्यादि । रक्तस्यायं स्वभावः, तेन तद्गत एव गन्धो मूर्च्छयतीति । स्वभावमेव द्रढयति-दृष्ट्वा यदभिमुह्यतीति । यच्च दृष्ट्वाऽपि मुह्यति'—इति पाठान्तरम् । अन्ये तु गन्धासम्बन्धेऽपि दर्शनमात्रान्मूर्च्छोपलम्भादनैकान्तिकत्वं गन्धस्य मन्यमाना स्वभावमेव हेत्वन्तरमाहुः; एतेन गन्धस्य प्रायिकत्वमुक्तम् । अन्ये तु गन्धस्य हेतुत्वमपास्य दर्शनस्यैव हेतुत्वं मन्यन्ते; तन्न यदाह [1]भोजः,-"स्तब्धाङ्गदृष्टिर्भवति गूढोच्छ्वासस्तथैव च । दर्शनादसृजस्तज्ज्ञाद्गन्धाच्चैव प्रमुह्यति"-इति । पृथिव्या यत्तमोरूपम्"-इति पाठान्तरं सुगमम् । "पृथिव्यम्भ-[2]स्तमोरूपं रक्तगन्धेन तन्त्रयम्"-इति पाठान्तरस्य जेज्जटलिखितस्यायमर्थः,-रक्तगन्धेन तु यदुक्तमव्यभिचारितं प्रकृतिविकारयोस्तादर्थ्यात् किं तन्त्रयमित्यत

१—'यदाह भेडः' इति पाठान्तरम् । २—'पृथिव्यापस्तमोरूपा' इति पाठान्तरम् ।

उक्तम्-पृथिव्यम्भस्तमोरूपामिति; पृथिव्यम्भस्तमसां रूपमित्यर्थः. [illegible] दृष्ट्वेति रक्तमिति शेषः ॥ १४ ॥

भा० टी०—किसी का मत है कि यदि ऐसा ही माना जाय तो कमल आदि के फूल से भी मूर्च्छा होनी चाहिए, क्योंकि उसका भी गन्ध पार्थिव है, और पृथ्वी तमोरूप होती है। अतः यह माना जाय तो अच्छा है कि रक्त का यह स्वभाव ही होता है कि उसके देखने से मूर्च्छा होती है। पार्थिव गन्ध कारण मानना ठीक नहीं।

## अथ विष-मद्य-जातमूर्च्छाया लक्षणम्।

विष-मद्यजे प्राह—

**गुणास्तीव्रतरत्वेन स्थितास्तु विष-मद्ययोः ॥ १५ ॥**
**त एव तस्मात्ताभ्यां तु मोहो स्यातां यथेरितौ।**

( [illegible] )

म०—गुणा इत्यादि। गुणा दश यदुक्तं दृढबलेन,—"[1]लघुरूक्षमाशु विशदं व्यवायि तीक्ष्णं विकाशि सूक्ष्मं च। उष्णमनिर्देश्यरसं दशगुणमुक्तं विषं तज्ज्ञैः" ( च. चि. स्था. अ. २३ )—इति। ते तैलादौ व्यस्तास्तीव्राः सन्ति, विषमद्ययोस्तु तीव्रतराः, अतस्तैलादिभिर्न मोहः, किन्तु विष-मद्याभ्यामिति। त एवेति गुणा लघुत्वादयः। यथेरिताविति विषजो मोहो न स्वयं निवर्तते विषघ्नौषधप्रयोगाद्; मद्यजस्तु मद्यपरिणामादेव शाम्यति. अयं च भेदो विष-मद्ययोः प्रभावात्। उक्तं हि तन्त्रान्तरे,—"ये विषस्य गुणाः प्रोक्ताः सन्निपातप्रकोपणाः। त एव मद्ये दृश्यन्ते विषे तु बलवत्तराः"—इति ॥ १५ ॥

भा० टी०—विषज और मद्यज मूर्च्छा का लक्षण-विष और मद्य में लघु, रूक्ष, आशु, विशद, व्यवायि, तीक्ष्ण, विकाशि, सूक्ष्म, उष्ण, अव्यक्तरस, ये दश गुण तीव्र होते हैं. इस लिए इन दोनो से पूर्व कथनानुसार मूर्च्छा होती है। विष से उत्पन्न मूर्च्छा विना दवा के दूर नहीं होती. क्योंकि विष पचता नहीं। किन्तु मद्य की मूर्च्छा मद्य के पकने के बाद शान्त हो जाती है ॥ १५ ॥

---

१-आशु आशुकारी। विशद [illegible] सन्धिबन्धनशैथिल्यकारकं च। सूक्ष्म शरीरस्य सूक्ष्म [illegible] देश्योऽकथनीयो रसो यस्य तत् [illegible]।

## अथ रक्तजादिमूर्च्छात्रयस्य लक्षणानि ।

### तत्र रक्तजाया लक्षणम् ।

रक्तजादिमूर्च्छात्रयस्य रूपाण्याह—

**स्तब्धाङ्गदृष्टिस्त्वसृजा गूढोच्छ्वासश्च मूर्च्छितः ॥ १६ ॥**

( सु० उ० त० अ० ४६ श्लो० ८ )

म०—स्तब्धाङ्गेत्यादि मूर्च्छित इत्यन्तं, रक्तजायाः । गूढोच्छ्वासश्चास्पष्टोच्छ्वासः । 'मूढ' इति पाठे संनिरुद्ध इत्यर्थ इति जेज्जटः ॥ १६ ॥

भा० टी०—रक्तज मूर्च्छा में आँखें और सब शरीर स्तब्ध (निश्चेष्ट) हो जाता है, और साँस भीतर ही आती रहती है ॥ १६ ॥

### अथ मद्यजमूर्च्छाया लक्षणम् ।

**मद्येन विलपंश्शेते नष्ट-विभ्रान्त-मानसः ।**
**गात्राणि विक्षिपन् भूमौ जरां यावन्न याति तत् ॥ १७ ॥**

( सु० उ० अ० ४६ श्लो० ६ )

म०—मद्येनेत्यादि तदित्यन्तं मद्यजायाः । नष्ट-विभ्रान्त-मानस इत्यत्र 'निष्टनन् भ्रान्त-मानसः' इति पाठान्तरे निष्टनन्—शब्दं कुर्वन् ॥ १७ ॥

भा० टी—मद्य की मूर्च्छा-रोगी अंड बंड बकता हुआ पड़ा रहता है । उसे किसी बात की स्मृति नहीं रहती, न मन ठिकाने रहताहै, और जब तक मद्य पक नहीं जाता तब तक हाथ पैर पटकता हुआ भूमि में मूर्च्छित पड़ा रहता है ॥ १७ ॥

### अथ विषजातमूर्च्छाया लक्षणम् ।

**वेपथु-स्वप्न-तृष्णाः स्युस्तमश्च विषमूर्च्छिते ।**
**वेदितव्यं तीव्रतरं यथास्वं विषलक्षणैः ॥ १८ ॥**

( सु उ० अ० ४६ श्लो० १० )

म०—वेपथ्वादिना विषजायाः । यथास्वं विषलक्षणैरिति विषस्य मूल-पत्र-क्षीरादिभेदेन प्रातिस्विकं[1] यल्लक्षणमुक्तं सौश्रुतकल्पस्थाने ( सु. क. स्था. अ.२) तल्लक्षणयुक्ता मूर्च्छा भवतीत्यर्थः ॥ १८ ॥

भा० टी०—विष की मूर्च्छा में-शरीर काँपता है, नींद आती है, प्यास लगती है। अँधेरा में रहने की तरह कुछ ज्ञान नहीं रहता। विष,मूल पत्र-क्षीर निर्यास आदि भेदों से कई प्रकार का होता है। उनमें जैसा विष खाया रहता है उस विशेष विष का भी जो खास लक्षण है, वह भी होता है ॥ १८ ॥

### अथ मूर्च्छा-भ्रम निद्रा तन्द्रासु दोष-गुण-विशेषाद् भेदाः ।

संज्ञानाशसाधर्म्येऽपि मूर्च्छादीनां को भेदः ? इत्याह—

**मूर्च्छा पित्त-तमः-प्राया रजः पित्तानिलाद् भ्रमः ।**
**तमो-वात-कफात्तन्द्रा निद्रा श्लेष्म-तमो-भवा ॥ १९ ॥**

म०—मूर्च्छा पित्ततमः प्रायेत्यादि । तमो-वात-कफादिति समाहारद्वन्द्वः । निद्रा-तन्द्रयोश्चैतानि कारणानि व्यस्त-समस्तानि, तेन सुश्रुतेन यदतिलंघितलक्षणे निद्रा-तन्द्रे पठिते, ते विनैव कफात्[2] अतिलंघनस्य श्लेष्मक्षयहेतुत्वात् ॥ १९ ॥

भा० टी०—मूर्च्छा, भ्रम, निद्रा और तन्द्रा के अलग २ कारण-मूर्च्छा—तमोगुण और पित्त से होती है। भ्रम, रजोगुणयुक्त पित्त और वात से होता है, तन्द्रा तमोगुण, युक्त वात कफ से, और निद्रा श्लेष्म और तमोगुण से होती है। खंभा में आदमी का ज्ञान होना या रस्सी में सर्प का ज्ञान होना, अथवा सब चीजों को घूमती हुई देखना—भ्रम कहलाता है। निद्रा में इन्द्रिय और मन दोनों को बाहरी ज्ञान नहीं होता, और तन्द्रा में केवल इन्द्रियों को ॥ १९ ॥

### अथ भ्रमरोगस्य लक्षणम् । ( Giddiness ) गिडिनेस ।

**( चक्रवद् भ्रमतो गात्रं भूमौ पतति सर्वदा ।**
**भ्रमरोग इति ज्ञेयो रजः पित्तानिलात्मकः ॥)**

भा० टी०—भ्रम के लक्षण कुम्हार के चाक की तरह शरीर और माथा घूमे, और जमीन में पड़ा रहे, उसे भ्रम ( चक्कर आना ) कहते हैं ॥

---

१—प्रातिस्विकमिति—स्व स्वं मूलपत्रादि विष प्रति, प्रति स्वं, तत्र भवं प्रातिस्विकम्, [illegible]।

२—'तेनैव कफात्' इति पाठान्तरम् ।

### अथ निद्रालक्षणम् । ( Sleeping ) स्लीपिङ्ग

( यदा तु मनसि क्लान्ते कर्मात्मानः क्लमान्विताः ।
विषयेभ्यो निवर्तन्ते तदा स्वपिति मानवः ॥ )

भा०टी०—निद्रा के लक्षण-जब मन और आँख आदि इन्द्रियाँ थककर विषय ग्रहण नहीं कर सकतीं, तब मनुष्य सो जाता है। निद्रावस्था में मन इन्द्रियों में नहीं लगता।

### अथ तन्द्रालक्षणम् ।

### ( Sleepiness ) स्लीपिनेस

तन्द्रालक्षणमाह—

इन्द्रियार्थेष्वसंवित्तिर्गौरवं जृम्भणं क्लमः ।
निद्रार्तस्येव यस्येहा तस्य तन्द्रां विनिर्दिशेत् ॥ २० ॥

### अथ क्लमलक्षणम् ।

( योऽनायासः श्रमो देहे प्रवृद्धः श्वासवर्जितः ।
क्लमः स इति विज्ञेय इन्द्रियार्थप्रबाधकः ॥ )

भा०टी०—क्लम का लक्षण-बिना परिश्रम किये थकावट मालूम होती है, इन्द्रियाँ अपना काम नहीं करतीं। परिश्रम करने पर जो थकावट होती है उससे साँस फूलती है, किन्तु इसमें साँस नहीं फूलती—आदमी हाँफता नहीं।

( सु० शा० अ० ४ )

म०—इन्द्रियाऽर्थेष्वित्यादि । निद्रा-भ्रमयोस्तु लक्षणं नोक्तमिह, अतिप्रसिद्धत्वात् । निद्रा[2] हि विप्लु[3]तमनसः सर्वेन्द्रियाणां स्वविषयनिवृत्तिः । यदाह चरकः,—"यदा तु मनसि क्लान्ते कर्मात्मनः क्लमान्विताः । विषयेभ्यो निवर्तन्ते तदा स्वपिति मानवः' ( च, सू, स्था, अ, २१ )—इति । अत्र कर्मात्मानः= इन्द्रियाणि; निरिन्द्रियप्रदेशे मनसोऽवस्थितिर्निद्रेति मतेऽप्ययमेवार्थः । निद्रा-तन्द्रयोस्तूक्तकारणभेदाद्भेदः, उद्भू[4]तजृम्भादेश्चानुभवसिद्धत्वादिति; तथा निद्रा-

---

१-असंवित्तिरज्ञानम् । २ 'निद्राऽतिविद्र तमनसः' इति पाठान्तरम् । ३ विप्लुतमनसःक्लान्तमनसः । ४-उद्भूतमुत्पन्नम् ।

यामिन्द्रिय-मनो-मोहः, तन्द्रायामिन्द्रियमोहः । भ्रमलक्षणं तु चक्रस्थितस्येव भ्रमद्वस्तुदर्शनमिति ॥ २० ॥

भा० टी०—तन्द्रा के लक्षण-इन्द्रिय अपना काम न करें, शरीर भारी रहे, जँभाई आवे, थकाहट मालूम हो, सोये हुए की तरह पड़ा रहे उसे तन्द्रा कहते हैं ॥ २० ॥

## अथ सन्यासस्य मूर्च्छादिभ्यो भेदः ।

संन्यासस्य मूर्च्छादिभ्यो भेदमाह—

दोषेषु मद-मूर्च्छायाः कृतवेगेषु देहिनाम् ।
स्वयमेवोपशाम्यन्ति संन्यासो नौषधैर्विना ॥ २१ ॥

( अ० हृ० नि० अ० ६ श्लो० ३५ )

म०—दोषेष्वित्यादि ॥ २१ ॥

भा० टी०—सन्यास और मूर्च्छा आदि में भेद-मद और मूर्च्छा, दोषों का वेग ( जोर ) खतम हो जाने पर विना दवा भी स्वयं छूट जाती है, परन्तु संन्यास रोग नहीं, वह चिकित्सा से ही अच्छा होता है ॥ २१ ॥

## अथ संन्यासरोगलक्षणम् ।

**( Apoplexy or Catalepsy. )** अपॉप्लेक्सी या केटेलेप्सी

तल्लक्षणमाह—

वाग्-देह-मनसां चेष्टामाक्षिप्यातिबला मलाः ।
संन्यस्यन्त्यबलं जन्तुं प्राणायतनमाश्रिताः ॥ २२ ॥
स ना संन्याससंन्यस्तः काष्ठीभूतो मृतोपमः ।
प्राणैर्विमुच्यते शीघ्रं मुक्त्वा सद्यःफलां क्रियाम् ॥ २३ ॥

( अ० हृ० नि० अ० ६ श्लो० ३७, ३८ )

इति श्रीमाधवकरविरचिते माधवनिदाने मूर्च्छा-भ्रम-निद्रा-तन्द्रा-संन्यास-निदानं समाप्तम् ॥

---

१-हतवेगेष्विति पाठान्तरम् ।

म०—वागित्यादि । अतिबला इत्यनेन मूर्च्छायाः प्रारम्भकदोषेभ्योऽधिकत्वेन प्रवृद्धा दोषास्तमश्चेति बोधयति । संन्यस्यन्ति=मोहयन्ति । स ना=पुरुषः, संन्याससंन्यस्तः=संन्यासपीडितः, काष्ठीभूत इति अत्यन्तनिष्क्रियत्वेन अकाष्ठ एव काष्ठवद्भूतः । अत एव मृतोपम इति । मुक्त्वा सद्यः फलां क्रियामिति सूचीव्यधना–ऽञ्जना–ऽवपीडन–शूकशिम्बीफलावघर्षणादिरूपा क्रिया यदि न क्रियते तदा प्राणैर्विमुच्यते, अन्यथा तु जीवतीति ॥ २२–२३ ॥

इति श्रीविजयरक्षितकृतायां मधुकोशव्याख्यायां मूर्च्छा–भ्रम–निद्रा–तन्द्रा–संन्यास–निदानम् समाप्तम् ।

भा० टी०—दोष अत्यन्त प्रबल होकर हृदयमें स्थित होकर शरीर मन वाणी और इन्द्रियोंको बेकाम कर सत्वगुण से हीन पुरुष को मूर्च्छित कर देतेहैं । संन्यास रोग से मूर्च्छित होकर वह रोगी मुर्दा के समान काठ की तरह जमीन पर पड़ा रहता है । यदि तुरन्त फलदायक चिकित्सा न की जाय तो वह फिर नहीं उठता । उसी हालत में मर जाता है । ऐसी हालत में सुई चुभोना, तेज अञ्जन लगाना, तेज नास देना, खुजलाहट पदा करने वाली चीजें—किवाच आदि शरीर में घसना, शिर का बाल उखाड़ना, आदि क्रिया करने से रोगी को होश हो जाता है, नहीं तो मर जाता है । इसमें तुरन्त फलदायक चिकित्सा यही मानी गई है ॥ २२–२३ ॥

इति श्रीहरिनारायणशर्मवैद्यकृतायां निदानदीपिकायां रुग्विनिश्चय भाषाटीकायां मूर्च्छादिरोगनिदानम् ।

अथ मद्यस्य स्वभाववर्णनम् ।

ननु विषस्य ये गुणास्ते चेन्मद्येऽपि सन्ति, तर्हि विषवन्मद्यमनुपयोज्यं प्रसज्येत ? अत आह—

किन्तु मद्यं स्वभावेन यथैवान्नं तथा स्मृतम् ।
अयुक्तियुक्तं रोगाय युक्तियुक्तं यथाऽमृतम् ॥ २ ॥
प्राणाः प्राणभृतामन्नं तदयुक्त्या हिनस्त्यसून् ।
विषं प्राणहरं तच्च युक्तियुक्तं रसायनम् ॥ ३ ॥

( च० चि० अ० १२ श्लो० ५७, ५८ )

म०-किन्त्वित्यादि । यथैवान्नमिति देहधारकस्वभावम्, तदेवायुक्तियुक्तमविधियुक्तं रोगाय; तस्मादहितमपि विशिष्टविधिनोपयुक्तं हितम्, हितमप्यविधिनोपयुक्तमनर्थाय भवतीति । अत्रैव दृष्टान्तमाह—प्राणा इत्यादि । तदयुक्त्येति अतिमात्रत्वादिना विसूच्यादिकं कृत्वा मारयतीत्यर्थः । युक्तियुक्तमिति यथा चरकरसायनप्रयोगे उक्तम्,—"द्वौ यवावत्र हेम्नस्तु तिलं दद्याद्विषस्य च ( च. चि. स्था. अ. १ )"-इति । अत्र तिलमिति तिलप्रमाणम् ॥ २–३ ॥

भा० टी०—किन्तु मद्यपान स्वभावतः अन्न के समान देह रक्षक है । अविधि से पीने से रोग पैदा करता है और विधि पूर्वक पीने से अमृत के समान गुणदायक होता है । जैसे अन्न प्राणियों का प्राणरक्षक है परन्तु वही अधिक खाने से हैजा आदि रोग उत्पन्न कर मार डालता है । विष से मौत होती है,मगर शुद्ध और विधि पूर्वक उसका सेवन हितकारी होता है, और लाभकारी भी वस्तु विना विधि के मनमानी सेवन से नुकसान पहुँचाता है ॥ २–३ ॥

अथ विधिनोपयुक्तस्य मद्यस्य गुणाः ।

विधिनोपयुक्तस्य फलमाह—

विधिना मात्रया काले हितैरन्नैर्यथाबलम् ।
प्रहृष्टो यः पिबेन्मद्यं तस्य स्यादमृतोपमम् ॥ ४ ॥

( च० चि० अ० १२ श्लो० २५ )

स्निग्धैस्तैरन्नै[1]र्मांसैश्च भक्ष्यै[2]श्च सह सेवितम् ।
भवेदायुःप्रकर्षाय बलायोपचयाय च ॥ ५ ॥

---

१—अन्नैरोदनसूपादिभिः । २ भक्ष्यैर्मोदकमण्डकादिभिः । यदुक्तं भावप्रकाशे—"भोज्यमोदनसूपादिर्भक्ष्यमोदकमण्डकम्"

काम्यता मनसस्तुष्टिस्तेजो विक्रम एव च।
विधिवत् सेव्यमाने तु मद्ये संनिहिता गुणाः॥ ६॥

(सु० उ० अ० ४७ श्लो० ५-६)

म०-विधिनेत्यादि। काल इति नित्यगे चावस्थिके च, तद्यथा—ग्रीष्मे शीत-मधुरं=माध्वीकादि, शीते उष्ण-तीक्ष्णम्=गौडिक-पैष्टिकादि, तथा वाते स्निग्धादि, एवं वयस्युदाहार्यम्। हितैरन्नैरिति वक्ष्यमाणास्निग्धादिभिर्मद्यविपरीतगुणैः। स्निग्धैरित्युपलक्षणम्, तेनान्यैरपि मद्यविपरीतगुणैरिति बोद्धव्यम्। यदुक्तं सुश्रुतेन-"मद्यमम्लं तथा तीक्ष्णं सूक्ष्मं विशदमेव च। रूक्षमाशुकरं चैव व्यवायि च विकाशि च-" (सु. उ. त. अ. ४७) इति। अम्लरसत्वं चास्योद्भूतरसत्वे[2]-नोक्तम्, यदुक्तमन्यत्र-"सर्वेषामम्लजातीनां मद्यं मूर्ध्नि व्यवस्थितम्"-इति। मूर्ध्नि व्यवस्थितमुत्कृष्टम्। अन्येऽप्यत्र रसाः सन्ति।यदाह भोजः—"मैरेयं मदिरा सीधु चतुर्थं मधु चोच्यते। एकैकं षड्रसं तत्र रसतो मद्यमीरितम्"-इति। अन्न—भक्ष्य-शब्दयोरुपादानेन प्रायो लेह्यं द्रवान्तरपानं च मद्यपानोचितं न भवतीति दर्शयति। अन्न-भक्ष्याभ्यां लब्धेऽपि मांसे, मांसग्रहणं विशेषेण हितत्वोपदर्शनार्थम्। बलं=शक्तिः, उपचयः=स्थौल्यम्। अपरमपि विधिसेवागुणमाह—काम्यतेत्यादि। काम्यता=कमनीयमूर्तिता, मनसस्तुष्टिः=सन्तोषः। काम्यता मनस इति कमनीयवस्तुनि मनोवृत्तिः,तुष्टिश्च मनस एवेति योज्यम्। तेज=उत्साहः। विक्रमः=पराभिभवार्थं बलवती शरीरचेष्टा॥ ४—६॥

भा० टी०-विधि पूर्वक मद्यपान के गुण-विधि पूर्वक, मात्रा से, समय पर, हितकर अन्न के साथ, बल के अनुसार, जितना सह सके, खुश तबियत में जो मनुष्य मद्य पीता है उसे अमृत के समान मद्य गुणकारी होता है। स्निग्धतर अन्न, मांस, भक्ष्य=लड्डू आदि के साथ मद्य पीने से आयु, बल, शरीर की वृद्धि होती है। काम्यता-शरीर सुन्दर होता है। तबियत खुश रहती है। तेज-उत्साह बढ़ता है, और विक्रम-बहादुरी होती है॥ ४-६॥

अथ प्रथममदस्य लक्षणम्।

उक्तविधिविपर्ययेण सेव्यमानं मद्यं मदात्ययाय संपद्यते,स च त्रिविधो भवति-पूर्वो मध्यमोऽन्तिमश्चेति; तेषां क्रमेण लक्षणमाह—

---

१ अविदिता वर्तमाना। २ उद्भूतरसत्वेन व्यक्तरसत्वेन।

बुद्धि-स्मृति-प्रीति-करः सुखश्च पानाऽन्न-निद्रा-रति-वर्धनश्च ।
संपाठ-गीत-स्वर-वर्धनश्च प्रोक्तोऽतिरम्यः प्रथमो मदो हि ॥ ७ ॥

म०—बुद्धीत्यादि । बुद्धिरनुभवः,स्मृतिरनुभूतार्थानुसन्धानम् । पानान्ननिद्रारतिवर्धनश्चेति पानादिषु रतिरनुरागस्तद्वर्धनः । संपाठः=सम्यक् पाठः । गयदासस्तु-'संपाठ्य'-इति पठित्वा गीत-नृत्य-वाद्यानि मिलितानि संपाठ्यमुच्यते, गीतं तु केवलमेवेति व्याचष्टे । स्वरो=ध्वनिः । प्रोक्तोऽतिरम्य इति मनोविकारकारित्वेऽपि तदात्वेन न दुःखावहत्वात्, अत एव सुश्रुतेन मानसविकारेषु हर्षः पठितः ॥ ७ ॥

भा०टी०—विधि पूर्वक मद्यपान न करने से मदात्यय ( नशा ) होता है । उनमें पहले मदात्ययका वर्णन किया जाता है-जितने मद्य पीने से बुद्धि, स्मरण शक्ति, (याद दाश्त) दोस्ती सुख (आनन्द) खाना, पीना, सोना बोलना, पढ़ना, गाना बजाना आदि काम जल्दी और आनन्द के साथ होते रहे, और मौज़ रहे, तो यह मदात्यय ( नशा ) अच्छा है । यह पहला मदात्यय है ॥ ७ ॥

## अथ द्वितीयमदस्य लक्षणम् ।

द्वितीयमदमाह—

अव्यक्तबुद्धि-स्मृति-वाग्-विचेष्टःसोन्मत्त-लीलाऽऽकृतिरप्रशान्तः।
आलस्य-निद्रा-ऽभिहतो मुहुश्च मध्येन मत्तः पुरुषो मदेन ॥ ८॥

म०—अव्यक्तेत्यादि । विचेष्टो=विरुद्धचेष्टः । उन्मत्तस्य लीलाकृतिभ्यां सह वर्तते इति सोन्मत्तलीलाकृति=उन्मत्तप्राय इत्यर्थः । अप्रशान्तः=प्रचण्डः ॥ ८ ॥

भा०टी०-बुद्धि ठिकाने न रहे, याददाश्त न रहे, ठीक बातचीत न करे, पागल की तरहसूरत हो जाय और पागल की तरह काम करे, शान्त न रहे, उपद्रव मचावे, वार २ आलस्य और निद्रा से पीड़ित हो, यह मध्य मदात्यय है ॥ ८ ॥

## अथ तृतीयमदस्य लक्षणम् ।

तृतीयमदमाह—

गच्छेदगम्यान्न गुरूंश्च मन्येत् खादेदभक्ष्याणि च नष्टसंज्ञः ।
ब्रूयाच्च गुह्यानि हृदि स्थितानि मदे तृतीये पुरुषोऽस्वतन्त्रः ॥ ९ ॥

नरः । अचिकित्स्या भवन्त्येते बल-मांस-परिक्षयात्" ( च. इ. स्था. अ. )-इति । यदि ह्यत्र मधुमेहोऽभीष्टः स्यात्तदा बलमांसपरिक्षयादिति न कृतं स्यात्, तस्य स्वरूपत एवासाध्यत्वात् । यथा कियन्तः शिरसीयाध्याये-"उपेक्षयाऽस्य जायन्ते पिडका मधुमेहिकाः" ( च. सू. स्था. अ. १७ )-इत्यादिना या मधुमेहसंबन्धित्वेनोक्तास्ता एव "प्रमेहिणां याः पिडका मयोक्ताः" ( च. चि. स्था. अ. )-इत्यन्तेन च चिकित्सास्थाने प्रमेहीमात्रसंबन्धितया अनूद्य चिकित्सायां संयोजिताः । तस्माद्भाविनीं मधुमेहतामाश्रित्य सर्वे एव मेहा मधुमेहशब्दवाच्याः । उक्तं हि वाग्भटे,-"मधुरं यच्च मेहेषु प्रायो मध्विव मेहति । सर्वेऽपि मधुमेहाख्या माधुर्याच्च तनोरतः" ( वा. नि. स्था. अ. १० ) इति । गदाधरेण तु पिडकासंबन्धेनैव मधुमेहत्वमुक्तं, यतश्चरके कियन्तः शिरसीयाध्याये ( च. सू. स्था. अ. १७ ) मधुमेहमभिधाय पिडका उक्ता इति । तन्न मनोहरं, तत्र मधुमेहशब्देन प्रमेहमात्राभिधानात् । यदि तु मधुमेह एवाभीष्टः स्यात्, तदा 'उपेक्षयाऽस्य जायन्ते'-इति उपेक्षणाभिधानमनुपपन्नं स्यात् पिडकानां च मधुमेहभवानां चिकित्सोपदेशो व्यर्थः स्यादिति । कुलजमेहस्यासाध्यतामसङ्गेनापरेषामपि कुलजानामसाध्यत्वमाह-ये चापीत्यादि । केचिदिति कुष्ठादयः । कुलजा इति पितृपितामहादिसंभूताः । एतेन प्रमेहि-पितृपितामह-मातामहस्यापि प्रमेहसाध्यं दर्शयति । ननु, यस्य पितामहः प्रमेही तस्य पिताऽपि प्रमेहिजातत्वात्; तथाच सति 'जातः प्रमेही मधुमेहिनो वा न साध्य उक्तः स हि बीजदोषात्'—इत्यनेनैव गतार्थम् । नैवं, न हि प्रमेहिना जात इत्येतावता उत्पन्नमात्र एव प्रमेही भवति, किं तर्हि कालवशेन दुष्टाभिव्यक्त्या; यथा-कुष्ठिजातस्य कुष्ठम्, एतेन यदा अनतिदुष्टबीजेन प्रमेहिजातेन पित्रा जन्यते पुरुषः प्रमेही सोऽप्यसाध्य इति । कुलजा इत्यनेनैव मेहस्याप्यसाध्यतायां लब्धतायां पुनस्तद्वचनं प्रमेहाणां प्रायेण सन्तानानुबन्धित्वप्रदर्शनार्थम् । उक्तं च,-'प्रमेहोऽनुसङ्गिनाम्' ( च. सू. स्था. अ. २५ )—इति ॥ २२ ॥

भा० टी०—यदि किसी को पहले प्रमेह हुआ हो और उसके लड़के को भी प्रमेह हो तो वह प्रमेह अच्छा नहीं होता क्योंकि वह बीज दोष से प्रमेह पैदा होता है। इसी प्रकार दूसरे रोग भी यदि पिता के ज़रिये सन्तान में आ जांय, तो वे असाध्य होते हैं ॥ २२ ॥

### अथ मधुमेहस्य लक्षणम् ।

( Diabetes Mellitus ) डाइबिटीज् मीलीटस

उपेक्षया हि पित्तकफजानामपि मधुमेहत्वं प्रदर्शयितुमाह—

सर्वं एव प्रमेहास्तु कालेनाप्रतिकारिणः ।
मधुमेहत्वमायान्ति तदाऽसाध्या भवन्ति हि ॥ २३ ॥

( सु० नि० अ० ६ )

मधुमेहे मधुसमं जायते स किल द्विधा ।
क्रुद्धे धातुक्षयाद्वायौ दोषावृतपथेऽथवा ॥ २४ ॥
आवृतो दोषलिङ्गानि सोऽनिमित्तं प्रदर्शयन् ।
क्षणात्क्षीणः क्षणात्पूर्णो भजते कृच्छ्रसाध्यताम् ॥ २५ ॥
मधुरं यच्च मेहेषु प्रायो मध्विव मेहति ।
सर्वेऽपि मधुमेहाख्या माधुर्याच्च तनोरतः ॥ २६ ॥

( वा० नि० अ० १० )

म०—सर्वं एवेत्यादि । धातुक्षयावरणाभ्यां कुपितवातेन मधुमेहसम्भवमाह-मधुमेह इत्यादि । मधुसममिति 'मूत्रम्' इति शेषः । स इति मधुमेहः । सावरण-लिङ्गमाह—आवृत इत्यादि । आवृत इति आवृतवातकृतः । दोषलिङ्गानीति येन पित्तादिना आवृतस्तस्य वातस्य च लिङ्गानि प्रदर्शयति । अनिमित्तमकस्मात् । क्षीणः क्षणात् क्षणात्पूर्ण इति आवरणेन पुनः पूर्णो भवन् कृच्छ्रसाध्यो भवति । तथा च चरकः,—"[3]समारुतस्य पित्तस्य कफस्य च मुहुर्मुहुः । दर्शयत्याकृतिं गत्वा क्षयमाप्याय्यते पुनः" (च. सू. स्था. अ. १७)–इति । धातुक्षयकुपितवातजस्य तु केवल-वातजमेव लिङ्गम् । गदाधरस्त्वाह,–मधुमेहः सावरणवायुनैव क्रियते । यदाह चरकः– "तैरावृतगतिर्वायुरोज आदाय गच्छति । यदा बस्तिं तदा कृच्छ्रो मधुमेहः प्रवर्तते" (च. सू. स्था. अ. १७ )–इति । केवलवातजेषु तु कषायादिवमनाद्यतियोगादि-कृतेषु धातुक्षयजेषु वायो रावरणं नास्तीति भेदः । मधुमेहशब्दप्रवृत्तौ निमित्तमाह–मधुरं यच्च मेहेष्वित्यादि ॥ २३–२६ ॥

---

१–मधुसममित्यत्र मूत्रमिति शेषः । २ स मधुमेहः ।

३ स मधुमेहः मारुतस्य वायोः, पित्तस्य कफस्य च मुहुर्मुहुर्वारम्वारमाकृतिं लिङ्गं दर्शयति, क्षयं गत्वा पुनराप्यायते पूर्णो भवतीत्यर्थः ।

भा० टी०—मधुमेह का लक्षण-सभी प्रमेह ठीक तरह से चिकित्सा न करने से पुराने हो जाने पर मधुमेह हो जाते हैं, और तब वे असाध्य हो जाते हैं। मधुमेह में पेशाब शहद की तरह होता है। वह मधुमेह दो तरह से होता है. एक धातुओं के क्षीण हो जाने पर कुपित वायु से, और दूसरा दोषों के द्वारा वायु के मार्ग रुक जाने पर कुपित वायु से। दोषों के द्वारा आवृत वात से उत्पन्न मधुमेह उन दोषों के और वात के लक्षणों को प्रकट करता हुआ विना कारण ही क्षण भर में बन्द हो जाता है और क्षण भर में आवरण कारक दोषों से फिर जारी होकर कृच्छ्र साध्य हो जाता है। पेशाब का रंग और स्वाद मधु के समान मीठा होने और शरीर के भी मीठा हो जाने से सभी प्रमेह मधुमेह कहलाते हैं ॥ २३-२६ ॥

## अथ प्रमेहपिडकानिदानम् ।

( Carbuncle ) कारबङ्कल

प्रमेहोपेक्षया पिडकासम्भवं दर्शयितुमाह—

> शराविका कच्छपिका जालिनी विनताऽलजी ।
> मसूरिका सर्षपिका पुत्रिणी सविदारिका ॥ २७ ॥
> विद्रधिश्चेति पिडकाः प्रमेहोपेक्षया दश ।
> सन्धिमर्मसु जायन्ते मांसलेषु च धामसु ॥ २८ ॥

( सु० नि० अ० ६ )

म०—शराविकेत्यादि । इह दशपिडकासु विनतायाः पाठो भोजादिरुद्धः, भोजे हि नव पिडकाः; तद्यथा—"शराविका सर्षपिका कच्छपिका जालिनी तथा । कुलत्थिकाऽलजी पुत्री विदारी विद्रधी तथा ॥ नवैताः पिडका ज्ञेयाः"—इत्यादि । कुलत्थिका भोजे मसूरिका ज्ञेयाः, किन्तु भोजे एव विनता न्यूनेति वक्तुं सकरं; सुश्रुते चरके च विनताया दर्शनात् । चरके तु सप्त पिडकाः। तद्यथा—"शराविका कच्छपिका जालिनी सर्षपी तथा । अलजी विनताख्या च विद्रधी चेति सप्तमी" ( च. सू. स्था. अ. १७ )-इति । तत्र प्रायोभावात् सप्तानामभिधानम् । यतस्तेनैव कियन्तः शिरसीये "तथाऽन्याः पिडकाः सन्ति" इत्यादिनाऽधिकपिडकासंभवः सूचितः। प्रमेहोपेक्षयेत्यभिधानं मधुमेहेन संबन्धेन च पिडकासंभवं दर्शयति । अत एव—"विना प्रमेहमप्येताः" (च. सू. स्था. अ. १७) इत्यत्र प्रमेहमात्रग्रहणं कृतम् । धामस्विति स्थानेषु ॥ २७-२८ ॥

भा० टी०—प्रमेह की ठीक दवा न होने से पुराने हो जाने पर सन्धियों में मर्म स्थानों में और मांसल ( जहां अधिक मांस हो ) स्थानों में दश पिडकियां पैदा हो जाती है। उनके नाम हैं—१ शरावीका २ कच्छपिका, ३ जालिनी ४ विनता ५ अलजी ६ मसूरिका ७ सर्षपिका ८ पुत्रिका ६ विदारिका १० विद्रधि ॥ २७-२८ ॥

अथ सर्वासां प्रमेहपिडकानां लक्षणानि ।

सर्वासामाकृतिमाह—

अन्तोन्नता तु तद्रूपा निम्नमध्या शराविका ।
गौरसर्षपसंस्थाना तत्प्रमाणा च सर्षपी ॥ २६ ॥
सदाहा कूर्मसंस्थाना ज्ञेया कच्छपिका बुधैः ।
जालिनी तीव्रदाहा तु मांसजालसमावृता ॥ ३० ॥
अवगाढरुजाक्लेदा पृष्ठे वाऽप्युदरेऽपि वा ।
महती पिडका नीला विनता नाम सा स्मृता ॥ ३१ ॥
महत्यल्पचिता ज्ञेया पिडका चापि पुत्रिणी ।
मसूराकृतिसंस्थाना विज्ञेया तु मसूरिका ॥ ३२ ॥
रक्ता सिता स्फोटचिता दारुणा त्वलजी भवेत् ।
विदारीकन्दवद्वृत्ता कठिना च विदारिका ॥ ३३ ॥
विद्रधेर्लक्षणैर्युक्ता ज्ञेया विद्रधिका तु सा ।

नि० अ० ६ )

म०—अन्तोन्नतेत्यादि । तद्रूपेति शरावरूपा । अल्पचिता अल्पपिडकान्तराचिता । विद्रधेर्लक्षणैर्युक्तेत्यभिधानेन विद्रधेरस्या भेदो बोध्यः ॥ २९-३३ ॥

भा० टी०—पिडकाओं की आकृति-शराव ( कसो । या परई ) की तरह आखीर में किनारे पर ऊँचो और बीच में नीची ( खाल ) होने से शराविका कहलाती है। सफ़ेद सरसो के समान सफ़ेद और उतनीहो बड़ो होने से सर्षपिका कहलाती है। जो पिड़का कछुवे की पीठ की तरह ऊंची और जिसमें जलन होती है उसे कच्छपिका कहते हैं। जिसमें बड़ी तेज जलन हो और अगल बगल मांस का जाल ऐसा देख पड़े उसे जालिनो कहते हैं। जिसमें पीड़ा भीतर हो भीतर हो और मवाद भीतर हो

रंग में नीली तथा बड़ी हो उसे विनता कहते हैं, यह पिड़का पीठ या पेट में हुआ करती है। जो देखने में बड़ी और जिसके अगल बगल फुंसियां कम हों उसे पुत्रिणी कहते हैं। जो मसूर की सूरत की हो उसे मसूरिका कहते हैं। जो लाल या सफेद, कड़ी और फफोलों से घिरी हो उसे अलजी कहते हैं। जो विदारी कन्द (पाताल कोंहड़ा) की तरह गोल और कड़ी तथा बड़ी हो उसे विदारिका कहते हैं। जो विद्रधि के लक्षणों से मिलती जुलती हो उसे विद्रधिका कहते हैं॥ ३१-३३॥

अथ पिडकानामुत्पत्तौ कारणानि ।

पिडकानामारम्भककारणमाह—

ये यन्मयाः स्मृता मेहास्तेषामेतास्तु तन्मयाः॥ ३४॥
विना प्रमेहमप्येता जायन्ते दुष्टमेदसः ।
तावच्चैता न लक्ष्यन्ते यावद्वास्तु[1]परिग्रहाः॥ ३५॥

(च० सू० अ० १७)

म०—ये यन्मया इत्यादि । तन्मया इति निर्देशः कश्चिदपवादविषयेऽप्युत्सर्गोऽभिनिविशत इति ङीपं बाधित्वा टापा साधनीयः। नद्येरं मन्वा केचित् 'तत्कृताः' इति पाठान्तरं कृतम् । अयमत्र पिण्डार्थः—यो यद्दोषोल्बणो मेहस्तद्दोषोल्बणेनैव पिडका भवन्ति । ननु, जालिन्यां तीव्रदाहः पठितः, स च पित्तकृतः, भोजेऽपि जालिनी पित्तकृतैव पठिता, यथा—"परस्पराभिसंबन्धा पिडका चैकदेशजा । पित्तोत्कटा दाहवती भृशरुग् जालिनी मता"—इति । तत्कथं जालिन्यां पित्तजत्वानियमात् ये यन्मया इत्यादिग्रन्थार्थसंगतिः? नैवं, प्रचुरपिडकानां तन्मयत्वेन बाहुल्येनाभिधानं यथा—छत्रिणो गच्छन्तीति गदाधरः, किंवा स्वमहिम्ना जालिनी पित्तप्रधाना भवति, श्लेष्मवातजमेहभवत्वेन श्लेष्मवातप्रधाना च; तेन दोषत्रयप्रधानत्वात् सदोषा सा भवति, । अन्यस्त्वाह,—तीव्रदाहत्वं पित्तोत्कटत्वं च पैत्तिकमेहजायां जालिन्यामवगन्तव्यम् अन्यमेहजा त्वन्यदोषोत्कटा निर्दाहा च। अत एव चरके जालिनी कफोल्बणा निर्दाहा एव पठिता। तद्यथा,—"शराविका कच्छपिका जालिनी चेति दुःसहा। जायन्ते ता ह्यतिबलाः प्रभूतश्लेष्ममेदसाम् ॥ स्तब्धा सिराजालवती स्निग्धस्रावा महाश्रया। रुजानिस्तोदबहुला सूक्ष्मच्छिद्रा च जालिनी" (च. सू.

[1]—वास्तु प्रत्याभ्यन्तरम् । वास्तुपरिग्रहानन्तरमेव [illegible] ।

स्था. अ. १७ )—इति । न चातिप्रसक्तिः, उक्तं हिं चरके समर्थ्यते, अस्मिंश्च समाधाने ये यन्मया इत्यादि न व्याहन्यते । चरकभोजवचनयोश्चाविरोधार्थं यत्नान्तरं मृग्यम् । कार्तिकस्त्वाह,—पाककाले पित्तोत्कटत्वं, "तस्माद्धि सर्वे परिपाककाले पचन्ति शोथास्त्रय एव दोषाः" ( सु. सू. स्था. अ. १७ )—इति वचनात्; एतत्तु सर्वत्राविशेषान्नाद्रियन्ते ॥ ३४ ॥ ३५ ॥

भा०टी०—प्रमेह में जो दोष अधिक होता है, उन्हीं दोषों से पिडकायें भी होती हैं, अर्थात् पिडकाओं में उन्हीं दोषों का लक्षण देख पड़ता है। ये पिडकायें प्रमेह के विना भी मेदो धातु के खराब हो जाने से पैदा हो जाती हैं। ये तब तक नहीं जान पड़ती, जब तक पूरी तरह से थाल्हा नहीं बाँध लेतीं ॥ ३४-३५ ॥

## अथासाध्यपिडकानां लक्षणानि ।

असाध्यपिडकालक्षणमाह—

**गुदे हृदि शिरस्यंसे पृष्ठे मर्मसु चोत्थिताः ।**
**सोपद्रवा दुर्बलाग्नेः पिडकाः परिवर्जयेत् ॥ ३६ ॥**

( सु० नि० अ० ६ )

इति श्री माधवकरविरचिते माधवनिदाने प्रमेहप्रमेह पिडकानिदानं समाप्तम् ।

म०—गुदे इत्यादि । सोपद्रवा इति उपद्रवाश्च तृट्कासादयः। यथाह चरकः—"तृट्-कास-मांससंकोच-मोह-हिक्का-मद-ज्वराः । विसर्प-मर्मसंरोधाः पिडकानामुपद्रवाः" ( च. सू. स्था. अ. १७ )—इति । पिडकास्तु प्रायेणाधःकाय एव, दोषदूष्याणामधः प्रसरणात्, "रसायनीनां च दौर्बल्यान्नोर्ध्वमुत्तिष्ठन्ति प्रमेहिणां दोषाः"—( सु. चि. स्था. अ. १२ ) इति वचनाच्च । केचिदाहुः—स्त्रीणां प्रमेहो न भवतीति । तथाच तन्त्रान्तरे,—"रजः प्रसेकान्नारीणां मासि मासि विशुध्यति । सर्वं शरीरं दोषाश्च[1] न प्रमेहन्त्यतः स्त्रियः"—इति । किन्तु स्त्रीषु प्रमेहदर्शनात्, [2]एतद्धेतुबलादन्यरोगसम्भवत्वाच्चैतत् प्रायोवादमाश्रित्योक्तम् । मेहनिवृत्तिलक्षणं च सुश्रुते पठितम् । तद्यथा,—"प्रमेहिणो यदा मूत्रमनाविलमपिच्छिलम् । विशदं तिक्तकटुकं तदाऽऽरोग्यं प्रचक्षते" ( सु. चि. स्था. अ. १२ )—इति ॥ ३६ ॥

इति श्री कण्ठदत्तकृतायां मधुकोश व्याख्यायां प्रमेहप्रमेह पिडका निदानं समाप्तम् ।

भा० टी०—पिडकाओं के असाध्य लक्षण—गुदा, हृदय, शिर, कन्धा पीठ, और मर्म स्थानों में उत्पन्न, कमजोरी की हालत में उत्पन्न, और उपद्रवों के पैदा हो जाने पर पिडकायें असाध्य होती हैं। ऐसी हालत देखकर चिकित्सा न करना ही ठीक है ॥ ३६ ॥

---

१ दोषाश्च विशुद्ध्यन्तीत्यर्थः । २ एतद्धेतुबलात् मासिमासि रजः प्रसेकरूपकारणसामर्थ्यात् अन्येषां रोगाणां सम्भवो भवत्येव यदा तर्हि कथं न प्रमेहोत्पत्तिः स्यात् । एतत् "न प्रमेहन्त्यतः स्त्रियः" इति । प्रायोवादमिति उक्तश्लोके प्रायःपदमाध्याहार्यं प्रायो बाहुल्येन स्त्रीणां प्रमेहो न भवतीत्यभिप्रेत्योक्तमित्यर्थः ।

( बहुतों का कहना है कि स्त्रियों को प्रमेह नहीं होता—क्योंकि हर महीने मासिक धर्म हो जाने से स्त्रियों का शरीर और वात आदि दोष की जो कुछ खराबी रहती है, वह दूर हो जाती है। परन्तु यह बात सर्वांश में ठीक नहीं, क्योंकि स्त्रियों को प्रमेह होते देखा गया है, प्रमेह के कारण सेवन करने से प्रमेह जरूर ही होगा। चाहे पुरुष हो या स्त्री, किन्तु इतना अवश्य है कि स्त्रियों को प्रमेह प्रायः कम होता है। )

इति श्रीहरिनारायणशर्म्मवैद्यकृतायां निदानदीपिकायां हग्विनिश्चय-भाषाटीकायां प्रमेहनिदानम् ।

## अथ मेदोनिदानम् ।

( Ob sity ) ओबेसिटी ।

### अथ मेदोरोगस्य हेतु-सम्प्राप्ति-लक्षणानि ।

"विना प्रमेहमप्येता जायन्ते दुष्टमेदसः" इति मेदः कीर्तनात् पिडकानन्तरं मेदोनिदानमाह—

अव्यायाम—दिवास्वप्न—श्लेष्मलाहार—सेविनः ।
मधुरोऽन्नरसः प्रायः स्नेहान्मेदः प्रवर्धयेत् ॥ १ ॥
मेदसाऽऽवृतमार्गत्वात् पुष्यन्त्यन्ये न धातवः ।
मेदस्तु चीयते तस्मादशक्तः सर्वकर्मसु ॥ २ ॥
क्षुद्रश्वास—तृषा—मोह—स्वप्न—क्रथन—सादनैः ।
युक्तः क्षुत्—स्वेद—दुर्गन्धैरल्पप्राणोऽल्पमैथुनः ॥ ३ ॥
मेदस्तु सर्वभूतानामुदरेष्वस्थिषु स्थितम् ।
अत एवोदरे वृद्धिः प्रायो मेदस्विनो भवेत् ॥ ४ ॥
मेदसाऽऽवृतमार्गत्वाद्वायुः कोष्ठे विशेषतः ।
चरन् सन्धुक्षयत्यग्निमाहारं शोषयत्यपि ॥ ५ ॥
तस्मात् स शीघ्रं जरयत्याहारमभिकाङ्क्षति ।
विकारांश्चाप्नुते घोरान् कांश्चित् कालव्यतिक्रमात् ॥ ६ ॥
एतावुपद्रवकरौ विशेषादग्निमारुतौ ।

एतौ तु दहतः स्थूलं वनदावो वनं यथा ॥ ७ ॥
मेदस्यतीव संवृद्धे सहसैवानिलादयः ।
विकारान् दारुणान् कृत्वा नाशयन्त्याशु जीवितम् ॥ ८ ॥
मेदोमांसातिवृद्धत्वाच्चलस्फिगुदरस्तनः ।
अयथोपचयोत्साहो नरोऽतिस्थूल उच्यते ॥ ९ ॥

इति श्री माधवकरविरचिते माधवनिदाने मेदोरोगनिदानं समाप्तम् ।

म०—'विना प्रमेहमप्येता जायन्ते दुष्टमेदस' इत्यत्र मेदःसंकीर्तनात् मेदोदुष्टेरभिधानं, मेदोदुष्ट्या च स्थौल्यम् । मधुरोऽन्नरस इति मधुरप्राय आम इवान्नरस संभवन् स्नेहान्मेदो जनयति । सुश्रुतेऽप्युक्तम्,—"आम इवान्नरसो मधुरतरश्च भवति"—इत्यादि । ननु, मेदस्विनस्तीक्ष्णाग्नित्वात् कथमाम इवान्नरसो भवति ? यदुक्तं चरकेण,—"चरन् सन्धुक्षयत्यग्निम्" ( च. सू. स्था. अ. २१ )—इति । अग्नौ च मन्दे आमोत्पादः, यदाह,—"आमाशयस्थः कायाग्नेर्दौर्बल्यादविपाचितः । आद्य आहारधातुर्यः स आम इति कीर्तितः"—इति उच्यते, श्लेष्मलाहाराध्यशनशीलत्वेन कदाचित् कालव्यतिक्रमभोजनेन च बहुविकारकरणाग्निव्यापत्तेरन्नरसस्यामतुल्यता, अथवा मधुरतरान्नरसोपलिप्तेऽन्नवहस्रोतसि सर्व एवान्नरसो मधुरतरो निष्पद्यते, यथा पित्तयुक्तेऽन्नवहस्रोतसि मधुररसस्यापि विदाहः । यदुक्तं,—"स्रोतस्यन्नवहे पित्तं पक्तौ वा यस्य तिष्ठति । विदाहि भुक्तमन्यद्वा तस्याप्यन्नं विदह्यते" ( सु. सू. स्था. अ. ४६ )—इति; स चामतुल्यत्वादाम इत्युच्यते । अशक्तः सर्वकर्मस्विति मेदसः सौकुमार्यात् । क्षुद्रश्वासः 'रूक्षायासोद्भव' इत्यादिनाऽभिहितः । क्रथनमकस्मादुच्छ्वासावरोधः । चरन् सन्धुक्षयत्यग्निमिति मेदोरुद्धमार्गत्वात् कुम्भकारपवनन्यायेनान्तर्बलवान् वृद्धो वायुरग्निं दीपयति । अतिवृद्धस्तु वायुरग्निवैषम्यजनकः । विकारांश्चाप्नुते घोरानिति वातविकाराणामन्यतमान्; कालव्यतिक्रमात् भोजनकालव्यतिक्रमात् । विकारान् दारुणानिति प्रमेहपिडका-ज्वर-भगन्दर-विद्रधि- वातरोगाणामन्यतमान् । अयथोपचयोत्साह इति अयथावन्मांसोपचय उत्साहश्च यस्य स तथा ॥ १-९ ॥

इति श्री कण्ठदत्त कृतायां मधुकोष व्याख्यायां मेदोरोगनिदानं समाप्तम् ।

भा० टी०—मेदो निदान–कुछ परिश्रम न करने, दिन में सोने, कफकारी आहार करने से भोजन का अंश ( रस ) ठीक तरह से न पककर आम की तरह मधुर होकर अपनी चिकनाई से मेदधातु ( चर्बी ) को बढ़ाता है । चर्बी के अधिक बढ़ जाने पर सब धातुओं के मार्ग रुक जाने से वे धातु जहां के तहां ही रह जाते हैं, अन्य धातु को नहीं बढ़ा पाते सिर्फ चर्बी ही बढ़ती रहती है । उसके बोझ से मनुष्य शक्तिहीन

होकर कोई भी काम नहीं कर सकता । जरा सा काम करने पर उसका सांस फूलने लगता है । प्यास, सुस्ती, निद्रा, एकाएकी कुछ देर के लिए सांस का न चलना, अधिक भोजन, पसीना, शरीर में बदबू होना, निर्बलता, नामर्दी ये सब विकार मेदस्वी पुरुष के बराबर हुआ करते हैं । स्वभावतः थोड़ा बहुत मेद सभी प्राणियों के पेट और हड्डियों में रहा करता है, इसलिए मेदस्वी लोगों का अधिकतर पेट ही बढ़ता है । मेद शरीर के अन्दर सब रास्तों को रोक देता है, इसलिए वायु भी विशेष करके पेट ही में रहकर अग्नि को तेज करता रहता है और भोजन जल्दी सुखा डालता है, याने भोजन जल्दी पच जाता है, और फिर जल्दी ही भोजन करने की इच्छा होती है । यदि भोजन में कुछ भी देर हो जाय तो अनेक वातरोग पैदा हो जाते हैं । मेदस्वी मनुष्य के शरीर में अग्नि, वायु, दोनों प्रबल होकर अनेक रोगों को पैदा कर देते हैं । ये शरीर का ऐसा नाश करने वाले होते हैं जैसे वनाग्नि वन को । अधिक मेद ( चर्बी ) के बढ़ जाने पर वायु आदि भयङ्कर रोगों को पैदा कर जल्दी ही प्राणनाश कर देते हैं । मोटे आदमी का मांस और चर्बी अधिक बढ़ जाती है और विशेष कर चूतड़, पेट और स्तन इतना मोटा हो जाता है कि चलते समय हिला करता है । उनके शरीर की मोटाई भद्दी मालूम होती है, उनका उत्साह भी क्षणिक और बेढंगा होता है ॥ १-६ ॥

इति श्रीहरिनारायणशर्मवैद्यकृतायां निदानदीपिकायां रुग्विनिश्चय-
भाषाटीकायां मेदोनिदानम् ।

## अथोदरनिदानम् ।

### अथोदररोगस्य मुख्यं निदानम् ।

उदरोत्सेधसाधर्म्यादुदरानिदानम् । उदरस्य विशेषेण वह्निदुष्टिजन्यत्वमाह—

**रोगाः सर्वेऽपि मन्देऽग्नौ सुतरामुदराणि च ।**
**अजीर्णान्मलिनैश्चान्नैर्जायन्ते मलसञ्चयात् ॥ १ ॥**

( वा॰ नि॰ अ॰ १२ )

म॰—रोगा इत्यादि । अग्निमान्द्यं च दोषत्रयजनकम् । यदुक्तम्—"सुपोन्द्रग्निवले हीने कुप्यन्ति पवनादयः" ( च. सू. स्था. अ. ६ )—इति । मलिनैरिति अत्यर्थदोषजनकैर्विरुद्धाध्यशनादिभिः । मलसंचयादिति मला दोषा पुरीषादयश्च, तेषामतिवृद्धत्वात् । तन्त्रान्तरं च—"अतिसंचितदोषाणां पापं कर्म च

१ सुतरामतिशयेन ॥

कुर्वताम् । उदराण्युपजायन्ते मन्दाग्नीनां विशेषतः"-इति। यद्यपि मन्दाग्नित्वमलिनान्नत्वयोः प्रत्येकमपि दोषत्रयजनकत्वमस्ति तथाऽप्यत्रोभयहेतुजनकत्वेन दोषदुष्टिप्रकर्षः ख्याप्यते, अत एव दुष्टिप्रकर्षख्यापनार्थं मलसंचयादित्यत्र संपूर्वं कृतवान् ॥ १ ॥

भा० टी०—उदर रोग का निदान-यों तो सभी रोग अग्नि के मन्द होने पर होते हैं, परन्तु उदर रोग विशेषकर मन्दाग्नि से होते हैं। अजीर्ण, मलिन अन्न, अनमेल की चीजें, विना भूख खाना, बासी, सड़ा, बदबूदार और बेवक्त खाना। मल-कुपित वात आदि दोष, तथा पुरोष का संचय, उदर रोग का कारण होता है ॥ १ ॥

### अथोदररोगस्य संप्राप्तिः ।

संप्राप्तिमाह—

**रुद्ध्वा स्वेदाम्बुवाहीनि दोषाः स्रोतांसि संचिताः ।**
**प्राणाग्न्यपानान् संदूष्य जनयन्त्युदरं नृणाम् ।**

( च० चि० अ० १८ )

म०—रुद्ध्वेत्यादि स्वेदाम्बुवाहीनीति स्वेदवहानि अम्बुवहानि च अनयोश्च भेदः, "उदकवहानां स्रोतसां तालुमूलं क्लोम च; स्वेदवहानां स्रोतसां मेदो, मूलं, लोमकूपाश्च" ( च. वि. स्था. अ. ५ ) इत्यनेनोक्तो ज्ञेयः । स्रोतोरोधश्चात्र बहिरेव न पुनरन्तः । यदुक्तं चरके-"स्वेदस्तु बाह्येषु स्रोतःसु प्रतिहतगतिस्तिर्यगवतिष्ठमानस्तदेवोदकमाप्याययति"—( च. चि. स्था. अ. १३ ) इति । अत एवोदरपूर्णता अन्नरसेन । प्राणाग्नीति पुनरग्निदूषणाभिधानेन मन्दस्याप्यग्नेः पुनर्दोषकृतं सुतरां मान्द्यं बोधयति । दोषसञ्चयगतेनापि वायुना प्राणापानयोर्दूषणं न विरुद्धं, यतो वायुना वाय्वन्तरदुष्टिः क्रियत एव । सुश्रुते तु पूर्वरूपमस्योक्तं, तद्यथा—तत्पूर्वरूपं बल-वर्ण काङ्क्षा-वली विनाशो जठरे हि राज्यः । जीर्णापरिज्ञानविदाहवत्यो वस्तौ रुजः पादगतश्च शोथः" ( सु. नि. स्था. अ. ७ ) इति ॥ २ ॥

भा० टी०—उदर रोग की सम्प्राप्ति-पहले पेट में दोष सञ्चित होते हैं बाद स्वेदवाही और जलवाही सोतोंका रास्ता बन्द कर देतेहैं। इसमें प्राणतथा अपान वायु और उदराग्नि भी बिगड़ जाती है। स्वेदवाही और जलवाही स्रोत बाहर की तरफ बन्द होते हैं, भीतर की तरफ नहीं। भीतर तो वही पसीना और जल बढ़कर पेट को फुलाता ही है। इस प्रकार हर तरह से पेट में दोष के इकट्ठे हो जाने पर पेट बड़ा हो जाता है, उसे ही उदर रोग कहते हैं ॥ २ ॥

## अथोदररोगस्य सामान्यलक्षणानि ।

सर्वेषामुदराणां सामान्यलक्षणमाह—

आध्मानं गमनेऽशक्तिर्दौर्बल्यं दुर्बलाग्निता ।
शोथः सदनमङ्गानां सङ्गो वातपुरीषयोः ॥ ३ ॥
दाहस्तन्द्रा च सर्वेषु जठरेषु भवन्ति हि ।
पृथग्दोषैः समस्तैश्च प्लीहबद्धक्षतोदकैः ॥ ४ ॥
सम्भवन्त्युदराण्यष्टौ तेषां लिङ्गं पृथक् शृणु ।

(उ० नि० अ० ७)

म०—आध्मानमित्यादि । दुर्बलाग्नितेति मन्दोऽग्निर्यद्यप्यत्र हेतुस्तथाऽप्यग्नेरतिशयदौर्बल्यं लिङ्गत्वेन ज्ञेयम् । उदराण्यष्टाविति यकृदाल्युदरस्य प्लीहोदरेण सार्धं समानचिकित्स्यतया तथोत्पत्तिविशिष्टदकोदरात् क्रमेण भूतदकोदरस्यापि समानलिङ्गचिकित्सितत्वेनाभिन्नत्वात्, अष्टावेवोदराणि भवन्ति । प्लीहोदरादीनि च यद्यपि चत्वारि दोषजानि, तथाऽपि हेतु-लिङ्ग-चिकित्सा-भेदात् पृथगुक्तानि ॥ ३ ॥ ४ ॥—

उदर रोग का सामान्य लक्षण—पेट फूलना, चलने में तकलीफ होना, शरीर में ताकत कम हो जाना, मन्दाग्नि हो जाना, पेट पर सूजन होना, शरीर सब सुस्त रहना, हवा न खुलना, पाखाना न होना, जलन, तन्द्रा, ये सब लक्षण प्रायः सभी उदर रोगों में होते हैं। उदर रोग आठ प्रकार का होता है—वातोदर १, पित्तोदर २, कफोदर ३, सन्निपातोदर ४, प्लीहोदर ५, बद्धोदर ६, क्षतोदर ७, दकोदर ८, इनका अलग अलग लक्षण आगे सुनो ॥ ३-४ ॥

## अथ वातोदरस्य लक्षणानि ।

वातोदरलक्षणमाह—

तत्र वातोदरे शोथः पाणि-पत्-नाभि-कुक्षिषु ॥ ५ ॥
कुक्षि पार्श्वोदर-कटी-पृष्ठ-रुक् पर्वभेदनम् ।
शुष्ककासोऽङ्गमर्दोऽधोगुरुता मलसंग्रहः ॥ ६ ॥

श्यावारुणत्वगादित्वमकस्माद् वृद्धि-ह्रास-वत् ।
सतोद-भेदमुदरं तनु-कृष्ण-सिरा-ततम् ॥ ७ ॥
आध्मातदृतिवच्छब्दमाहतं प्रकरोति च ।
वायुश्चात्र सरुक्शब्दो विचरेत्सर्वतो गतिः ॥ ८ ॥

( वा० नि० अ० १२ )

म०—तत्रेत्यादि । अकस्माद् वृद्धि-ह्रास-वदिति अनियतवृद्धि-ह्रास-युक्तमुदरम् । आध्मातदृतिवादिति वातपूर्णचर्मपुटवदिति ॥ ५–८ ॥

भा० टी०—वातोदर के लक्षण—हाथ, पैर, नाभि और कोख में सूजन, कोख, पसुली, कमर, पीठ में पीड़ा, जोड़ों में दर्द, सूखी खांसी, अँगड़ाई, नाभि के नीचे भारीपन मालुम होना, पाखाना न होना, त्वचा, नख, नेत्र मूत्र, मल और, मुंह का स्याह वा लाल होना, विना कारण पेट कभी फूल जाना और कभी पचक जाना, पेट में सूई चुभोने और फोड़ने जैसी पीड़ा होना, पेट पर काली काली नसें दिखलाई देना, पेट में बजाने पर हवा भरे फुटबाल की तरह धप् धप् आवाज होना । पेट के अन्दर वायुका शब्द और पीड़ा के साथ घूमना, ये सब लक्षण वातोदर में होते हैं ॥ ५–८ ॥

### अथ पित्तोदरस्य लक्षणानि ।

पैत्तिकमाह—

पित्तोदरे ज्वरो मूर्च्छा दाहस्तृट्कटुकाऽऽस्यता ।
भ्रमोऽतिसारः पीतत्वं त्वगादावुदरं हरित् ॥ ९ ॥
पीत-ताम्र-सिरा-नद्धं-सस्वेदं सोष्म दह्यते ।
धूमायते मृदुस्पर्शं क्षिप्रपाकं प्रदूयते ॥ १० ॥

( वा० नि० अ० १२ )

म०—पित्तेत्यादि । दह्यत इति उदरमात्रं दह्यते । दाहस्तु सकलदेहस्यैव बोद्धव्यः । धूमायते=धूम इवोर्ध्वमेति । क्षिप्रपाकमिति क्षिप्रपाकाज्जलोदरतां यातीत्यर्थः । प्रदूयते=व्यथते ॥ ९–१० ॥

भा० टी०—पित्तोदर के लक्षण—ज्वर, मूर्च्छा, शरीर में जलन, प्यास, मुंह का कड़वापन, भ्रम, पतला दस्त होना । त्वचा, नख, नेत्र, मूत्र, और मल पीला हो जाना, पेट

हरा हो जाना, पेट पर पीली या लाल नसों का दिखलाई पड़ना, पसीना होना, पेट के बाहर अन्दर गरम मालूम होना, धूँआ लगने जैसी तकलीफ होना, पेट मुलायम होना, जल्दी पेट पक कर जलोदर हो जाना, ये सब लक्षण पित्तोदर के होते हैं ॥९-१०॥

अथ कफोदरस्य लक्षणानि ।

श्लैष्मिकमाह—

श्लेष्मोदरेऽङ्गसदनं स्वाप-श्वयथु गौरवम् ।
निद्रोत्क्लेशोऽरुचिः श्वासः कासः शुक्लत्वगादिता ॥११॥
उदरं स्तिमितं स्निग्धं शुक्लराजीततं महत् ।
चिराभिवृद्धं कठिनं शीतस्पर्शं गुरु स्थिरम् ॥ १२ ॥

( [illegible] )

भा० टी०—कफ के उदर रोग में शरीर शिथिल रहता है और सुन्न हो जाता है, सूज जाता है, और बोझदार मालूम होता है। नींद अधिक आती है। जी मचलाता है। अरुचि होती है। श्वास कास होता है। त्वचा, नेत्र, मुख, मल, मूत्र, नाख, नख सफेद हो जाते हैं। पेट निश्चल, चिकना, सफेद शिराओं से घिरा हुआ, बड़ा, धीरे २ बढ़ने वाला, कड़ा, छूने पर ठण्डा, भारी और स्थिर (गुड़गुड़ न होना) होता है ॥११-१२॥

अथ सन्निपातोदरस्य लक्षणानि ।

सान्निपातोदरमाह—

स्त्रियोऽन्नपानं नख-लोम-मूत्र-विडार्तवैर्युक्तमसाधुवृत्ताः ।
यस्मै प्रयच्छन्त्यरयो गरांश्च दुष्टाम्बु-दूषीविष-सेवनाद्वा ॥ १३ ॥
तेनाशु रक्तं कुपिताश्च दोषाः कुर्युः सुघोरं जठरं त्रिलिङ्गम् ।
तच्छीतवाते भृशदुर्दिने च विशेषतः कुप्यति दह्यते च ॥ १४ ॥
स चातुरो मुह्यति हि प्रसक्तं पाण्डुः कृशः शुष्यति तृष्णया च
दूष्योदरं कीर्तितमेतदेव,

( [illegible] )

१—असाध्विति-असाधु असत् वृत्तं शील चरित्रमिति [illegible] ।

म०—स्त्रिय इत्यादि । स्त्रीग्रहणमविवेकिसंनिहितजनोपलक्षणम् । गरं= संयोगजं विषम् । दुष्टमम्बु=सगर-प्राणि-तृण-पर्णादि-कोथयुतं, विपमेवाग्न्याद्यु-पहतं मन्दप्रभावं वा दूषीविषमुच्यते । यदुक्तं,—"जीर्णं विषघ्नौषधिभिर्हतं वा दावाग्नि-वाता-ऽऽतप-शोषितं वा । स्वभावतो वा गुणविप्रहीनं विषं हि दूषीविष-तामुपैति" ( सु. क. स्था. अ. २ )—इति । तेनाशु रक्तमिति विषस्याग्नेयत्वेन रक्तदुष्टिः । कुपिताश्च दोषा इति स्वभावाद्दोषत्रयप्रकोपकं विषं भवति ) तत् शीतवातादिषु कुप्यतीति ।-दूष्योदरं कीर्तितमेतदेवेति एतदेव—सन्निपातोदरं दूष्यो-दरं कीर्तितं, न पुनरधिकमित्यर्थः । रक्तं दूष्यं दूषयित्वा भवतीति दूष्योदरं; किंवा परस्परं दूषयन्तीति दोषा एव दूष्यास्तैः कृतमुदरमिति ॥ १३-१४ ॥

भा० टी०—सन्निपातोदर के कारण और लक्षण—अक्सर खराब चाल चलनवाली स्त्रियाँ मर्द को अपने वश में अधीन करने के खयाल से भोजन में नाखून, रोयें, मूत्र बिल्ली आदिका पुरीष, रजोधर्म का खून, खिला देती हैं। दुश्मन भी बनावटी विष दे दिया करते हैं। खराब जल पीना, और गुणहीन विष ( दूषी विष ) खाना। ये सब चीजें पकती नहीं । इनसे सब दोष बिगड़ जाते हैं और खून खराब हो सन्निपातोदर पैदा हो जाता है। तीनों दोषों के उदररोग के लक्षण प्रकट हो जाते हैं। ठण्डी हवा चलने पर और बादलों से आकाश घिरे रहने पर बहुत बड़ी तकलीफ होती है। पेट में जलन होती है, बेहोशी आ जाती है । शरीर पाण्डुवर्ण का हो जाता है। देह दुबली हो जाती है। प्यास बहुत लगती है। इसी को कोई दूष्योदर भी कहते हैं। दूष्योदर नाम इस लिए पड़ा कि इसमें दूष्य(रक्त) की खराबी ज्यादा होती है॥१५॥

## अथ प्लीहोदरस्य लक्षणानि ।

( Splenic Enlargement ) स्पीलीनिक एनलार्जमेन्ट ।

प्लीहोदरमाह—

प्लीहोदरं कीर्तयतो निबोध ॥ १५ ॥
विदाह्यभिष्यन्दिरतस्य जन्तोः प्रदुष्टमत्यर्थमसृक् कफश्च ।
प्लीहाभिवृद्धिं कुरुतः प्रवृद्धौ प्लीहोत्थमेतज्जठरं वदन्ति ॥ १६ ॥
तद्वामपार्श्वे परिवृद्धिमेति विशेषतः सीदति चातुरोत्र ।
मन्दज्वराग्निः कफपित्तलिङ्गैरुपद्रुतः क्षीणबलोऽतिपाण्डुः ।
सव्यान्यपार्श्वे यकृति प्रवृद्धे ज्ञेयं यकृद्दाल्युदरं तदेव ॥ १७ ॥
( सु० नि० अ० ७ )

---

१—यकृद्दाल्युद—Hepatic Enlargement हेपैटिक एनलाजनमेन्ट

म०—प्लीहेत्यादि । असृक्कफश्चेत्यसृग्दुष्टयैव तत्तुल्यकारणतया पित्तदुष्टि-रप्युच्यते, विदाहिना रक्तं पित्तं च दूष्यते, अत एव पश्चात् वक्ष्यति.—'कफपित्तलिङ्गैरुपद्रुतः'—इति । अत्र पित्तस्य लिङ्गं मन्दज्वरः, कफस्य लिङ्गं मन्दाग्नित्व-मिति गदाधरः । प्लीहोदर एव यकृद्दाल्युदरस्यावरोधं दर्शयन्नाह—सव्यान्यपार्श्वे इत्यादि । सव्यान्यपार्श्वे=दक्षिणपार्श्वे । तद्वेति=तादृगमेव, प्लीहोदरसमभेव न विलक्षणमित्यर्थः । यकृद्दाल्यति=दोषैर्भेदयतीति यकृद्दाल्युदरम् ॥ १५–१७ ॥

भा० टी०—अब प्लीहोदर को सुनिये—विशेषकर विदाही और अभिष्यन्दी चीजों के सेवन से खून और कफ के अधिक खराब हो जाने पर पेटमें बाँयी तरफ प्लीहा ( तिल्ली ) बढ़जाती है । इससे रोगी को बड़ी तकलीफ होती है । मन्द मन्द ज्वर रहा करता है । भूख नहीं लगती । खाया हुआ हजम नहीं होता । कफपित्तके और भी लक्षण प्रकट हो जाते हैं । ताकत कम हो जाती है । शरीर पीला हो जाता है । इसी प्रकार दाहिनी तरफ यकृत्(जिगर)बढ़जाता है और उसमें भी ये ही सब[प्लीहोदर के] लक्षण होते हैं। प्लीहोदर को हिन्दी में बरबट और यकृद्दाल्युदर को बरमजिगर कहते हैं । यह रोग अक्सर बोखार के पुराने हो जाने पर होता है ॥ १६–१७ ॥

अथात्र दोषाणां सम्बन्धः ।

तत्र दोषसंबन्धमाह—

> उदावर्त-रुजा-ऽऽनाहैर्मोह-तृड्-दहन-ज्वरैः ।
> गौरवा-ऽरुचि-काठिन्यैर्विद्यात्तत्र मलान् क्रमात् ॥ १८ ॥

( [illegible] )

म०—उदावर्तेत्यादि । उदावर्त-रुजा-ऽऽनाहैर्वातं, मोह-तृड्-दहन-ज्वरैःपित्तं, गौरवा-ऽरुचि-काठिन्यैः कफं जानीयात् ॥ १८ ॥

भा० टी०—इस में उदावर्त ( कब्ज ) पीड़ा, पेटका तनाव, से वात, मूर्च्छा, प्यास, जलन और ज्वर के होने से पित्त और गौरव, अरुचि, तथा कड़ापन से कफ समझना चाहिए ॥ १८ ॥

अथ बद्धगुदोदरस्य लक्षणानि ।

( Intestinal Obstruction ) इन्टेस्टाइनल आब्स्ट्रक्शन ।

बद्धगुदमाह—

> यस्यान्त्रमन्नैरुपलेपिभिर्वा वालाश्मभिर्वा पिहितं यथावत् ।
> संचीयते तस्य मलः सदोषः शनैः शनैः संकरवच्च नाड्याम् ॥ १९ ॥

निरुध्यते तस्य गुदे पुरीषं निरेति कृच्छ्रादपि चाल्पमल्पम् ।
हृन्नाभिमध्ये परिवृद्धिमेति तस्योदरं बद्धगुदं वदन्ति ॥ २० ॥

( सु० नि० अ० ७ )

म०—यस्यान्त्रमन्नैरित्यादि । उपलेपिभिः=पिच्छिलैरन्नैः शाकशालुकादिभिः । पिहितं=विबद्धम् । यथावदिति=यथार्हम् । मलः=पुरीषम् । सदोष इति दोषत्रयसहितः । नाड्यामित्यन्त्रनाड्याम् । संकरवदिति=संमार्जनीक्षिप्यमाणतृणाद्यवकरो[२] यथा चीयते क्रमेण तथेत्यर्थः । बद्धगुदमिति गुदोपरि अन्त्रस्य बद्धत्वाद्बद्धगुदम् । यदुक्तं चरके,—"पक्ष्मवालैः सहान्नेन भुक्तैर्बद्धायनं गुदे" ( च. चि. स्था. अ. १३ )—इति । पुरीषायतनस्य बद्धत्वात् हृन्नाभिमध्येऽन्नपाकस्थाने वृद्धिः; गुदमात्रनिरोधे तु मलदोषैर्गुदादूर्ध्वमेवोदरवृद्धिः स्यात् ॥ १९–२० ॥

भा०टी०-बद्ध गुदोदर के लक्षण—बाल,बालू या कंकड़ी भोजनके साथ पेटमें चले जाने से चिपकने वाले शाक शालूककन्द आदि के खाने से आँते-अँतड़ी भर जाती है। फिर दोष और मल ( पुरीष ) भी बढ़कर आँतों के द्वार में इकठे होजाते हैं जैसे कि किसी जगह झाडूसे झाड़ने पर कूड़ा इकट्ठा होजाता है। आतें गुदाको बांधसी लेती हैं, जिससे पुरीष गुदा में ही अटक रहता है, यदि बाहर आताभी है तो धीरे २ और थोड़ा थोड़ा। फिर पेट, हृदय और नाभिके बीचमें बढ जाता है। इसे बद्धगुद कहते हैं ॥ १९ ॥ २० ॥

### अथ परिस्राव्युदरस्य लक्षणानि ।

( Ulceration of the bowel ) अल्सरेशन आफ दि बावेल ।

क्षतोदरमाह—

शल्यं तथाऽन्नोपहितं यदन्त्रं भुक्तं भिनत्त्यागतमन्यथा वा ।
तस्मात्स्रुतोऽन्त्रात्सलिलप्रकाशः स्रावः स्रवेद्वै गुदतस्तु भूयः ॥२१॥
नाभेरधश्चोदरमेति वृद्धिं निस्तुद्यते दाल्यति चातिमात्रम् ।
एतत्परिस्राव्युदरं प्रदिष्टम्,

( सु० नि० अ० ७ )

---

१ सम्मार्जनी = झाडू—लोके प्रसिद्धा । २ अवकर = कचरा, कूड़ा, करकट, इति हिन्दीभाषायां प्रख्यातः ।

म०—शल्यमित्यादि । शल्यं=कण्टकशर्करादि । अन्नोपहितमन्नयुक्तम् । भुक्तमागतमिति अर्थतः पाकाशयात्; विलोमेनागतमन्त्रं भिनत्ति, अनुलोमागतं हि शल्यमपि नान्त्रभेदकम् । अन्यथा वेति जृम्भणात्यशनाभ्यामन्त्रं भिद्येत । यदुक्तं चरके,—"शर्करा-तृण-काष्ठास्थि-कण्टकैरन्नसंयुतैः । भिद्येतान्त्रं यदा भुक्तैर्जृम्भयाऽत्यशनेन वा" ( च. चि. स्था. अ. १३ )—इति । स्रुत इति गलितः । स्रावः स्रवेद्दै गुदतस्तु भूय इति बहु यथा भवति तथाऽन्त्रात् स्रुतः; दोषजेषु पुनरुपलेपन्यायेनाल्प एव स्रावो भूयः पुनः पुनः गुदतश्च स्रवेत् । पुनरर्थस्तार्थे, भूयः शब्दोऽत्रावर्तनीयः; तेनोक्ता व्याख्या साध्वी भवति । ननु, भिन्नान्त्रात्तिर्यगत्र स्रावनिर्गमः; तत्कथं 'स्रावः स्रवेद्दै गुदतस्तु भूय' इत्युपपद्येत ? नैवं, सच्छिद्रान्त्रमार्गेण बहिर्गतस्यातिवृद्धस्य पुनरागमनादुपलेपन्यायाद्वा गुदतः स्राव उपपन्न एव । चरकेऽप्युक्तम्,—"पूरयन् गुदमन्त्रं च जनयत्युदरं नृणाम्" (च. चि. स्था. अ. १३)—इति । स्रावेण द्रवस्य निम्नगत्वान्नाभेरधो जठरं वृद्धिमेति; एतच्छिद्रोदरं जलोदरमिति भण्यते इति गदाधरः । यतश्चरकेणोक्तम्,—"तदधो नाभेः प्रायोऽभिनिर्वर्तमानं जलोदरं स्यात्" ( च. चि. स्था. अ. १३ )—इति । तदन्ये नानुमन्यन्ते, यतश्छिद्रोदरं शीघ्रं जलोदरतां यातीत्यभिप्रायेण चरकेणोक्तम्, अन्यथा दकोदरं पृथङ् न स्यात् ॥ २१ ॥

भा० टी०—अन्नको चुन बीनकर पकाना और खाना चाहिये । बिना चुने दाने खाये हुए अन्नके साथ रहने वाले तिनका, कंकड़ो, छोटे मोटे कांटे पत्थर भी पेट में पहुंचजाते हैं, और यदि उल्टी तरह से आंतों में पहुंच गये तो उससे आंतों में जखम हो जाता है । अधिक भोजन और जंभाई लेनेसे भी यही बात होती है, बाद आंतों की जखमसे पानीकी तरह बहाव होता रहता है । अधिक बहाव होने पर वह फिर पाखाने के रास्ते बहता है । स्राव नीचेकी तरफ ढलकर नाभिके नीचे पेटको फुला देता है । पेटमें सूई चुभाने और चीरने जैसी बहुत पीड़ा होती है । इसे परिस्राविउदर या क्षतोदर कहते हैं ॥ २१—२२ ॥

### अथ जलोदरस्य लक्षणानि ।

( Ascites ) एसिटिस ।

उत्पत्तिविशिष्टं दकोदरमाह—

दकोदरं कीर्तयतो निबोध ॥ २२ ॥

यः स्नेहपीतोऽप्यनुवासितो वा वान्तो विरिक्तोऽप्यथ वा निरूढः ।

पिबेज्जलं शीतलमाशु तस्य स्रोतांसि दूष्यन्ति हि तद्वहानि ॥२३॥
[1]स्नेहोपलिप्तेष्वथवाऽपि तेषु दकोदरं पूर्ववदभ्युपैति ।
स्निग्धं महत्तत्परिवृत्तनाभि समाततं पूर्णमिवाम्बुना च ।
यथा दृतिः क्षुभ्यति कम्पते च शब्दायते चापि दकोदरं तत्॥२४॥

(सु० नि० अ० ७)

म०—यः स्नेहपीत इत्यादि । स्नेहपीत इति कर्तरि क्तः, तेन स्नेहं पीतवानित्यर्थः । दूष्यन्तीति स्वकर्मसु दुष्टानि भवन्ति । तद्वहानि=उदकवहानि । तेष्विति= उदकवहस्रोतःसु । पूर्ववदिति=यथा पूर्वमुक्तम् । अन्नरस उपस्नेहन्यायेन बहिर्निःसृत्योदरं जनयतीत्यर्थ इति जेज्जटः । गदाधरस्त्वाह—क्षतान्त्रोदरे यथा अधोनाभेरुदराभिवृद्धिर्गुदस्रावश्च तथा जलोदरेऽपि भवतीति । ननु, सर्वेषामेवोपस्नेहन्यायेन बहिर्निःसृतान्नरसमूलत्वात् कथमनुदकत्वम् ? नैवं, तेषु हि प्रथमतो नातिमन्दत्वादग्नेरन्नरसस्याल्पत्वाच्चानुदकत्वम्, अल्पत्वेन तद्व्यपदेशात् । अत्र तु प्रागेव भूरिजलोत्पत्तिरिति विशेषः । समाततं वेदनया विस्तार्यमाणमिवोदरं भवति । यथा दृतिः क्षुभ्यतीति दृतिरिव जलपूर्णा क्षुभ्यतीति, अन्तर्जलचलमिव धत्ते । शब्दायते=गुडगुडायते ॥ २२-२४ ॥

भा० टी०—अब दकोदरको सुनो—स्नेहपान या अनुवासन वस्ति, निरूहणवस्ति, वमन, विरेचन, इनमें किसी एक अथवा सबके करनेपर यदि मूलसे ठंडा पानी तुरन्तही पीलिया जाय तो जल वाही नलियाँ वेकाम हो जाती हैं, उनसे जल खून में नहीं जाता किन्तु पेट में चूकर नीचे नाभिके नीचे इकट्ठा होता है जिससे उसी जगह पेट बढ़ जाता है, और कुछ २ पानी गुदासे भी बहा करता है । पेट ऊपर से चिकना और पानी से भरा हुआ सा जानपड़ता है । जलभरी मशक के समान बाहर और भीतरसे पेट हिलता है और भीतर से गुड़ गुड़ाता रहता है । नाभि के चारोतरफ से गोल हो जाती है । इसे दकोदर कहते हैं ॥ २३-२४ ॥

## अथोदररोगस्य साध्यासाध्यत्वम् ।

उदररोगस्य साध्यत्वादिलक्षणमाह—

जन्मनैवोदरं सर्वं प्रायः कृच्छ्रतमं मतम् ।
बलिनस्तदजाताम्बु यत्नसाध्यं नवोत्थितम् ॥ २५ ॥

---

[1] स्नेहोपलिप्तेष्विति—स्नेहादिपानादिना तेषु स्रोतःसु स्नेहादिलिप्तेषु यदा शीतलजलं पिबेत्तदापीत्यर्थः ।

पक्षाद्बद्धगुदं तूर्ध्वं सर्वं जातोदकं तथा ।
प्रायो भवत्यभावाय छिद्रान्त्रं चोदरं नृणाम् ॥ २६ ॥

( च० चि० अ० १३ )

म०—जन्मनैवेत्यादि । जन्मनैवोदरामिति उत्पन्नमात्रेणैव । अजातोदकस्योदरस्य लक्षणं चरकेऽप्यन्यत्, तद्यथा,—"अशोथमरुणाभासं सशब्दं नातिभारिकम् । सदा गुडगुडायन्तं सिराजालगवाक्षितम् ॥ नाभिं विष्टभ्य पायौ तु वेगं कृत्वा प्रणश्यति । हृद्-वङ्क्षण-कटी-नाभि-गुद-प्रत्येकशूलिनः ॥ कर्कशं सृजतो वातं नातिमन्दे च पावके । लालया विरसे चास्ये मूत्रेऽल्पे संहते विशि ॥ अजातोदकमित्येवंयुक्तं विज्ञाय लक्षणैः"—( च. चि. स्था. अ. १३ ) इति । अत्र कर्कशमिति वेगवन्तम् । जातोदकलक्षणं च चरके यथा,—"कुक्षेरतिमात्रं वृद्धिः सिरान्तर्धानगमनं, उदकपूर्णदृतिसमानक्षोभस्पर्शनं च भवति"—( च. चि. स्था. अ १३ ) इति । पक्षादित्यादि । बद्धगुदमुदरं पक्षादूर्ध्वं विनाशाय भवतीति । जातोदकं पक्षात् । प्रायोग्रहणेन कदाचित् पक्षादूर्ध्वमपि न विनाशाय, तथा शल्यशास्त्राभिमतया चिकित्सया कदाचिज्जातोदकं छिद्रान्त्रं बद्धगुदं च सिध्यतीति दर्शयति जातोदकं छिद्रान्त्रं च विनाशाय पक्षादूर्ध्वमिति सम्बन्ध इति केचित् ॥ २५ ॥ २६ ॥

भा० टी०—उदर रोगका साध्यासाध्य—अक्सर सभी उदररोग पेट होनेसे अत्यन्त कष्टसाध्य होते हैं, परन्तु यदि रोगी बलवान् हो . पेटमें पानी न हुआ हो और रोग नवीन हो तो बहुत कोशिश के साथ दवा और पथ्य करने पर अच्छा भी हो जाता है। बद्धगुद और पानी होजानेपर सभी उदर रोग पंद्रह दिनों के बाद फिर अच्छा नहीं होते, शायद ही कोई अच्छा होजाय। छिद्रोदरकी भी यही हालत होती है ॥ २५–२६ ॥

अथ साध्यानामप्यवस्थाविशेषेणासाध्यत्वम् ।

साध्यतयाऽभिहितानामप्यवस्थाविशेषेणासाध्यतामाह—

शूनाक्षं कुटिलोपस्थमुपक्लिन्न-तनु-त्वचम् ।
बल-शोणित-मांसाग्नि-परिक्षीणं च वर्जयेत् ॥ २७ ॥

( च० चि० अ० १३ )

पार्श्वभङ्गान्नविद्वेष-शोथा-तीसार-पीडितम् ।
विरिक्तं चाप्युदरिणं पूर्यमाणं विवर्जयेत् ॥ २८ ॥

( सु० सू० अ० ३३ )

इति श्रीमाधवकरविरचिते माधवनिदाने उदरनिदानं समाप्तम् ।

म०—शूनाक्षमित्यादि । 'उदरिणम्' इति शेषः । कुटिलोपस्थामिति वक्रमेहनम् । उपक्लिन्नतनुत्वचमिति उपक्लिन्ना तन्वी त्वक् यस्य तम् । अग्निपरिक्षीणमिति अग्निक्षयश्च यद्यप्युदरे पूर्वमेव भवति, तथाऽप्यत्र विशेषेणाग्निक्षयो लक्षणान्तरयुक्तश्चासाध्यतालिङ्गं संभवतीति ज्ञेयम् ॥ २७ ॥ २८ ॥

इति श्रीकण्ठदत्तविरचितायां मधुकोशव्याख्यायामुदरनिदानं समाप्तम् ।

भा० टी०—आठ उदर रोगों में चाहे कोई उदर रोगहो; यदि रोगी की आंखें सूज जायँ, लिङ्ग टेढ़ा होजाय, खाल गीली और पतली पडजाय, शरीर में ताकत और खून कम हो जाय, । मास सूख जाय, मन्दाग्नि बड़ी जबर्दस्त हो—ज़रा सीभी भूख न लगे और तनक साभी अन्न हजम न हो तो रोग कदापि नहीं अच्छा होता । भीतर से जिसको पसुलियां टूटी सी मालुम हों, अन्न में द्वेष हो शरीर सूज गया हो,पतले दस्त आते हों । दस्त कराने पर भी पेट फिर पहले जैसा का फूल जाय तो रोगी नहीं बचता ॥ २७॥ २८ ॥

इति श्रीहरिनारायणशर्मवैद्यकृतायां निदानदीपिकायां रुग्वि—
निश्चयभाषाटीकायामुदरनिदानम् ।

## अथ शोथनिदानम् ।

## (1) Swelling (2) Dropsy. स्वेलिंग, ड्रॉप्सी ।

### अथ शोथस्य सम्प्राप्तिः ।

उदरे शोथस्योपद्रवत्वेनोक्तत्वात्तदनन्तरं शोथनिदानम् । तस्य संप्राप्तिमाह—

रक्त-पित्त-कफान् वायुर्दुष्टो दुष्टान् बहिः सिराः ।
नीत्वा रुद्धगतिस्तैर्हि कुर्यात्त्वङ्मांस-संश्रयम् ॥ १ ॥
उत्सेधं संहतं शोथं तमाहुर्निचयादतः ।
सर्वं हेतुविशेषैस्तु रूपभेदान्नवात्मकम् ॥ २ ॥
दोषैः पृथग्द्वयैः सर्वैरभिघाताद्विषादपि ।

(वा० नि० अ० १३)

म०—रक्तपित्तकफानित्यादि । रक्त-पित्त-कफान् स्वहेतुभिः स्वातन्त्र्येण दुष्टान्=कुपितान्,-दुष्टः=स्वहेतुकुपितो वायुर्बहिः सिराः=बाह्या अगम्भीराः सिरा

१ उत्सेधमुन्नतत्वं । संहतं घनम् ।

नीत्वा=गमयित्वा, तैः रक्त-पित्तकफैः रुद्धगतिरावृतमार्गो वायुस्त्वङ्मांसमुत्सेधं कुर्या-दिति योजना। बहिः-सिराशब्देनात्रगम्भीरत्वग्वाहिनीनां स्रोतसामपि ग्रहणम्। त्वङ्मांससंश्रयमित्यनेन व्रणशोथाद्भेदं दर्शयति, अष्टसु व्रणवस्तुषु व्रणशोथस्य सम्भवात्। यदुक्तं सुश्रुतेन—"त्वङ्मांससिरास्नाय्वस्थिसन्धिकोष्ठमर्माण्यष्टौ व्रणवस्तूनि भवन्ति"—( सु. सू. स्था. अ. २२ ) इति। संहतं=संहतात्मकम्। कुतः संहतात्मकमित्यत आह—निचयादत इति। अतोऽस्मात् पूर्वोक्तात् रक्तादि-त्रिदोषत्रयसमुदायात्; एतेन रक्तसहितत्रिदोषजन्यत्वमस्य शोथस्योक्तं भवति। सर्वमित्यादि। सर्वमिति पूर्वेण सम्बध्यते, सर्वमुत्सेधं शोथमाहुरित्यर्थः। हेतुविशेषैरिति दोषत्र-याभिघातप्रभृतिभिः कारणभेदैर्यो रूपभेदस्तस्मात् सर्वं नवात्मकमाहुरिति पूर्वोक्त-यया सम्बन्धः। सर्वहेतुविशेषैः, इति पाठान्तरे सर्वेषां हेतुविशेषैरित्यर्थः। द्वन्द्वैरिति द्वन्द्वैः, सर्वैस्त्रिभिः ॥ १ ॥ २ ॥—

भा० टी०—शोथ (सूजन) रोग की सम्प्राप्ति—अपने कारणों से वायु कुपित होकर अपनेही कारणों से कुपित—पित्त, कफ और रक्त को बाहरकी तरफ रहने वाली सिराओं में लाकर पित्त आदि के द्वारा रुक कर, त्वचा मांसके बीच पित्त कफ, रक्त के इकट्ठे होनेसे संहत=ठोस उँचाई कर देता है। चाहे किसी तरह की उँचाई हो उसको शोथ कहते हैं। शोथ कई कारणों से होता है, इसलिए उसकी आकृति भिन्न २ होती है, उन्हीं कारण और आकृतियों के भेद से यह नव तरह का होता है। १ वातिक, २ पैत्तिक, ३ श्लैष्मिक, तीन द्वन्द्वज, एक सान्निपातज, एक चोट लगनेसे, एक विषसे।

## अथ शोथरोगस्य पूर्वरूपाणि।

पूर्वरूपमाह—

**तत्पूर्वरूपं दवथुः सिरायामोऽङ्गगौरवम् ॥ ३ ॥**

( च० चि० अ० १२ )

म०—तदित्यादि। दवथुरुपतापः। सिरायामः=सिराविस्तारजन्य पीडा ॥ ३ ॥

भा० टी०—शोथका पूर्वरूप—आँखोंमें जलन, सिराओंका खिंचाव, शरीर का भारी मालूम होना, ये लक्षण शोथके पूर्वरूप में होते हैं ॥ ३ ॥

## अथ शोथरोगस्य कारणानि ।

पूर्वरूपानन्तरं कामचारान्निदानमाह—

शुद्धयामयाभुक्तकृशाबलानां क्षाराम्लतीक्ष्णोष्णगुरूपसेवा ।
दध्याममृच्छाकविरोधिदुष्टगरोपसृष्टान्ननिषेवणं च ॥ ४ ॥
अर्शांस्यचेष्टा न च देहशुद्धिर्मर्मोपघातो विषमा प्रसूतिः ।
मिथ्योपचारः प्रतिकर्मणां च निजस्य हेतुः श्वयथोः प्रदिष्टः ॥५॥

म०—शुद्धयामयेत्यादि । शुद्धिर्वमनाविरेचनादिः, आमयाः=ज्वरादयः, अभुक्तमभोजनं विगुणं च भोजनं, तैः कृशानामबलानां च क्षारादिसेवा निजस्य श्वयथोर्हेतुः । दध्यादयः स्वतन्त्रा एव हेतवः, आममपक्वं, दुष्टं=दोषजनकं मन्दक नवोदकादि, गरं=संयोगजं विषम् । अचेष्टा=निष्क्रियत्वम् । न च देहशुद्धिरिति शोधनार्हेऽपि दोषे देहाशुद्धिः । मर्मोपघात इह दोषकृत एव ज्ञेयः, बाह्यहेतुजस्तु मर्मोपघात आगन्तुशोथहेतुरेव । विषमा प्रसूतिरामगर्भपतनादिका मिथ्योपचारोऽसम्यक्करणमसम्यगुपचारः । प्रतिकर्मणां=वमनादीनाम् ॥ ४ ॥ ५ ॥

भा० टी०—शोथके कारण—शुद्धि-वमन, विरेचन,निरूहणबस्ति द्वारा शरीर शुद्धि करना, रोग, उपवास, अविधि भोजन, इन सब कारणों से कृशता और दुर्बलता हो जानेपर—क्षार, खटाई, तीखी वस्तु—(राई मिर्चा आदि] गर्म, देरमें हजम होने वाली चीजें खाना, दही, शरीर में आम होना, मिट्टी, शाक, अनमेल पदार्थ, गर-संयोगज विष, दुष्ट—दोषजनक खराब पानी आदि पदार्थों का सेवन, बवासीर, किसी तरह का परिश्रम न करना,शरीर में मल रहनेपर भी वमन विरेचन द्वारा सफाई न करना, मर्मोपघात-शरीर में दोषोंके कुपित होनेपर उसका असर हृदय, वस्ति शिर आदि पर होना, गर्भपात होना, वमन विरेचन लेनेपर ठीक तरह से पथ्य से न रहना । इन्हीं सब कारणों से दोषज शोथ पैदा होता है ॥ ४—५ ॥

---

१–अत्र दुष्टस्थाने "पिष्ट" इति पाठान्तरम् ।

## अथ शोथस्य सामान्यलक्षणानि ।

सामान्यलिङ्गमाह—

**सगौरवं स्यादनवस्थितत्वं सोत्सेधमूष्माऽथ सिरातनुत्वम् ।**
**सलोमहर्षश्च विवर्णता च सामान्यलिङ्गं श्वयथोः प्रदिष्टम् ॥६॥**

म०—सेत्यादि । सगौरवमिति अनवस्थितत्वविशेषणं, तथा सोत्सेधमिति च ॥ ६ ॥

भा०टी०—शोथ का सामान्य लक्षण—सूजन कभी कभी बिना चिकित्सा किये भी उतर जाय, कभी उस में गुरुता मालूम हो, कभी नहीं । गर्मी मालूम होना, शिराओं का न मालूम होना, रोमाञ्च, जिस जगह सूजन हो उस जगह की कान्ति खराब हो जाय, ये सब शोथ के सामान्य लक्षण हैं ॥ ६ ॥

## अथ वातजशोथस्य लक्षणानि ।

वातशोथलिङ्गमाह—

**चलस्तनुत्वक् परुषोऽरुणोऽसितः**
**सुषुप्तिहर्षार्तियुतोऽनिमित्ततः ।**
**प्रशाम्यति प्रोन्नमति प्रपीडितो**
**दिवाबली च श्वयथुः समीरणात् ॥ ७ ॥**

म०—चल इत्यादि । तनुत्वक्=अबहलत्वक् । असितः=कृष्णः । सुषुप्तिः=स्पर्शाज्ञता, हर्षो=झिणिझिणिवेदना, किंवा रोमहर्षः । अनिमित्ततः प्रशाम्यतीति वायोश्चलत्वेन कदाचिन्निमित्तं विनाऽपि लीनो भवति । निमित्तत इति पाठे स्नेहोष्णमर्दनादेर्निमित्ततः प्रशाम्यति=उपशमं प्राप्नोतीति, उपशमार्थमेतदुक्तम् । प्रोन्नमति इति प्रपीडितः सन्नन्तरुन्नमतीत्यर्थः । दिवाबलीति दिवा बलवान्, नत्वबली । स्नेहोष्णमर्दनाद्यैश्च प्रशाम्येत्, स च वातिकः. "[illegible] शोथो नक्तं प्रणश्यति"—( च. सू. स्था. अ. १८ ) इति चरकवचनात् ॥७॥

भा० टी०—वातज शोथके लक्षण—यदि सूजन वायु से होती है तो चमड़ा पतला पड़ जाता है,सूजन फैलने वाली होती है। परुष=कर्कश, लाल,काली,सूजन होती है। स्पर्श न मालूम होना, रोमाञ्च हो जाना, पीड़ा मालूम होना, विना चिकित्सा के ही अच्छा हो जाना, सूजन की जगह अंगुली से दवाने पर उठ जाना, दिनमें अधिक होना, और रात में कम हो जाना।

## अथ पित्तजशोथस्य लक्षणानि ।

पैत्तिकमाह—

मृदुः सगन्धोऽसित-पीत-रागवान्
भ्रम-ज्वर-स्वेद-तृषा-मदान्वितः ।
य उष्यते स्पर्शरुगक्षिरागकृत्
स पित्तशोथो भृश-दाह-पाकवान् ॥ ८ ॥

म०—मृदुरित्यादि । उष्यते इति दह्यते ॥८ ॥

भा० टी०—पित्तकी सूजन—मुलायम, वदवूदार, काली, पीली या लाल होती है। उसमें भ्रम, ज्वर, पसीना, प्यास और मद ( नशा ) ये रोग हो जाते हैं। जलन मालुम होती है। पीड़ा होती है । आँखे लाल हो जाती हैं और सूजन पकने लगती है ॥ ८ ॥

## अथ कफजशोथस्य लक्षणानि ।

कफजमाह—

गुरुः स्थिरः पाण्डुररोचकान्वितः
प्रसेक-निद्रा-वमि-वह्नि-मान्द्य-कृत् ।
स कृच्छ्रजन्मप्रशमो निपीडितो
न चोन्नमेद्रात्रिबली कफात्मकः ॥ ९ ॥

म०—गुरुरित्यादि । अरोचकान्वित इति अरोचकव्याधिसहचारी । कृच्छ्र-जन्मप्रशम इति चिरोत्पत्तिविनाशः । रात्रिबलीति रात्रौ स्रोतोऽवरोधजेन देह-क्लेदेनाचेष्टया च कफस्य वृद्धत्वात्तज्जः शोथो बलवान् भवति । दिवा तु स्फुट-स्रोतसि शरीरे सचेष्टे च न कफो बली भवति, किं तर्हि वायुः तेन तज्जः शोथो दिवा बली भवति ॥ ९ ॥

भा० टी०—कफ का शोथ, भारी, एक जगह रहने वाला और पाण्डुरोग, अरोचक के साथही पैदा होता है। प्रसेक—मुंहसे लार गिरना, निद्रा, वमन, मन्दाग्नि रोगों को पैदा करता है। धीरे २ पैदा होता और अच्छा होता है। उंगली से दबा कर छोड़ देने पर भरता नहीं। और रातमें जोरदार होता है॥ ६॥

अथ द्वि-त्रि-दोषज शोथस्य लक्षणानि।

व्यामिश्रौषधविधानार्थं क्वापि क्वापि प्रकृतिसमसमवेता अपि शिष्यहितैषितया द्वन्द्वसान्निपाता अतिदेशेन पठ्यन्ते, ये तु विकृतिविषमसमवेतास्तान् कण्ठरवेण पठति अतोऽतिदेशेन द्वन्द्वत्रयसन्निपातानाह—

निदानाकृतिसंसर्गाच्छ्वयथुः स्याद् द्विदोषजः।
सर्वाकृतिः सन्निपाताच्छोथो व्यामिश्रलक्षणः॥ १०॥

(च० सू० अ० १८)

म०—निदानाकृतिसंसर्गादित्यादि। व्यामिश्रलक्षण इति मिलितवातादित्रयलिङ्गः। अनेनैव सर्वाकृतिरित्यस्यार्थे सिद्धे तदभिधानं वातादिमन्येषं कृत्स्नलिङ्गनियमार्थम्॥ १०॥

भा० टी०—दो दोषोंके निदान और लक्षणों से द्विदोषज और तीनों दोषों के समस्त लक्षणों से सन्निपातज शोथ समझना चाहिए॥ १०॥

अथाभिघातजशोथस्य लक्षणानि।

अभिघातजं श्वयथुमाह—

अभिघातेन शस्त्रादि-च्छेद-भेद-क्षता-दिभिः।
हिमानिलोदध्यनिलैर्भल्लात-कपिकच्छुजैः॥ ११॥
रसैः शूकैश्च संस्पर्शाच्छ्वयथुः स्याद्विसर्पवान्।
भृशोष्मा लोहिताभासः प्रायशः पित्तलक्षणः॥ १२॥

(च० चि० अ० १२)

म०—अभिघातेनेत्यादि। अभिघातेन यः शोथः स शस्त्रादिभिर्भवति। हिमानिलोदध्यनिलैरिति हिमानिलैरुदध्यनिलैः, उदधिः=समुद्रः। भल्लातकपिकच्छुजै रसैः शूकैरिति भल्लातकरसैः कपिकच्छुशूकैश्च। कपिकच्छुः= शूकशिम्बी॥ ११-१२॥

भा० टी०—अभिघातज शोथ का वर्णन—हथियार, लाठी, आदिसे चोट लगना, घर, पेड़ आदि ऊंची जगह से गिर पड़ना, ठोकर लगना, इत्यादि अनेक प्रकार से शरीर में चोट पहुंचना, तथा ठंडी हवा और समुद्र की हवा लगना, भिलावा, जमालगोटा छूजाना, केंवाच का लगना, अभिघातज सूजन का कारण है। यह सूजन फैलती है। इसमें बड़ी जलन होती है। रंग लाल होता है, और पित्त शोथ के सब लक्षण इसमें मिलते हैं ॥ ११—१२ ॥

### अथ विषजशोथस्य लक्षणानि ।

विषजमाह—

विषजः सविष-प्राणि-परिसर्पण-मूत्रणात ।
दंष्ट्रा-दन्त-नखाघातादविषप्राणिनामपि ॥ १३ ॥
विड्-मूत्र-शुक्रोपहतमलवद्वस्त्रसङ्करात् ।
विषवृक्षानिलस्पर्शाद्गरयोगावचूर्णनात् ॥१४॥
मृदुश्चलोऽवलम्बी च शीघ्रो दाह-रुजा-करः ।

( वा० नि० अ० १३ )

म०—विषज इत्यादि । सविषप्राणिनः=सर्पादयस्तेषां परिसर्पणं=भ्रमणं तस्मात्, सविषप्राणिनां मूत्रणाच्च । दंष्ट्रादन्तेति दंष्ट्रा=कुटिला 'दाढ' इति ख्याता; तद्विपरीतश्च दन्तो, गोवलीवर्दन्यायात् । विण्मूत्रशुक्रोपहतमलवद्वस्त्रसङ्करादिति सविषप्राणिनां विण्मूत्राद्युपहतं मलवच्च वस्त्रं यत्तस्य संस्पर्शात् । अवलम्बी=अधोगमनशीलः । शीघ्रः=शीघ्रोत्पत्तिः । अयं चागन्तुरपि विशिष्ट-लिङ्ग-चिकित्सोपयोगात् पृथक् पठितः ॥ १३—१४ ॥

भा० टी०—विषैले—सर्प, गोजर, मकड़ी आदि विषैले जन्तुओं का शरीर पर रेंग जाना या मूतना, किसीभी प्राणियों के चाहे वह विषैला हो या न हो नाखून, दाढ़ और दांतका लगजाना, विषैले जानवरों के मल मूत्र वीर्य का सना और मैला कपड़ा का व्यवहार, विषैले पेड़ की हवा लगना,-संयोगज विष से शरीर का स्पर्श होना, विषज शोथ का कारण होता है। यह शोथ मुलायम, फलने वाला, लटकने वाला, जल्दी पैदा होने वाला, जलन और पीड़ा करने वाला होता है ॥ १३—१४ ॥

अथ शोथस्य स्थानानि ।

यत्रस्था दोषा यत्र देशे शोथं कुर्वन्ति तमाह—

दोषाः श्वयथुमूर्ध्वं हि कुर्वन्त्यामाशयस्थिताः ॥ १५ ॥
पक्वाशयस्था मध्ये तु वर्चःस्थानगतास्त्वधः ।
कृत्स्नदेहमनुप्राप्ताः कुर्युः सर्वसरं तथा ॥ १६ ॥

( सु० नि० अ० २३ )

म०—दोषा इत्यादि । ऊर्ध्वमिति उरः प्रभृत्यूर्ध्वदेहे । मध्य इति उरः पक्वाशयमध्ये । अध इति पक्वाशयादधः । सर्वसरं=सर्वशरीरसरणशीलम् ॥ १५-१६ ॥

भा०टी०—यदि शोथकारक दोष आमाशय में रहते हैं तो शोथ नाभिके ऊपर होता है । पक्वाशय में दोष रहता है तो शोथ छाती के नीचे होता है, मलाशय में दोष रहता है तो नाभिके नीचे शोथ होता है । सब शरीर भरमें दोष रहते हैं तो सारे शरीर में शोथ होता है ॥ १५-१६ ॥

अथ शोथस्य साध्यासाध्यत्वम् ।

यत्रस्था दोषो यत्र देशे शोथं कुर्वन्ति तमाह—

यो मध्यदेशे श्वयथुः स कष्टः सर्वगश्च यः ।
अर्धाङ्गे रिष्टभूतः स्याद्यश्चोर्ध्वं परिसर्पति ॥ १७ ॥
श्वासः पिपासा छर्दिश्च दौर्बल्यं ज्वर एव च ।
यस्य चान्ने रुचिर्नास्ति श्वयथुं तं विवर्जयेत् ॥ १८ ॥

( सु० नि० अ० २३ )

अनन्योपद्रवकृतः शोथः पादसमुत्थितः ।
पुरुषं हन्ति नारीं च मुखजो गुह्यजो द्वयम् ।
नवोऽनुपद्रवः शोथः साध्योऽसाध्यः पुरेरितः ॥ १९ ॥

( च० चि० अ० १२ )

विवर्जयेत् कुक्ष्युदराश्रितं च तथा गले मर्मणि संश्रितं च ।
स्थूलः खरश्चापि भवेद्विवर्ज्यो यश्चापि बालस्थविराबलानाम् ॥ २० ॥

इति श्रीमाधवकरविरचिते माधवनिदाने शोथनिदानं समाप्तम् ।

म०-यो मध्यदेश इत्यादि । मध्यदेहगस्य कष्टत्वं तद्देशगशोथप्रभावात् । सर्वग इति सर्वदेहगामी । 'सर्वज' इति पाठान्तरे सर्वजः=सान्निपातिकः । रिष्टभूत इति रिष्टतुल्यः, भूतशब्द उपमाने; यथा-मातृभूतः पितृभूत इति । 'व्याधेरेवात्र[1] रिष्टभूतत्वं तस्य च निमित्तकृतत्वात् भूतशब्द उपात्त इति कार्त्तिकः । अन्ये तु भूतशब्दं स्वरूपवचनमाहुः । यश्चोर्ध्वं परिसर्पतीति पुरुषविषयमेतत्; चकारात् स्त्रियाश्च उपरिजो योऽधो याति स गृह्यते, तथा गुह्यजो यः सर्वगः । वचनं हि— "यस्तु पादाभिनिर्वृत्तः शोथः सर्वाङ्गगो भवेत् । पुरुषं हन्ति नारीं च मुखजो गुह्यजो द्वयम्"-( च. सू. स्था. अ. १८ ) इति । अनन्योपद्रवकृत इति अन्यस्य उपद्रवा अन्योपद्रवास्तद्विपरीता अनन्योपद्रवाः, एतेनायमर्थः—शोथस्यैव ये उपद्रवास्तैः कृतः, ते च-"श्वासः पिपासा दौर्बल्यं ज्वरश्छर्दिररोचकः । हिक्काऽतीसारकासाश्च शोथिनं क्षपयन्ति हि"—( सु. चि. स्था. अ. २३ ) इति सुश्रुतोक्ताः। चरकेऽप्युक्तम्—"छर्दिस्तृष्णाऽरुचिः श्वासो ज्वरोऽतीसार एव च । सप्तकोऽयं सदौर्बल्यः शोथोपद्रवसंग्रहः"—( च. चि. स्था. अ. १८ ) इति । अथवा अन्यमुपद्रवं[2] करोतीति अन्योपद्रवकृन्निदानं, नान्योपद्रवकृदनन्योपद्रवकृत्, ततः स्वनिदानात्, 'जातः' इति शेषः, तेन शोथजनकनिदानादेवोत्पन्न इत्यर्थः । पाण्डुरोगादौ तु यः शोथः पादसमुत्थितः सोऽन्योपद्रवकृतो निदानान्तराज्जातः साध्य एव । 'आननोपद्रवगत' इति पाठान्तरे अयमर्थः—पादयोरुत्थितः पूर्वं पश्चादाननमुपद्रवेण प्रसारेण उपद्रवत्वेन वा गतः । तथा च तन्त्रान्तरम्—पादप्रवृत्तश्वयथुर्नृणां यः प्राप्नुयान्मुखम् । स्त्रीणां वक्त्रादधो याति वस्तिजश्च न सिध्यति"-इति । क्षारपाणिनाऽप्युक्तम्—'ऊर्ध्वगामी नरं पद्भ्यामधोगामी मुखात् स्त्रियम् । उभयं वस्तिसंजातः शोथो हन्ति न संशयः"—इति । गुह्यज इति वस्तिजातः । द्वयमिति नरं नारीं च । असाध्यः पुरोरित इति 'अर्द्धाङ्गे रिष्टभूत' इत्यादिना ॥ १७॥ २०॥

इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायां शोथनिदानं समाप्तम् ।

भा० टी०—शोथ का साध्याऽसाध्य लक्षण—मध्यदेश का शोथ स्वभावतः असाध्य होता है । सारे शरीर का भी शोथ असाध्य होता है । आधे शरीर का शोथ, और यदि पुरुष के पहले पैरमें होकर ऊपर की तरफ चढ़े और स्त्री के ऊपर होकर नीचेकी तरफ जाय तो वह शोथ असाध्य होता है । जिस शोथवाले रोगी को श्वास, प्यास, क्षय, दुर्बलता, ज्वर, अन्न में अरुचि हो तो वह रोगी नहीं बचता ॥

---

१-व्याधेरेवेति-व्याधेरर्धाङ्गसमुत्पन्नस्योर्ध्वपरिसर्पणशीलस्य च शोथस्य रिष्टभूतत्वमरिष्टतुल्यत्वं, तस्य व्याधेर्निमित्तकृतत्वात् कारणविशेषजन्यत्वात्, यतो व्याधेरन्यदरिष्टं भवति, अत्र च विशेषहेतुबलाद्व्याधेररिष्टतुल्यत्वम्-इति भाव । २-उपद्रवं रोगम् ।

अनन्यउपद्रवकृत=शोथके निदानसे पुरुष के परमें पैदा हुआ तथा स्त्री के मुखमें पैदा हुआ शोथ असाध्य होता है। यदि पाण्डुरोग, ग्रहणी, ज्वर, अर्श आदि रोगमें इनके निदानों से शोथ पैर में पैदा होता है तो वह साध्य होता है। वस्ति=पेड़ू पर का शोथ चाहे पुरुष को हो या स्त्रीको, अच्छा नहीं होता। नया और उपद्रव रहित शोथ साध्य होता है। कोखा, पेट, गला, शिर, छाती, और वस्ति का शोथ,तथा बहुत दुबला, रूखा, और बालक, बूढ़ा, निर्बल आदमी का शोथ भी नहीं अच्छा होता॥ १६—२०॥

इति श्रीहरिनारायणशर्म्मवैद्यकृतायां निदानदीपिकायां रुग्विनिश्चय-भाषाटीकायां शोथनिदानम्।

## अथ वृद्धिनिदानम्।

### अथ वृद्धिरोगस्य सम्प्राप्तिः।

शोथत्वसामान्याच्छोथानन्तरं वृद्धिरभिधीयते। वृद्धेः सम्प्राप्तिमाह—

क्रुद्धोऽनूर्ध्वगतिर्वायुः शोथ-शूल-करश्चरन्।
मुष्कौ वङ्क्षणतः प्राप्य फलकोषाभिवाहिनीः॥ १॥
प्रपीड्य धमनीर्वृद्धिं करोति फलकोषयोः।
दोषास्र-मेदो-मूत्रान्त्रैः स वृद्धिः सप्तधा गदः॥ २॥
मूत्रान्त्रजावप्यनिलाद्धेतुभेदस्तु केवलम्।

( मा० नि० २० ११ )

म०-क्रुद्धोऽनूर्ध्वगतिर्वायुरित्यादि। अनूर्ध्वगतिरधोगतिर्वायुः मुष्कौ प्राप्य चरन्=गच्छन्, वङ्क्षणतो=मेढ्रजङ्घासन्धेः सकाशात्; फलकोषाभिवाहिनीरिति फलं च कोषश्च फलकोषौ, अथवा फलयोः कोषौ तद्वहा धमनीः प्रपीड्य=संदूष्य, वृद्धिं करोति। फलकोषयोरिति द्विवचनमुपलक्षणं, एकैक-कोषेऽपि दृश्यमाना वृद्धिः संगता। स वृद्धिरिति "क्तिक्तौ च संज्ञायाम्"-इत्यनेन क्तिजन्तो वृद्धिशब्दः पुंल्लिङ्गः, क्तिन्नन्तस्तु स्त्रीलिङ्गः। वृद्धिः सप्तधेः-ऽभिधीयते। संख्येयनिर्देशादेव संख्यायां लब्धायां सप्तधेति वचनं न्यूनाधिक-संख्यानिरासार्थं, तेन द्वन्द्वजादिवृद्धेराधिक्यात् निरासः; अन्यथा तस्या व्याधिस्वभावात् मूत्रान्त्रवृद्धयोर्वातवृद्धयन्तर्भावात् न्यूनसंख्यानिरासार्थं-

योर्वातजत्वेऽपि निमित्त-चिकित्सा-भेदात् पृथगभिधानं, निमित्तभेदनिबन्धन एव व्याधिभेदः । यदुक्तम्—"दोष-दूष्य-संसर्गादायतनविशेषात् निमित्ततश्चैषां व्याधीनां भेदः" ( सु. सू. स्था. अ. २४ )—इति । अत आह–मूत्रान्त्रजावप्यानिलाद्धेतुभेदस्तु केवलमिति ॥ १ ॥ २ ॥–

भा० टी०—वात कुपित होकर नीचेकी तरफ जाकर वङ्क्षण=पट्टा में शोथ और शूल पैदा करता हुआ अण्ड धारण करने वाली नसोंको विगाडता हुआ अण्डकोश को वढ़ा देता है। दोनों अण्डकोश वढ़ते हैं और एक भी, इसे वृद्धि रोग कहते हैं । यह रोग सातप्रकार का होताहै । १ वातज, २ पित्तज, ३ कफज,४ मूत्रज, ५ अन्त्रज,६ रक्तज और ७ मेदोज, । मूत्रज और अन्त्रज वृद्धि भी वात सेही होती है; परन्तु विशेष कारण और विशेष चिकित्सा होने से वातज वृद्धि से इन दोनोंकी गणना अलग की गई ॥ १—२ ॥

अथ वातजादिमूत्रजान्तवृद्धीनां क्रमेण लक्षणानि ।

वातजादीनां मूत्रजान्तानां वृद्धीनां क्रमेण लक्षणान्याह—

वातपूर्णदृतिस्पर्शो रूक्षो वातादहेतुरुक् ॥ ३ ॥
पक्वोदुम्बरसंकाशः पित्ताद्दाहोष्मपाकवान् ।
कफाच्छीतो गुरुः स्निग्धः कण्डूमान् कठिनोऽल्परुक् ॥४॥
कृष्णस्फोटावृतः पित्तवृद्धिलिङ्गश्च रक्तजः[1] ।
कफवन्मेदसा[2] वृद्धिर्मृदुस्तालफलोपमः ॥ ५ ॥
मूत्रधारणशीलस्य मूत्रजः[3] स तु गच्छतः ।
अम्भोभिः पूर्णदृतिवत् क्षोभं याति सरुङ्मृदुः ॥ ६ ॥
मूत्रकृच्छ्रमधः स्याच्च चालयन् फलकोषयोः ।

( वा० नि० अ० ११ )

म०—वातेत्यादि । अहेतुरुगिति अनिमित्ततो दाहादिरुक् । रक्तजे 'कृष्णस्फोटावृत इति' पित्तजवृद्धिलिङ्गादधिकं; तेन हेतु-लिङ्ग-चिकित्सा-भेदाद्रक्तजवृद्धिः पृथग्गण्यते । मेदोजे तालफलोपम इति पक्वतालफलमिव नीलवर्तुलः

---

१ रक्तजवृद्धिः = HoematOcele होमेटासिल. २ मेदोवृद्धिः = Elephantiasis Of Scrotum एली फेन्टी एसिस आफ स्क्रोटम् । ३ . मूत्रजवृद्धि = H) droceele हाइड्रोसील ।

मूत्रजे मूत्रकृच्छ्रमिति मूत्रकृच्छ्रवत् वेदना । चाल्यन् फलकोषयोरिति फलकोषयोश्चालयन् चञ्चो भवन्नितस्ततो गच्छन् सोऽश्वः स्यात् । चाल्यन्निति स्वार्थिको णिच् ॥ ३—६ ॥—

भा० टी०—प्रत्येक वृद्धिके अलग २ लक्षण—वातज वृद्धि हवाभरे गेंद के समान छूनेपर मालुम होतीहै । रुखापन मालुम होता है । और अकस्मात् पीड़ा हुआ करती है । पित्तज वृद्धि पके हुए गूलर के समान और अन्दर बाहर जलन तथा पाक से युक्त होती है । कफज वृद्धि—ठंडी ,भारी,चिकनी, खुजली दार, कड़ी और थोड़ी पीड़ा युक्त हुआ करती है । रक्तज वृद्धि के लक्षण पित्तज वृद्धि के समान होते हैं किन्तु उसमें काले काले फफोले भी होते हैं. मेदोज वृद्धि के लक्षण कफज वृद्धि से मिलते हैं और मुलायम तथा पके तालके फलके समान नीली और गोल होतीहै । मूत्रज वृद्धि अधिक तर उन्हीं लोगों को होती है,जिन्हें पेशाब रोकने की बराबर आदत सी रहतीहै । मूत्रज वृद्धि चलने पर पानी से भरी मशक के समान हिलती है, मुलायम होती है और पीडा भी हुआ करती है । पेशाब करते समय पीडा होती है और पेशाब कम उतरता है । वायु दोनों अण्डों में इधर उधर घूमता हुआ नीचे की तरफ जाता रहता है ।३-६।

## अथान्त्रवृद्धेर्लक्षणानि ।

( Hernia ) हर्निया ।

अन्त्रवृद्धिमाह—

वातकोपिभिराहारैः शीततोयावगाहनैः ॥ ७ ॥
धारणेरणभाराध्वविषमाङ्गप्रवर्तनैः ।
क्षोभणैः क्षोभितोऽन्यैश्च क्षुद्रान्त्रावयवं यदा ॥ ८ ॥
पवनो विगुणीकृत्य स्वनिवेशादधो नयेत्[1] ।
कुर्याद्वङ्क्षणसन्धिस्थो ग्रन्थ्याभं श्वयथुं[2] तदा ॥ ९ ॥
[3]उपेक्ष्यमाणस्य च मुष्कवृद्धिमाध्मानरुक्स्तम्भवतीं स वायुः ।

१ तमन्त्रामिति शेषः ।

२ यद्द्वारा सङ्कुचितान्त्रस्थे पर्- [illegible]

३ एवम्भूतमन्त्रवृद्धिमुपेक्ष्यमाणस्यापि [illegible]
"आध्मान मुदरे, रुक् मुष्कयो , स्तम्भो गात्रे" इति [illegible] ।

भारी मालूम होता है, चिकना रहता है ठंडा होता है, । पीड़ा उसमें कम होती है, पाण्डु वर्ण का होता है। गीला होता है और देर में पकता है रक्तज व्रण लाल होता है और उससे खून बहता है ॥ १—४ ॥

अथ रक्तजव्रणे दोषाणां सम्बन्धः ।

रक्तस्यैकैकस्मिन् दोषे द्वन्द्वे च प्रसरमाह—

द्वि-त्रि-जः स्यात्तदन्वयैः ।

म०—द्वित्रिजः स्यात्तदन्वयैरित्यादि । रक्तान्वयैः एकैकदोषैर्द्वन्द्वैश्च, रक्तान्वितैरेकैकदोषैर्द्विजो व्रणः, रक्तान्वितैर्द्वन्द्वत्रयैस्त्रिजः; एवं दोषत्रयेऽपि रक्तसंबन्ध ऊहनीयः, एवं पञ्चदशधा प्रसरो दोषाणामुपगृहीतो भवति । अथवाऽयमर्थः—तदन्वयैर्दोष-द्वन्द्व-त्रयान्वयैः, तेन दोषद्वयान्वयेन द्विजो=द्वन्द्वजो व्रणः, दोषत्रयान्वयेन त्रिजः=सन्निपातजः ॥—

भा०टी०—दो दोषों के लक्षण मिलने से द्वन्द्वज और तीनों दोषों के लक्षणों से त्रिज—सन्निपातज समझना चाहिए। इन्हीं भेदों में यदि रक्तका भी सम्बन्ध हो जाता है तो कुल मिलकर पंद्रह भेद होते हैं, जैसे—१ वातज, २ पित्तज, ३ कफज, ४ सन्निपातज, ५ रक्तज, ६ वातपित्तज, ७ पित्तकफज, ८ वातश्लेष्मज, ९ वातरक्तज, १०पित्तरक्तज, ११ कफरक्तज, १२ वातपित्तरक्तज, १३ वातकफरक्तज, १४ पित्तकफरक्तज, १५ सन्निपातरक्तज ॥—

अथ व्रणानां साध्यासाध्यत्वम् ।

साध्यत्वादिकमाह—

त्वङ्-मांसजः सुखे देशे तरुणस्यानुपद्रवः ॥ ५ ॥
धीमतोऽभिनवः काले सुखे साध्यः सुखं व्रणः ।
गुणैरन्यतमैर्हीनस्ततः कृच्छ्रो व्रणः स्मृतः ॥ ६ ॥
सर्वैर्विहीनो विज्ञेयस्त्वसाध्यो भूर्युपद्रवः ।

(च० चि० ५०११.)

म०—त्वगित्यादि । सुखे देश इति मर्मरहिते देहावयवे । अनुपद्रव इति ज्वरतृष्णाद्युपद्रवरहितः । धीमत इति हिताहितज्ञस्य । काले सुखे इति हेमन्ते शिशिरे च । अन्यतमैरिति उक्तानां गुणानां मध्ये एकतमैर्गुणैः ॥ ५ । ६ ॥—

भा० टी०—यदि व्रण त्वचा और मांस में पैदा हो, किसी मर्म स्थान में न भया हो, रोगी जवान हो, ज्वर, तृष्णा आदि कोई उपद्रव न खड़ा हो गया हो रोगी समझदार अर्थात् पथ्यसे रहनेवाला हो, पुराना न हो, जाड़ा का दिन हो तो जल्दी अच्छा होता है. और यदि इनमें एक आधं की भी कमी रहती है तो कृच्छ्रसाध्य और यदि विल्कुल विपरीत लक्षण हो तो और उपद्रव बहुत उत्पन्न होगये हों तो असाध्य होता है ॥ ५—६ ॥

## अथ दुष्टव्रणस्य लक्षणम् ।

दुष्टव्रणलिङ्गमाह—

> पूतिः पूयातिदुष्टासृक्स्राव्युत्सङ्गी चिरस्थितिः ॥ ७ ॥
> दुष्टो व्रणोऽतिगन्धादिः शुद्धलिङ्गविपर्ययः ।
>
> ( च० चि० अ० १३ )

म०—पूतिरित्यादि । पूयातिदुष्टासृक्स्रावीति पूययुक्तमतिदुष्टं रक्तं सततं स्रवतीत्यर्थः । उत्सङ्गी=कोटरवान् । चिरस्थितिरित्यनेन बहुलदोपसंवन्धं दर्शयति । तथा चोक्तम्—"अनात्मवतामज्ञैश्चोपक्रान्ताः व्रणाः प्रदूष्यन्ति, वृद्धत्वाद्दोषाणाम्" ( सु. सू. स्था. अ. २२ )–इति । दुष्टव्रण इत्यत्र 'परिभावित'-इति शेषः । अतिगन्धादिरिति । आदिशब्देन वर्ण-स्राव-वेदना-ऽऽकृतयो गृहीताः, अतिशब्देन च विशिष्यन्ते । शुद्धलिङ्गविपर्यय इति वक्ष्यमाणशुद्धलिङ्गविपरीतः पूतित्वादियोगादेव । 'पूतिपूयातिदुष्टासृक्स्रावि'–इति क्वचित् पाठे पूतिशब्दः पूयदुष्टासृग्विशेषणम् ॥ ७ ॥

भा०टी०—दुष्ट व्रण का लक्षण–सडा, वदवूदार, पीप और खराव खून वहता हुआ गडहादार, बहुत दिनों का पुराना, गन्ध, व्रण, स्राव, वेदना, आकृति, ये सव जिसमें अधिक हों और शुद्ध व्रण के लक्षणों से रहित व्रण दुष्टव्रण कहलाता है ॥ ७ ॥

## अथ शुद्धव्रणस्य लक्षणानि ।

शुद्धव्रणलक्षणमाह—

> जिह्वातलाभोऽतिमृदुः श्लक्ष्णः स्निग्धोऽल्पवेदनः ॥ ८ ॥
> सुव्यवस्थो निरास्रावः शुद्धो व्रण इति स्मृतः ।
>
> ( च० चि० अ० १३ )

म०—जिह्वेत्यादि । जिह्वातलाभ इति जिह्वातलस्येवाभा प्रभा यस्य स तथा, तलशब्दः स्वरूपवचनः । जिह्वातलाभशब्दश्चात्र मृदुश्लक्ष्णस्निग्धशब्दैः प्रत्येकमभिसंबध्यते; तेन जिह्वातलाभो मृदुः श्लक्ष्णः स्निग्धश्चेत्यादि । सुव्यवस्थ इति उत्सन्नोत्सङ्गित्वरहितः । निरास्राव इति दोषकृतस्रावरहितः । चरके तु पठ्यते—"नातिरक्तो नातिपाण्डुर्नातिश्यावो न चातिरुक् । न चोत्सन्नो न चोत्सङ्गी शुद्धो रोप्यः परं व्रणः ॥" ( च. चि. स्था. अ २५ )—इति, तद्दर्शनादत्र निरास्रवत्वं दोषकृतस्रावहीनत्वं, विगतवेदनत्वं च नानाशूलवेदनारहितत्वम् । व्रणस्रावकृतवेदनायुक्तत्वं पुनरस्त्येव । अत एव रूढेऽपि अरुजमित्युक्तम् ॥ ८ ॥—

भा०टी०—यदि व्रण जीभकी तरह लाल, मुलायम, चिकना हो, पीड़ा कम हो, न ऊँचा हो न नीचा हो, अर्थात् शरीर की तरह समतल हो, किसी दोष से स्राव न निकले तो समझना चाहिये कि यह व्रण शुद्ध होगया है, केवल भरना मात्र है ॥ ८ ॥

### अथ रुह्यमाणव्रणस्य लक्षणानि ।

रुह्यमाणलक्षणमाह—

( सु० सू० अ० २३ )

कपोतवर्णप्रतिमा यस्यान्ताः क्लेदवर्जिताः ॥ ९ ॥
स्थिराश्च पिडकावन्तो रोहतीति तमादिशेत् ।

म०—कपोतेत्यादि । कपोतवर्णप्रतिमा इति पाण्डुधूसराः । स्थिराः=अदारुणाः । 'चिपिटिकावर्ण, इति पाठान्तरे चिपिटिका=मांसचेली, तद्वर्णः ॥ ९ ॥—

भा०टी०—जिस व्रण का किनारा कबूतरकी तरह स्याह हो, मवाद न बहता हो, कुछ कड़ाहट हो; और जिसके इधर उधर फुंसियां होगई हों या चिप्पड़ ऊपर बँधगया हो तो समझना चाहिए कि यह भर रहा है ॥ ९ ॥

### अथ सम्यग्रूढस्य लक्षणानि ।

सम्यग्रूढलक्षणमाह—

रूढवर्त्मानमग्रन्थिमशूनमरुजं व्रणम् ॥ १० ॥
त्वक्सवर्णं समतलं सम्यग्रूढं विनिर्दिशेत् ।

( सु० सू० अ० २३ )

म०—रूढवर्त्मानमित्यादि । रूढवर्त्मानमिति वर्त्म व्रणमार्गो व्रणवारतु रूढो यस्य तम् । अन्तःपूयाभावादशूलमरुजं च । त्वक्सवर्णं त्वचा समानवर्णम् । समतलमिति समं तलेन जिह्वातलेन करतलेन वा, अग्रन्थिमित्यनेन उपरि उच्छूनताया निषेधः, समतलेन त्वधोनिम्नताया निषेधः ॥ १० ॥—

भा० टी०—जिसमें पीप बहने का रास्ता मांस आदि से भरकर बंद हो गया हो, कहीं गाँठ न हो, सूजन और पीड़ा बिल्कुल न हो, रंग चमड़ा की तरह हो गया हो, और समतल हो तो ऐसे व्रण को भरा हुआ समझना चाहिए ॥ १० ॥

## अथ व्रणानां कृच्छ्रसाध्यत्वम् ।

व्याधिविशेषेण व्रणस्य कृच्छ्रसाध्यत्वमाह—

कुष्ठिनां विषजुष्टानां शोषिणां मधुमेहिनाम् ॥ ११ ॥
व्रणाः कृच्छ्रेण सिध्यन्ति येषां चापि व्रणे व्रणाः ।
वसां मेदोऽथ मज्जानं मस्तुलुङ्गं च यः स्रवेत् ॥ १२ ॥
आगन्तुजो व्रणः सिद्ध्येन्न सिद्ध्येद्दोषसंभवः ।

( सु० सू० अ० २३ )

म०—कुष्ठिनामित्यादि । कुष्ठविशेषेणात्यन्तदोषदूषितरक्तादिदूष्यत्वेन सर्वदा दुष्टिरधिकेति कृच्छ्रसाध्यत्वम् । विषजुष्टानामिति दूषीविषार्तानाम् । शोषे मधुमेहे च धातुक्षयात्, व्रणे च रक्तस्रावादाहारसंयमनादधिका दुष्टिः । वसां मेदोऽथ मज्जानं मास्तुलुङ्गं च यः स्रवेदिति मज्जा=अस्थिस्नेहः, मस्तुलुङ्गं=घृतिका । न सिध्येद्दोषसंभवः इति दोषैरतिदूषितानां वसादीनां स्रावस्य बहुव्यापत्तिकरत्वात् ॥ ११ ॥ १२ ॥—

भा०टी०—कोढ़ी, दूषीविषार्त, शोषरोगी और मधुमेही, के यदि व्रण हो जाय, अथवा जिसके एक व्रणमें दूसरा व्रण पदा हो जाय तो वह व्रण कृच्छ्र साध्य होता है। जिस व्रण से वसा, मेद, मज्जा या मस्तुलुङ्ग ( मस्तक के अन्दर का स्नेह ) बहे तो वह व्रण यदि दोषज होता है तो अच्छा नहीं होता और यदि आगन्तुज होता है तो अच्छा हो जाता है ॥ ११—१२ ॥

अथ व्रणानां गन्धविशेषेणासाध्यत्वम् ।

रिष्टरूपां गन्धविकृतिमाह—

मद्यागुर्वाज्य-सुमनः पद्म-चन्दन—चम्पकैः ॥ १३ ॥
सगन्धा दिव्यगन्धाश्च मुमूर्षूणां व्रणाः स्मृताः ।

म०-मद्यागुर्वाज्येत्यादि । सुमना=जाती, सगन्धाः,=समानगन्धाः, दिव्यगन्धाः=अपरिकल्पिताद्भुतपारिजातादिगन्धाः ॥ १३ ॥—

भा० टी०—जिस व्रण में मद्य, अगर, घी, चमेली, कमल, चन्दन, चम्पा के समान गन्ध हो, या अद्भुत दिव्य गन्ध हो तो रोगी नहीं बचता ॥ १३ ॥—

अथ व्रणानामसाध्यलक्षणानि ।

ये च मर्मस्वसंभूता भवन्त्यत्यर्थवेदनाः । ॥ १४ ॥
दह्यन्ते चान्तरत्यर्थं बहिः शीताश्च ये व्रणाः ।
दह्यन्ते बहिरत्यर्थं भवन्त्यन्तश्च शीतलाः ॥ १५ ॥
प्राण-मांस-क्षय-श्वास-कासा-ऽरोचक-पीडिताः ।
प्रवृद्ध-पूय-रुधिरा व्रणा येषां च मर्मसु ॥ ६ ॥
क्रियाभिः सम्यगारब्धा न सिध्यन्ति च ये व्रणाः ।
वर्जयेदपि तान् वैद्यः संरक्षन्नात्मनो यशः ॥ १७ ॥
व्रणे श्वयथुरायासात् स च रागश्च जागरात् ।
तौ च रुक् च दिवास्वापात्ताश्च मृत्युश्च मैथुनात ॥ १८ ॥

इति श्रीमाधवकरविरचिते माधवनिदाने शारीरव्रणनिदानं समाप्तम् ।

[ सु० उ० अ० १६ ]

म०—ये च मर्मस्वसंभूता इति । मर्मसु न जाता अपि भृशवेदनाः, मर्मजातत्वेन हि भृशवेदनावत्त्वं युक्तम् । प्राणमांसक्षय इति प्राणक्षयेण शक्तिक्षयः, मांसक्षयेण चोपचयक्षयः । अनुक्तमप्यशेषं रिष्टं संग्रहणन्नाह—क्रियाभिरित्यादि ॥ १४–१८ ॥

इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायां शारीरव्रणनिदानं समाप्तम् ।

भा०टी०—व्रणोंके असाध्य लक्षण-मर्मस्थानों में पैदा हुए व्रणोंमें पीड़ा स्वभावतः बहुत हुआ करती है,परन्तु जो व्रण मर्म स्थानमें न हों तो भी उनमें पीड़ा बहुत हो तो वे व्रण असाध्य होते हैं। जो व्रण बाहर ठंडे होते और अन्दर से जलते हैं, या बाहर जिनमें बड़ी जलन रहती है और अन्दर ठंडक, ऐसे व्रण नहीं अच्छे होते। व्रण के रोगो की शक्ति घट जाय और शरीर दुबला हो जाय, श्वास, कास,अरुचि रोग उत्पन्न हो गये हों, व्रण से खून और पीप बहुत बहता हो तो उसे असाध्य समझना चाहिए। मर्मस्थानों में पैदा हुए व्रण और जिनकी दवा अच्छी तरह होती हो, परन्तु अच्छे न होते हों ऐसे व्रणोंकी चिकित्सा वैद्य नकरे,नहीं तो सिर्फ बदनामी ही हाथ आती है। व्रण की हालत में किसी प्रकार के परिश्रम करने से सूजन हो जाती है, और रातमें जागने से सूजन और लालवर्ण हो जाता है। दिनमें सोने से सूजन, राग तथा पीड़ा होती है और मैथुन करनेसे सूजन,राग पीड़ा और मृत्यु हो जाती है इसलिए परिश्रम, जागरण, दिवास्वाप और मैथुन से सर्वथा बचना चाहिए ॥१४—१८॥

इति श्री हरिनारायणशर्मवैद्यकृतायां निदानदीपिकायां
रुग्विनिश्चयभाषाटीकायां व्रणशोथनिदानम् ।

## अथ सद्योव्रणनिदानम् ।

( Wounds )वूण्ड्स

### अथागन्तुव्रणानां लक्षणानि ।

शारीरव्रणमभिधायागन्तुव्रणमाह—

नानाधारमुखैः शस्त्रैर्नानास्थाननिपातितैः ।
भवन्ति नानाकृतयो व्रणास्तांस्तान्निबोध मे ॥ १ ॥
छिन्नं भिन्नं तथा विद्धं क्षतं पिच्चितमेव च ।
घृष्टमाहुस्तथा षष्ठं तेषां वक्ष्यामि लक्षणम् ॥ २ ॥

[ सु० चि० अ० २ ]

म०—नानाधारमुखैरित्यादि । नाना धारा मुखानि च येषां तानि तथा । स्थानविशेषोऽपि शस्त्रनिपाततुल्यत्वेनाकृतिविशेषे हेतुरित्यत उक्तम्—नानास्थाननिपातितैरिति ॥ १ ॥ २ ॥

भा०टी—हथियारों का घाव और मुद्ध कई तरह का होता है, उनमें किसी हथियार से शरीर में किसी जगह कट जाने से जिस तरह का घाव होजाता है उन घावों को बतलाया जाता है। वे घाव ६ प्रकार के होते हैं १छिन्न, २ भिन्न, ३ विद्ध, ४ क्षत ५ पिच्चित और ६ घृष्ट। इन का लक्षण आगे बतलाया जायगा॥१ २॥

## अथ छिन्नव्रणस्य लक्षणम्।

(Cut-wound) कटउन्ड

छिन्नलक्षणमाह—

तिर्यक् छिन्न ऋजुर्वाऽपि यो व्रणस्त्वायतो भवेत्।
गात्रस्य पातनं तद्धि छिन्नमित्यभिधीयते॥ ३॥
(सु० नि० अ० २)

म०—तिर्यगित्यादि। तिर्यगिति तिर्यग्व्यवस्थितः। छिन्नः=छेदसंपन्नः। ऋजुरवक्रः। गात्रस्य पातनमिति गात्रावयवस्य तदेकदेशरूपस्य वा गात्रस्य पातनम्॥ ३॥

भा०टी०—छिन्न का लक्षण—तिरछा या सीधा फटकर जो घाव लंबा हो उसे छिन्न कहते हैं। उसमें जहां घाव लगा रहता है वह स्थान गायब होजाता है॥ ३॥

## अथ भिन्नव्रणस्य लक्षणानि।

(Rupture) रपचर

भिन्नलक्षणमाह—

शक्ति-*दन्तेषु-खड्गाग्र-विषाणैराशयो हतः।
यत् किंचित् प्रस्रवेत्तद्धि भिन्नलक्षणमुच्यते॥ ४॥
(सु० नि० अ० २)

म०—शक्तीत्यादि। विषाणं=दन्तः शृङ्गं च। एतच्छिन्नलक्षणं पारिभाषिकं, तेन व्यध एवाशयदेशे भेद उच्यते, आशयदेशरहिते तु व्यधः। यस्मिन्नि-दित्यादि। यस्य मूत्ररुधिरादेर्य आशयो भिन्नः स तत् प्रस्रवेत्, तेन बस्तिर्भिन्नो मूत्रं रुधिराशयो रुधिरमिति॥ ४॥

---

* 'दन्त' स्थाने 'कुन्त' इति पाठान्तरम्।

१—आशयदेशे कोष्ठे।

भा० टी०—शक्ति, भाला, दांत, सींग, तलवारकी नोक, बाण वगैरह से किसी आशय के फटजानेपर यदि उसे कुछ बहने लगता है तो उससे भिन्न कहते हैं। जैसे मूत्राशय के विध जानेपर मूत्र और रुधिराशय के विधजाने पर रुधिर बहता है ॥४॥

अथावयवविशेषाणां कोष्ठसंज्ञत्वम्।

तत्र तत्र विकाराश्च।

यत्र भूयसामाशयानां स्थाने भेदव्यपदेशस्तमाह-

स्थानान्यामाग्निपक्वानां मूत्रस्य रुधिरस्य च।
हृदुण्डुकः फुप्फुसश्च कोष्ठ इत्यभिधीयते ॥ ५ ॥
[1]तस्मिन् भिन्ने रक्तपूर्णे ज्वरो दाहश्च जायते।
मूत्रमार्ग-गुदाऽऽस्येभ्यो रक्तं घ्राणाच्च गच्छति ॥ ६ ॥
मूर्च्छा श्वासस्तृषाऽऽध्मानमभक्तच्छन्द एव च।
विण्-मूत्र-वात-सङ्गश्च स्वेदास्रावोऽक्षिरक्तता ॥ ७ ॥
लोहगन्धित्वमास्यस्य गात्रदौर्गन्ध्यमेव च।
हृच्छूलं पार्श्वयोश्चापि विशेषं चात्र मे शृणु ॥ ८ ॥
आमाशयस्थे रुधिरे रुधिरं छर्दयत्यपि।
आध्मानमतिमात्रं च शूलं च भृशदारुणम् ॥ ९ ॥
पक्वाशयगते चापि रुजा गौरवमेव च।
अधःकाये विशेषेण शीतता च भवेदिह ॥ १० ॥

(सु० चि० अ० २)

म०—स्थानानीत्यादि। आमस्य स्थानमामाशयः, अग्नेः पच्यमानाशयः, मलस्य पक्वाशयः, मूत्रस्य वस्तिः, रुधिरस्य यकृत्प्लीहानौ, हृत्=हृदयम्, उण्डुक=इक्षुरसपाकमलवधः शोणितमलस्तज्ज उण्डुकः, स चान्त्रदेशे व्यवस्थितः पुरीषाधानमिति, फुप्फुस इति हृदयस्य वामपार्श्वे ( रक्ताधारः ) 'फुप्फुस' इति ख्यातः। मूत्रमार्ग-गुदा-ऽऽस्येभ्यो रक्तं घ्राणाच्च गच्छतीति वस्त्यादौ भिन्ने

---

१—तस्मिन् भिन्न इत्यादिना हृच्छूलं पार्श्वयोश्चापीत्यन्तेन सामान्यकोष्ठभेदलक्षणम्।

मेहन-गुदाभ्यां रक्तं निःसरति, आमाशयादिभेदे तु मुखघ्राणाभ्यां रक्तनिर्गमः । स्वेदास्राव इति स्वेदस्यात्यन्तस्रुतिः । पार्श्वयोश्चापीति शूलमिति संबन्धः । मे इत्यव्ययं मत्त इत्यर्थः । आमाशयस्थ इत्यादि आध्मानं रक्तावलम्बनाद्वायोः । रुजा=शूलम् । गौरवं रक्तबहुत्वात् । अधःकाये विशेषेण शीततेति व्याधिप्रभावात् ॥ ५-१० ॥

भा० टी०-आम, अग्नि,पक्व, मूत्र, रुधिर जिस जगह रहता है वे स्थान और हृदय, उण्डुक(बड़ी आंतका एक हिस्सा) फुप्फुस (फेफड़ा) इन सबको कोष्ठ कहते हैं । सामान्यतः कोष्ठ के भेदन हो जाने पर उनमें खून भर जाने से ज्वर, दाह होता है, यदि नाभिके नीचे के कोष्ठ भिन्न होते हैं तो लिङ्ग और गुद मार्ग से और नाभि के ऊपर वाले कोष्ठो में भेदन होता है तो मुह और नाकसे खून निकलता है । मूर्च्छा, प्यास, आध्मान, अरुचि, पाखाना, पेशाब, हवा का निकलना बंद हो जाता है । पसीना निकलता है । आँखलाल हो जाती है । मुहमें लोहायन्ध और शरीर भरमें दर्द रहता है, तथा हृदय और पसुली में दर्द होता है आमाशय में भेदन होकर रक्त भर जाने से खून की कय होती है । पेट में अफरा होता है, और बड़ी जोर से मल होता है । पक्वाशय में भेदन होने पर पीड़ा होती है, बोझ मालूम होता है, और नाभि के नीचे ठंडक मालूम होती है ॥ ५-१० ॥

### अथ विद्धव्रणस्य लक्षणम्

( Punctured wound ) पंगचर्ड ऊंड

विद्धलक्षणमाह—

सूक्ष्मास्यशल्याभिहतं यदङ्गं त्वाशयं विना ।
उत्तुण्डितं निर्गतं वा तद् विद्धमिति निर्दिशेत् ॥ ११ ॥

( सु० चि० अ० २ )

म०-सूक्ष्मास्यशल्येत्यादि । आशयं विनेति उक्तामाशयं विना । उत्तुण्डितम् अनिर्गतशल्योपलक्षणं, तेनानुत्तुण्डितमुत्तुण्डितं च विद्धं बुध्यते, निर्गतेन च निर्गतमुखं विद्धं सर्वथा निर्गतं च गृह्यते: तेन तन्त्रान्तरे "विद्धमुत्तुण्डितमनुत्तुण्डितं भिन्नं निर्भिन्नम्"—इति यच्चतुष्प्रकारमभिहितं तद् सर्वं संगृहीतम् ॥ ११ ॥

भा०टी०—विद्ध लक्षण—सूक्ष्म-महीन मुह वाले शल्यों से जो अंग विध गया हो (आशय नहीं) और शल्यका मुह ऊपर निकला हो या न निकला हो,अथवा शल्य एक दम वाहर निकल गया हो तो उसे विद्ध कहते हैं ।। ११ ॥

अथ क्षतव्रणस्य लक्षणम् ।

( Contused wound ) कन्ट्यूज्डउन्ड

क्षतमाह—

नातिच्छिन्नं नातिभिन्नमुभयोर्लक्षणान्वितम् ।
विषमं व्रणमङ्गे यत् तत्क्षतं त्वभिधीयते ॥ १२ ॥

[ सु० चि० अ० २ ]

म०—नातिच्छिन्नमित्यादि । नातिच्छिन्नमिति नावगाढच्छेदम् । नातिभिन्नमिति नातिविदीर्णाशयम् । उभयोर्लक्षणान्वितमिति स्तोकच्छेदस्तोकावदरणयोगादुभयलक्षणयुक्तम् । विषमं व्रणमङ्गे यदिति अङ्गवैषम्यकरं व्रणं यत्तत् क्षतम् ॥ १२ ॥

भा०टी०—क्षतका लक्षण-जिसमें छिन्न, भिन्न, दोनों का पूरा २ लक्षण न हो न तो दो टुकड़ा हो और पूरी तरह से चिर गया हो, ऐसे घाव को क्षत कहते हैं ऐसा घाव शरीर को खराव कर देता है ॥१२॥

अथ पिच्चितव्रणस्य लक्षणम् ।

पिच्चितलक्षणमाह—

प्रहारपीडनाभ्यां तु यदङ्गं पृथुतां गतम् ।
सास्थि तत् पिच्चितं विद्यात् मज्ज-रक्त-परिप्लुतम् ॥ १३ ॥

( सु० चि० अ० २ )

म०—प्रहारेत्यादिना । प्रहारो मुद्गरादिना, पीडनं कपाटादिना । पृथुतामिति चिप्पिटताम् । मज्जरक्तपरिप्लुतमित्यनेन व्रणभावात् मज्जरक्तागमं दर्शयति । तेन यत् व्रणं पिच्चितं, तद्भग्नस्य तथा सद्योव्रणस्य च चिकित्साविषयम् ॥ १३ ॥

भा०टी०—पिच्चित लक्षण-मुगदर या किवाड़ वगैरह से दबजाने पर शरीर का कोई हिस्सा पिचला हो जाता है, साथ २ हड्डी भी पिचली हो जाती है, और उस जगह मज्जा और रक्त भर जाता है, उसे पिच्चित कहते हैं ॥ १३ ॥

### अथ घृष्टव्रणस्य लक्षणम् ।

( Excoriation ) एक्सकोरियेशन

घृष्टलक्षणमाह—

घर्षणादभिघाताद्वा यदङ्गं विगतत्वचम् ।
उषा-स्रावान्वितं तच्च घृष्टमित्यभिधीयते ॥ १४ ॥

[ सु० नि० अ० २ ]

म०-घर्षणादित्यादि । घर्षणात् कर्कशवस्त्रादिना । विगतत्वगिति पाठं त्यक्त्वा विगतत्वचेति पाठः साधुः, विगतत्वचोपलक्षितमङ्गम् । उषा=ऊष्मनिर्गम-वद्व्यथा ॥ १४ ॥

भा० टी०—भीत वगैरह से शरीर का कोई हिस्सा घिस जाने से अथवा मामूली चोट लगने से ऊपर का चमड़ा छिल जाय और वहाँ जलन हो तथा पंछा-पानी सा बहे तो उसे घृष्ट कहते हैं ॥ १४ ॥

### अथ सशल्यव्रणस्य लक्षणम् ।

श्यावं सशोथं पिडकाचितं च मुहुर्मुहुः शोणितवाहिनं च ।
मृदूद्गतं बुद्बुदतुल्यमांसं व्रणं सशल्यं सरुजं वदन्ति ॥ १५ ॥

( सु० नि० अ० २ )

भा० टी०—यदि सुजन हो, स्याह जगह हो, पिडकियां निकल आवें, बार २ खून निकले, मांस मुलायम और बुल्ला की तरह ऊंचा हो गया हो, और पीड़ा होतो समझना चाहिए कि इस घाव में अन्दर शल्य—कांटा वगैरह अभी मौजूद है—निकला नहीं ॥ १५ ॥

### अथ कोष्ठभेदस्य लक्षणम् ।

कोष्ठभेदमाह—

त्वचोऽतीत्य सिरादीनि भित्त्वा वा परिहृत्य वा ।
कोष्ठे प्रतिष्ठितं शल्यं कुर्यादुक्तानुपद्रवान् ॥ १६ ॥

( सु० नि० अ० २ )

म०–त्वच इत्यादि । त्वच इति सप्तत्वचः । सिरादीनीति मांसस्नाय्वस्थिसन्धीनि । परिहृत्य वेति परिहारपक्षेऽपि कोष्ठभेदस्य संगतत्वात्; सिराव्यधलिंगं चात्रैव "सुरेन्द्रगोपप्रतिमम्"–इत्यादिना व्यक्तीभविष्यति । उक्तानिति प्रनष्टशल्यविज्ञानीये । तत्र ह्युक्तं,–"कोष्ठगते त्वाटोपानाहौ मूत्रपुरीषाहारदर्शनं च व्रणमुखाद्भवति" ( सु. सू. स्था. अ. २६ )–इति ॥ १६ ॥

भा०टी०—त्वचा को भेद कर, और शिरा, मांस, अस्थि, स्नायु, सन्धि को भेद कर, या इन्हें न भेदकर कोष्ठ में पहुँचा हुआ शल्य, गुड़गुड़ाहट, घाव से मैला पेशाब भोजन का हिस्सा का निकलना पेटका तनाव आदि उपद्रव पैदा करते हैं ॥ १६ ॥

### अथासाध्यकोष्ठभेदस्य लक्षणम् ।

असाध्यकोष्ठभेदलिङ्गमाह—

तत्रान्तर्लोहितं पाण्डु-शीत-पाद कराऽऽननम् ।
शीतोच्छ्वासं रक्तनेत्रमानद्धं च विवर्जयेत् ॥ १७ ॥

( सु० चि० अ० २ )

म०–तत्रेत्यादि । तत्र कोष्ठे अन्तर्लोहितमिति अभ्यन्तरस्थितरक्तम्, अनिःसृतरक्तमिति यावत् । आनद्धमित्यानाहवन्तम् ॥ १७ ॥

भा० टी०—कोष्ठ भेदन होने पर यदि खून बाहर न निकले, हाथ, पैर और मुह पीला और, ठंडा होगया है। सांस ठण्डी हो, आंखें लाल हो जाँय और पेट फूलगया हो तो वह असाध्य होता है ॥ १७ ॥

### अथ मांस-शिरा-स्नाय्वस्थि-सन्धि-मर्मसु जातानां क्षतानां सामान्यलक्षणानि ।

मांस-सिरा-स्नाय्वस्थि-सन्धि-मर्मसु पञ्चसु क्षतेषु सामान्य-लिङ्गमाह—

भ्रमः प्रलापः पतनं प्रमोहो विचेष्टनं ग्लानिरथोष्णता च ।
स्रस्ताङ्गता मूर्च्छनमूर्ध्ववातस्तीव्रा रुजा वातकृताश्च तास्ताः ॥ १८ ॥
मांसोदकाभं रुधिरं च गच्छेत् सर्वेन्द्रियार्थोपरमस्तथैव ।
दशार्धसंख्येष्वथ विक्षतेषु सामान्यतो मर्मसु लिङ्गमुक्तम् ॥ १९ ॥

( सु० सू० अ० २५ )

म०-भ्रम इत्यादि । विचेष्टनं=विरुद्धचेष्टनं करचरणादिविक्षेपादिकम् । ग्लानिर्बलक्षयः । स्रस्ताङ्गता=अङ्गग्रन्थिविश्लेषवद्व्यथा । मूर्च्छनमिन्द्रियमोहः । इन्द्रियार्थोपरम=इन्द्रियाणां स्वविषयेषु=रूपादिषु उपरमो=ग्रहणाशक्तिः । इत्यर्थ-संख्येषु=पञ्चसु ॥ १८ ॥ १९ ॥

भा० टी०—भ्रम, प्रलाप, पतन=जमीन पर गिरजाना, प्रमोह-मन ठिकाने न रहना, विचेष्टन—विरुद्ध व्यापार-हाथ पर पटकना, निर्बलता, गरमी मालूम होना, शरीर सुस्त होजाना, मूर्च्छन=सब इन्द्रिया का बेकाम होजाना, डकार आना, अनेक प्रकार को वातकी पीड़ा होना, गुलाबी रंगका पतले खून बहना । इन्द्रियों का अपने २ विषयों का ग्रहण न करना, ये लक्षण मांस-शिरा-स्नायु-अस्थि-सन्धि इन पांचों मर्म स्थानों के क्षत होने पर होते हैं ॥ १८-१९ ॥

अथ मर्मरहितानां सिरादीनां विद्धलक्षणानि ।

सिरादयो मर्मरूपा अमर्मरूपाश्च सन्ति, तत्र पूर्वं मर्मरहितानां सिरादीनां विद्धलिङ्गमाह—

सुरेन्द्रगोपप्रतिमं प्रभूतं रक्तं स्रवेत् तत् क्षतजश्च वायुः ।
करोति रोगान् विविधान् यथोक्तान् सिरासु विद्धास्वथवा क्षतासु॥२०॥
कौब्ज्यं शरीरावयवावसादः क्रियास्वशक्तिस्तुमुला रुजश्च ।
चिराद् व्रणो रोहति यस्य चापि तं स्नायुविद्धं पुरुषं व्यवस्येत्॥२१॥
शोफाभिवृद्धिस्तुमुला रुजश्च बलक्षयः सर्वत एव शोथः ।
क्षतेषु सन्धिष्वचलाचलेषु स्यात् सर्वकर्मोपरमश्च लिङ्गम् ॥ २२ ॥
घोरा रुजो यस्य निशादिनेषु सर्वास्ववस्थासु च नैति शान्तिम् ।
भिषग् विपश्चिद् विदितार्थसूत्रस्तमस्थिविद्धं पुरुषं व्यवस्येत्॥२३॥
( सु० सू० अ० २५ )

म०-सुरेन्द्रगोपेत्यादि । यथोक्तानि शोणितवर्णनीयोक्तान् । तत्र चोक्तं,-"तदतिप्रवृत्तं शिरोऽभितापमान्ध्यमाक्षेपादींश्च करोति ( सु. सू. स्था. अ. १४ )-इति । विद्धासु बाणादिना । क्षतासु खड्गादिना । कौब्ज्यं=कुब्जता । तुमुला=गहनाः । सन्धिष्वचलाचलेष्विति अचलेषु=निश्चेष्टेषु, चलेषु=चेष्टावत्सु, सन्धयश्चलाचलभेदेन द्विविधाः । तथाच सुश्रुतः,-'शाखासु हन्वोः कट्यां च

चेष्टावन्तश्च सन्धयः । शेषास्तु सन्धयः सर्वे विज्ञातव्याः स्थिरा बुधैः" ( सु. शा. स्था. अ. ५ )-इति ॥ २०—२३ ॥

भा०टी०—सिरा आदि मर्म भी हैं और नहीं भी हैं । मर्म सिरा आदि के क्षत का लक्षण पहले वतला दिया गया है, अब बिना मर्म के सिरा वगैरह के क्षत होने पर लक्षण लिखा जाता है, बाण वगैरह से सिराओं के विधजाने पर वीर वहूटी की तरह लाल खून बहुत निकलता है। पीड़ा होती है, शिरमें पीड़ा होती है, अंधापन हो जाता है, आक्षेप आदि वात के रोग होते हैं। स्नायु के विद्ध होने पर कूबड़ निकल आता है। सब शरीर के हिस्से सुस्त पड़ जाते और बेकाम हो जाते है, बड़ी जबर्दस्त पीड़ा होती है, और घाव भरने में बहुत देर लगती है। सन्धियां दो तरह की होती है-चल और स्थिर। जबड़ा, कमर और हाथ पैर की सन्धियां चल होती हैं और दूसरी जगह स्थिर। इन दोनों प्रकार की सन्धियों में क्षत हो जाने पर खूब सूजन हो जाती है। बड़ी पीड़ा होती है, नाताकती होती है, और सब जगह सूजन हो जाती है। जिस सन्धिपर क्षत होता है वह फैल और सिकुड़ नहीं सकती। जिसे दिनरात बेहद पीड़ा हो, सोने, बैठने, चलने, खड़े रहने, उठने, किसी हालत में आराम न मिले, शल्यतन्त्र ज्ञाता वैद्य उसे अस्थिविद्ध जाने ॥ २०—२३ ॥

### अथैषां मर्मविद्धानां लक्षणातिदेशः ।

मर्मरहितानां सिरादीनां विद्धलक्षणमभिधाय सिरादिमर्मविद्धलिङ्गमतिदेश यन्नाह—

**यथास्वमेतानि विभावयेच्च लिङ्गानि मर्मस्वभिहतेषु ।**

( सु० सू० अ० २५ )

म०—यथास्वमेतानीत्यादि । विभावयेच्चेति चकारो भिन्नक्रमे, तेन एतानि लिङ्गानि तथा सामान्यलिङ्गानि च जानीयादित्यर्थः ॥—

### अथ मांसक्षतस्य लक्षणम् ।

अनुक्तमांसमर्मणो विद्धस्य लिङ्गमाह—

**पाण्डुर्विवर्णः स्पर्शितं न वेत्ति यो मांसमर्मण्यभिपीडितःस्यात् ॥ २४ ॥**

( सु० सू० अ० २५ )

---

१ मर्मसु सिरामर्मसु, अभिताडितेषु विद्धेषु । एतानीति-एतानि पूर्वोक्तमर्मरहितशिरादिविद्धलिङ्गानि-सुरेन्द्रगोपप्रतिममित्यादीनि तथा सामान्यलक्षणानि—भ्रमः प्रलाप इत्यादीनि च ।

म०—पाण्डुर्विवर्ण इत्यादि । ननु, सिरादिविद्धलिङ्गवत् मांसविद्धलिङ्गमपि पूर्वं कुतो नोपदिष्टम् ? उच्यते, केवलमांसविद्धस्याबहुव्यापत्करत्वात् पूर्वमनुपादानम् ॥ २४ ॥

भा० टी०—मर्म सिरा आदि के क्षत हो जाने पर भी ये ही लक्षण होते हैं और पहले कहे हुए "भ्रम" आदि सामान्य लक्षण भी होते हैं । मांसमर्म स्थानमें वेध होजाने पर पाण्डु वर्ण, कान्ति नाश, और स्पर्श ज्ञान से रहित होना है ॥ २४ ॥

अथ सर्वेषां व्रणानां सामान्योपद्रवाः ।

सर्वव्रणानामुपद्रवानाह—

विसर्पः पक्षघातश्च सिरास्तम्भोऽपतानकः ।
मोहोन्मादव्रणरुजो ज्वरस्तृष्णा हनुग्रहः ॥ २५ ॥
कासश्छर्दिरतीसारो हिक्का श्वासः सवेपथुः ।
षोडशोपद्रवाः प्रोक्ता व्रणानां व्रणचिन्तकैः ॥ २६ ॥

[ च० चि० अ० २५ ]

इति श्रीमाधवकरविरचिते माधवनिदाने सद्योव्रणनिदानं समाप्तम् ॥

म०—विसर्प इत्यादि ॥ २५ ॥ २६ ॥

इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायां सद्योव्रणनिदानं समाप्तम् ।

भा० टी०—व्रणके उपद्रव—विसर्प, पक्षघात, सिरास्तम्भ, अपतानक, मूर्च्छा, उन्माद, पीड़ा, ज्वर, तृष्णा, हनुग्रह, कास, छर्दि, अतिसार, हिक्का श्वास और कम्प ये सोलह उपद्रव व्रणों के जर्राह लोगोंने बतलाये हैं ॥ २५–२६ ॥

इति श्रीहरिनारायणशर्मवैद्यकृतायां निदानदीपिकायां हरिनिदानस्य भाषाटीकायां सद्योव्रणनिदानम् ।

## अथ भग्ननिदानम् ।

### ( Fracture ) फ्रेकचर

### अथ भग्नस्य भेदाः ।

आगन्तुसामान्याद्भग्ननिदानम् । द्विविधं हि भग्नं सव्रणमव्रणं च, तत्र सव्रणमभिधायाव्रणमाह—

**भग्नं समासाद्द्विविधं हुताश काण्डे च सन्धौ च हि तत्र सन्धौ ।**
**उत्पिष्ट-विश्लिष्ट-विवर्तितं च तिर्यग्गतं क्षिप्तमधश्च षट् च ॥ १ ॥**

**म०**—भग्नं समासादित्यादि । हुताश इति अग्निवेशसंबोधनं, चरके हुताशशब्देनाग्निवेशोऽभिधीयते, एकदेशेनापि समुदायप्रतीतेः । काण्डे च सन्धौ चेति सन्धिविच्छिन्नमेकं, द्वितीयं काण्डभग्नं; काण्डमस्थिकाण्डः, काण्डेन च नलककपाल-वलय-तरुण-रुचकानां ग्रहः, तत्र भग्नं काण्डे भग्नं; द्वयोरस्थ्नोः सन्धानं सन्धिः, तद्विश्लेषः=सन्धिमुक्तम् । तत्र सन्धाविति सन्धौ मुक्ते लिङ्ग'मभिधीयते' इति शेषः । ननु कथं सन्धिमुक्तं भग्नमुच्यते ? अस्थ्नां हि भङ्गो युक्तः ॥ उच्यते, अस्थिविश्लेषोऽत्र भग्नोऽभिमेतः, स च काण्डभग्ने सन्धिमुक्ते चास्तीति न दोषः ॥ १ ॥

**भा० टी०**—हे अग्निवेश, भग्न दो जगह होता है सन्धियों में और अस्थिसमूहमें, सन्धिभग्न ६ प्रकार का होताहै—१ उत्पिष्ट, २ विश्लिष्ट, ३ विवर्त्तित, ४ तिर्यक्क्षत, ५ ऊर्ध्वक्षिप्त, ६ अधःक्षिप्त भग्नका अर्थ होताहै—टूटजाना और मोच खाना, खसक जाना या ढीला हो जाना ॥१॥

### अथ सन्धिभग्नलक्षणानि ।

सन्धिभग्नस्य सामान्यलिङ्गमाह—

**प्रसारणाऽऽकुञ्चन-वर्तनोग्रा रुक् स्पर्शविद्वेषणमेतदुक्तम् ।**
**सामान्यतः सन्धिगतस्य[1] लिङ्गम्—**

**म०**—प्रसारणेत्यादि । प्रसारणाकुञ्चनवर्तनोग्रा. रुगिति प्रसारणादिषु उग्रा रुक् । [2]वर्तनं=निष्क्रियतयाऽवस्थानम् ॥—

**भा० टी०**—सन्धिभग्न का सामान्य लक्षण-फैलाने, सिकोड़ने और स्थिर रखने में भारी पीड़ा होना, छूनेमें दर्द मालूम होना, ॥ २ ॥

---

१ सन्धिगतस्य सन्धिभग्नस्येत्यर्थ. ।

२ वर्तनं परिवर्तनमिति भावमिश्रः ।

अथोत्पिष्टादीनां लक्षणानि ।

उत्पिष्टादिलिङ्गमाह—

उत्पिष्टसन्धेः श्वयथुः समन्तात् ॥ २ ॥
विशेषतो रात्रिभवा रुजा च, विश्लिष्टजे तौ च रुजा च नित्यम् ।
विवर्तिते पार्श्वरुजश्च तीव्राः, तिर्यग्गते तीव्ररुजो भवन्ति ॥ ३ ॥
क्षिप्तेऽतिशूलं विषमत्वमस्थ्नोः क्षिप्ते त्वधो रुग् विघटश्च सन्धेः ।

म०—उत्पिष्टसन्धेरित्यादि उत्पिष्टे=द्वाभ्यामास्थिभ्यां सन्धौ घर्षणम् । श्वयथुः समन्तादिति उभयभागे शोथः, उभयतः सन्ध्यस्थ्नोर्घर्षितत्वात् । विशेषतो रात्रिभवा रुजा चेति अभिघातकुपित एव रात्रौ शैत्येनात्यन्तं वृद्धो वायुः रुजां करोति । अत्र चूर्णितत्वेन मार्गावरणात् वातकोप इत्यर्थः । विश्लिष्टजे इति विश्लिष्टजाते सन्धिमुक्ते, विश्लिष्टं=मनाक् सन्धिविश्लेषः शिथिलतामात्रं, विश्लिष्टमिति भावे क्तः । तौ चेति=विश्लिष्टे रात्रिरुजा-समन्ताच्छोथौ; समन्ताच्छोथोऽप्यत्राल्पो बोध्यः, सन्धेरनभिघातात् । सन्धिविक्रियया अस्थ्नोरपगतत्वात् । मध्यानिम्नतरं, "उत्पिष्टमथ विश्लिष्टं सन्धिं वैद्यो न घट्टयेत्"—(सु. चि. स्था. अ. २) इति वचनात्; मनाग्विक्रियया वा । रुजा च नित्यामिति सर्वदा रुजा वर्तते भवतीत्युत्पिष्टाद्विशेषः । विवर्तिते इति 'सन्धौ' इति शेषः, विवर्तिते=विपरीतं वर्तिते, विवर्तनं सन्धौ द्वयोरस्थ्नोर्विवृतिर्विभ्रमणमनार्जवता । पार्श्वरुजश्च तीव्रा इति अत्यक्तसन्धिस्थानयोः पार्श्वसन्ध्यस्थ्नोः पार्श्वगतत्वात्तीव्राः पार्श्वरुजः । तिर्यग्गत इति तिर्यक्क्षिप्ते । अत्र ह्येकं सन्ध्यस्थि सन्धिस्थानं त्यक्त्वा तिर्यग्याति । क्षिप्तेऽतीति अतिक्षिप्ते; 'ऊर्ध्वम्' इति शेषः । अत्र ह्येकास्थिविक्रियया उभयास्थिविक्रियया वा द्वयोरप्यस्थ्नोः परस्परातिक्रमणं दूरगमनं वा; विश्लिष्टे तु मनाक् शिथिलतामात्रं; अधः क्षिप्ते तु किञ्चिदधोगमनमिति विशेषः । 'विषमाश्च सन्ध्नोः' इति पाठे तु 'रुज' इति शेषः । क्षिप्ते त्वधोरुग्विघटश्च सन्धेरिति अधःक्षिप्ते रुक्=रुजा, सन्धेर्विघटश्च=विघटनम् । 'विरुद्धचेष्टा विघटस्य' इति पाठान्तरे विघटितस्य सन्धेरित्यर्थः । अत्र अधोऽस्थिगमनम् । अधः क्षिप्तवदूर्ध्वं क्षिप्तस्याप्यभिधाने प्राप्ते, अनुक्तिरतिक्षिप्तेऽवरोधात् ॥ २ ॥ ३ ॥—

---

१ विश्लिष्टजसन्धिभ्रंशः ॥ Dislocation. विश्लेषक

भा०टी०-सन्धि स्थानमें दो हड्डियोंका घिस जाना उत्पिष्ट कहलाता है। उत्पिष्टभग्न में चारो तरफ सन्धि के सूजन हो जाती है। दिनमें और रातमें विशेषकर पीड़ा होती है। सन्धिस्थान का थोडा ढीला पड़ जाना-विश्लिष्ट कहा जाता है। इस में भी चारो तरफ सूजन, रात में विशेष पीड़ा और हर वख्त भी पीड़ा हुआ करती है। परन्तु इसमें सूजन कम होती है। सन्धि अलग न हो किन्तु दोनों अस्थि टेढ़ी होजाँय, उसमें टेढ़ी हुई दोनों हड्डियों के पार्श्व में पीड़ा होती है। उसे विवर्तित कहते हैं। इसमें सन्धि स्थान सम ( बराबर ) नहीं रहता, किन्तु विषम ( ऊँचा, नीचा, टेढ़ा ) हो जाता है। सन्धि में एक हड्डी अलग होकर तिरछी हो जाय और बहुत पीड़ा करे तो उसे तिर्यक् क्षिप्त कहते हैं। सन्धि स्थान की दो हड्डियों में एक हड्डी दूसरी हड्डी के ऊपर हो जाय या दूर हट जाय और वहाँ जोर से शूल हो और कभी कम हो उसे क्षिप्त कहते हैं। सन्धि स्थान की दो हड्डियों का जोड़ अलग होकर एक हड्डी दूसरी हड्डी के नीचे चली जाय और पीड़ा हो, उसे अधःक्षिप्त कहते हैं ॥ २—३ ॥

### अथ काण्डेभग्नस्य भेदाः, लक्षणानि च ।

अतः परं काण्डे भग्नमभिधीयते—

काण्डे त्वतः कर्कटका-ऽश्वकर्ण-विचूर्णितं पिच्चितमास्थिछल्लिका ।
काण्डेषु भग्नं ह्यतिपातितं च मज्जागतं च स्फुटितं च वक्रम् ।
छिन्नं द्विधा द्वादशधाऽपि काण्डे स्रस्ताङ्गता शोथरुजातिवृद्धिः॥५॥
संपीड्यमाने भवतीह शब्दः स्पर्शासहं स्पन्दन-तोद-शूलाः ।
सर्वास्ववस्थासु न शर्मलाभो भग्नस्य काण्डे खलु चिह्नमेतत् ॥६॥

म०—काण्डे त्वत इत्यादि । काण्डे इत्यत्र भग्नमिति शेषः । अत, इति अतः परम् । कर्कटकेति उभयोः पार्श्वयोर्निपीडनेनावनतम् अत एव मध्ये ग्रन्थिरिवोन्नतं, कर्कटतुल्यत्वात् कर्कटकम् । अश्वकर्णेति अश्वकर्णवत् विपुलास्थि निर्गमादश्वकर्णम् । विचूर्णितमिति क्षुण्णमस्थि, तच्च शब्दस्पर्शाभ्यामवगन्तव्यम् । पिच्चितमिति[1] यन्त्रितं बहुशोथम् । अस्थिछल्लिकेति छल्लं=वल्कलं तदत्रास्तीति अस्थिछल्लिका, अत्र मत्वर्थीयष्ठिकन् । अत्र तु आ न भवति, वृद्धेरनित्य-

[1] यन्त्रितं पीडितम् ।

त्वात् । एषा पार्श्वगतस्तोकास्थिविश्लेषाद्भवति । 'अस्थिच्छल्लितम्, इति वा पाठः, छल्लमस्य संजातमिति छल्लितम् । काण्डेषु भग्नमित्यनेन काण्डभग्नमभिधीयते, प्रसारणे कम्पमानं काण्डभग्नम् । यद्यपि काण्डे भग्नं सर्वमेव कर्कटादि, तथाऽपि विशिष्टे काण्डभग्ने काण्डभग्नसंज्ञेयं बोद्धव्या । यथा—जाङ्गलशब्दो जङ्गलचराष्ट-विधमांसवर्गे सामान्ये, विशेषे पुनरेणादावेव च वर्तते । अतिपातितमिति अस्थि-निःशेषतश्छिन्नमतिपातितम् । मज्जागतमिति अस्थ्यवयवोऽस्थिमध्यमनुप्रविश्य मज्जानं निःसारयतीति मज्जागतम् । स्फुटितं स्तोकं विदीर्णं शूकपूर्णमिव वेद-नावत् । वक्रमिति अविमुक्तास्थि कुब्जीभूतं वक्रम् । वक्रताऽपि भग्नत्वं ज्ञेयम् । छिन्नं द्विधेति एकमणुविदीर्णं, बहुविदीर्णमन्यत्, एक विदीर्णं संलग्नं, अपरं वि-दीर्णं द्विधाभूतम्, अन्यस्तु विपुलैकविदरणमित्याह, सुश्रुते एतत् पाटितसंज्ञम् । काण्डे भग्नस्य द्वादशविधत्वं नियमयति—काण्ड इति । अत्र भग्नमिति शेषः । अपिशब्दोऽत्र भिन्नक्रमः, स चावधारणार्थे, तेन छिन्नमित्यत्र संबध्यते । छिन्नमेव द्विधा, न कर्कटादि ॥ ४–६ ॥

भा०टी०—काण्ड भग्न १२ प्रकार का होता है। (१) हड्डी दोनों बगल से टूट कर बीच में गाँठ की तरह ऊँची हो जाय उसे कर्कटक कहते हैं। जो हड्डी घोड़े के कान की तरह ज्यादा निकल आवे उसे अश्वकर्ण कहते हैं। हड्डी चूर २ हो जाय उसे विचूर्णित कहते हैं। हड्डी पिचली हो जाय उसे पिच्चित कहते हैं। हड्डी का कुछ हिस्सा ढीला होकर अलग हो जाय उसे अस्थि छल्लिका कहते हैं। हड्डी एकदम टूट कर चमड़ा में अटकी रहे जिससे उस अङ्ग के फैलाने में कम्प हो उसे काण्डभग्न कहते हैं। हड्डी एकदम कटकर गिर जाय उसे अतिपातित कहते हैं। हड्डी का कुछ भाग टूट कर अन्दर रहने वाले मज्जा में घुस जाय और मज्जा को बहावे, उसे मज्जागत कहते हैं। हड्डी थोड़ा सा फट जाय उसे स्फुटित कहते हैं। हड्डी टेढ़ी हो जाय उसे वक्र कहते हैं। हड्डी टूट कर अपने स्थान में लगी रहे वह अल्पछिन्न और जो टूट कर अलग २ दो टुकड़ा हो जाय उसे द्विछिन्न कहते हैं। दबाने पर आवाज होना, स्पर्श होने पर पीड़ा होना, फड़कन, शोथ, शूल होना किसी हालत में आराम न मिलना। ये लक्षण सामान्यतः सब काण्ड भग्न में होते हैं। १४-१५

अथ काण्डे भग्नस्य नामानुसारिलक्षणम् ।

काण्डे भग्नस्य द्वादशप्रकारादप्याधिकत्वमाह—

**भग्नं तु काण्डे बहुधा प्रयाति समासतो नामभिरेव तुल्यम् ॥ ७ ॥**

म०–भग्नमित्यादि । समासतो नामभिरेव तुल्यमिति संक्षेपतो नामानुरूपमेतदवगन्तव्यमित्यर्थः ॥ ७ ॥

भा०टी०–काण्डभग्न कई प्रकार का होता है,नामके अनुसारही इनका अर्थजाने ॥७॥

अथ, काण्डे भग्नस्य कष्टसाध्यत्वम् ।

कष्टसाध्यतामाह—

अल्पाशिनोऽनात्मवतो जन्तोर्वातात्मकस्य च ।
उपद्रवैर्वा जुष्टस्य भग्नं कृच्छ्रेण सिध्यति ॥८॥

( सु० नि० अ० ३ )

म०–अल्पेत्यादि । वातात्मकस्येति वातप्रकृतेः । उपद्रवैरिति उपद्रवाः= ज्वराध्मान-मूत्र-पुरीष-सङ्गादयः ॥ ८ ॥

भा०टी०—जिस भग्न रोगी का आहार कम हो गया हो, जो अपथ्य सेवन करता हो, रोगी की प्रकृति वात की हो, ज्वर, मोह, मूत्र,पुरीषसङ्ग आदि उपद्रव हों तो भग्न कृच्छ्रसाध्य होता है ॥ ८ ॥

अथ काण्डे भग्नस्यासाध्यत्वम् ।

असाध्यतामाह—

भिन्नं कपालं कट्यां तु सन्धिमुक्तं तथा च्युतम् ।
जघनं प्रतिपिष्टं च वर्जयेद् हि विचक्षणः ॥ ९ ॥
असंश्लिष्टकपालं च ललाटे चूर्णितं च यत् ।
भग्नं स्तनान्तरे पृष्ठे शङ्खे मूर्ध्नि च वर्जयेत् ॥ १० ॥

( सु० नि० अ० १५ )

म०—भिन्नं कपालमित्यादि । भग्नमिति वाच्ये भिन्नमिति यत् कृतं, तत् कपालानां प्रायशो भेदात् । अत एवोक्तं,–"कपालानि विभज्यन्ते" ( सु. शा. स्था. अ. ५ )—इति । ननु, कटयस्थ्नः कपालसंज्ञाया अभावात् कथमुच्यते भिन्नं कपालं कट्यामिति ? तदुक्तं सुश्रुते,—"जानु-नितम्बांस-गण्ड-तालु-शंख-वङ्क्षण-शिरःसु कपालानि" ( सु. शा. स्था. अ. ५ )—इति, उच्यते, नितम्ब-

ग्रहणेन तत्र कटीग्रहणाददोषः; अथवा सर्वं कपालसंचितम् अस्थिभिन्नम् तथा कट्यां चास्थिभिन्नं वर्जयेत् । असंश्लिष्टकपालं चेति तु नियमार्थम् तेन ललाटे कपालस्यासंश्लिष्टस्यासाध्यत्वम्, नान्यथा भिन्नस्येति । भिन्नं कपालमिति काण्ड-भग्नमेतत् । सन्धिमुक्तमिति नानाविधमपि सन्धिमुक्तं कट्यां न सिध्यतीति । च्युतमिति अधः क्षिप्तम्, अन्यस्तु विश्लिष्टमाह; अथवा कट्यां सन्धिमुक्तं च्युत-लक्षणं न सर्वम् । जघनं प्रतिपिष्टं चेति जघनस्थाने पिष्टमुत्पिष्टमनन्तथा च्युत-मिति च । सन्धिमुक्तं पुनर्विशेषार्थमुक्तम्, विशेषाभिधानादन्यस्य कटीसन्धिमुक्तस्य कदाचित् साध्यता सूच्यते, अत एव चिकित्सिते "ततः स्थानस्थिते मन्यौ" ( सु. चि. स्था. अ. ३ )—इति वक्ष्यति । असंश्लिष्टकपालं च ललाटे चूर्णितं च यदिति यथा अविद्यमानसंश्लेषं यत् कपालं, तथा ललाटे चूर्णितं च यत् विघ-टितसन्धि तदसाध्यम् । भग्नमिति सामान्येन सन्धिमुक्तं काण्डभग्नं गृह्यते । अन्ये तु भग्नमित्यनेन काण्डभग्नविशेषं "प्रसारणे कम्पमानम्" इत्यनेनोक्तं वद-न्ति उक्तं च भालुकिना,—"शंखे मूर्ध्नि स्तनान्तरे वा काण्डे भग्नं , मरणाय" इति । स्तनान्तरे=उरसि, मूर्ध्नि=चूडास्थाने ॥ ९ ॥ १० ॥

भा०टी०—घुटना, चूतड़, कंधा, गण्डस्थल, तालु, कनपटी, पट्टा और सिर तथा कमर की हड्डी टूट गई हो,कमर की सन्धि ढीली हो गई हो, तथा अधः क्षिप्त भग्न, जघन-पेड़ू की हड्डी टूटी हो, ललाट की हड्डी आपस में एक दूसरे से टूट गई हो, या चूर हो गई हो, तथा छाती, पीठ, कनपुटी और माथा ( जहाँ शिखा रहती है ) का सन्धि भग्न असाध्य समझे ॥ ९—१०॥

अथ सर्वेषां भग्नानामनवधानादसाध्यत्वम् ।

सर्वेषामनवधानतोऽसाध्यत्वमाह—

सम्यक् सन्धितमप्यस्थि दुर्निक्षेपनिबन्धनात् ।
संक्षोभाद् वाऽपि यद् गच्छेद् विक्रियां तच्च वर्जयेत् ॥११॥
( सु० नि० अ० १५ )

म०—सम्यगित्यादि । सन्धितं=संयमितम् । दुर्निक्षेपनिबन्धनादिति दुःस्था-पनात्तथा दुष्टबन्धनात् । संक्षोभादिति । अभिघातभयादिसंक्षोभात् । अयमर्थः सम्यक् संयमितमपि दुःस्थापनात्, सुन्यस्तमपि दुष्टबन्धनात्, सुन्यस्तं=सुबद्धमपि संक्षोभाद्विकृतमसाध्यम् ॥ ११ ॥

भा०टी०—भग्न की हड्डियाँ अच्छी तरह से बाँधी भी गई हों मगर जुड़ी ठीक न हों। जुड़ी भी हों मगर ठीक बांधी गई न हों जुड़ी भी हों और बाँधी भी गई हों मगर कहीं ठोकर लग जाय तो असाध्य समझे ॥ ११ ॥

## अथास्थिविशेषेण भग्नविशेषः ।

अस्थिविशेषेण भग्नविशेषमाह—

**तरुणास्थीनि नम्यन्ते भिद्यन्ते नलकानि च ।**
**कपालानि विभज्यन्ते स्फुटन्ति रुचकानि च ॥ १२ ॥**

( सु० नि० अ० १५ )

इति श्रीमाधवकरविरचिते माधवनिदाने भग्ननिदानं समाप्तम् ।

**म०—तरुणास्थीनीत्यादि ।** नम्यन्ते=वक्रीभवन्ति, तेनात्र वक्रलक्षणं भग्नम् । घ्राणकर्णाक्षिपुटेषु तरुणं कोमलमस्थि । भिद्यन्ते नलकानि चेति अस्थ्यन्तरानुप्रवेशाद्भिद्यन्ते, अतिपातितलक्षणेन च भग्नेन नलकानि युज्यन्ते; अन्ये तु द्वादशविधमपि भग्नमत्रेच्छन्ति । कपालानि विभज्यन्त इति कपालेषु विदरणलक्षणो भग्नः । 'विभिद्यन्ते' इति पाठान्तरम्; अर्थस्तु स एव । रुचकानि दन्ताः, तेषु स्फुटितलक्षणो भग्नः । अस्थीनि पञ्चविधानि तरुण–नलक–कपाल-वलय-रुचकभेदात् । रुचकानि चेति चकारात् वलयान्यपि स्फुटितानि भवन्तीति । एतत् सुश्रुते स्फुटितं भग्नम् ॥ १२ ॥

इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायां भग्ननिदान समाप्तम् ।

भा०टी०—आंख, कान, नाक की कोमल ( तरुण ) अस्थि टेढ़ी हो जाती है। नकल अस्थि दूसरी हड्डी के घुस जाने से चिर जाती हैं। कपाल अस्थि टूट कर अलग हो जाती हैं, और रुचक ( दांत ) टूट जाते हैं। वलय अस्थि भी टूट जाती हैं। ऐसा होना ही इनका भग्न कहलाता है ॥ १२ ॥

इति श्रीहरिनारायणशर्मवैद्यकृतायां निदानदीपिकायां रुग्विनिश्चय-भाषाटीकायां भग्ननिदानम् ।

## अथ नाडीव्रणनिदानम् ।

( Sinus Fistula ) साइनस फिस्चुला

### अथ नाडीव्रणस्य संप्राप्तिः ।

भग्नस्यापि व्रणस्यापेक्षया नाडी भवति, अतोऽनन्तरं नाडीमाह—

यः शोथमाममतिपक्वमुपेक्षतेऽज्ञो
यो वा व्रणं प्रचुरपूयमसाधुवृत्तः ।
अभ्यन्तरं प्रविशति प्रविदार्य तस्य
स्थानानि पूर्वविहितानि ततः स पूयः ॥ १ ॥

( सु० नि० अ० १० )

**म०—यः शोथमित्यादि** । उपेक्षत इति पीडनशोधनादिकं न करोति । प्रचु-रपूय इत्यनेन गम्भीरपाकित्वमुक्तम् असाधुवृत्तः=अहिताहाराचारः । स्थानानि पूर्वविहितानीति व्रणास्रावविज्ञानीयोक्तानि त्वङ्-मांस-सिरा-स्नायु-सन्ध्यस्थि-कोष्ठ-मर्माणि ॥ १ ॥

**भा०टी०—नाडीव्रण**-जो कच्चे व्रण ( फोड़े ) को पका समझ कर उसकी पीडन और शोधन आदि चिकित्सा नहीं करता । अथवा जिस घाव में बहुत पीप हो गई हो उसे नहीं चिरवाता और परहेज नहीं करता तो वह पीप त्वचा, मांस, अस्थि, सन्धि, स्नायु, कोष्ठ, मर्म स्थानों को छेदता हुआ अन्दर की तरफ घुसता है ॥१॥

### अथ नाडीशब्दस्य निरुक्तिः ।

तस्यातिमात्रगमनाद् गतिरिष्यते तु
नाडीव यद् वहति तेन मता तु नाडी ।

( सु० नि० अ० १० )

**म०—तस्येति पूयस्य** । नाडीवेति अन्तःशुषिरलतादिनाडीवत् ।—

अथ नाडीव्रणस्य संख्याः ।

तासां कालान्तरसंभवेन दोषानुबन्धेन संख्यामाह—

दोषैस्त्रिभिर्भवति स पृथगेकशश्च
संमूर्च्छितैरपि च शल्यनिमित्ततोऽन्या ॥ २ ॥

( सु० ० नि० अ० १० )

म०—दोषैस्त्रिभिरित्यादि । दोषैः पृथक् तिस्रः । एकशश्च समूर्च्छितैरिति प्रत्येकं वृद्ध्या मिश्रीभूतैस्त्रिभिश्चतुर्थी, कार्त्तिकस्तु सन्निपतितैरित्यध्याहार्य एकशश्च सन्निपतितैरन्या । समूर्च्छितैः संश्लिष्टैरपरास्तिस्रः। अत एवोक्तं सुश्रुते,— "दोषद्वयाभिहितलक्षणदर्शनेन तिस्रो गतीर्व्यतिकरप्रभवास्तु विद्यात्" ( सु. चि. स्था. अ. ५ )–इति । व्यतिकरप्रभवा द्वन्द्वप्रभवाः, अपिचकारौ सार्थकावित्याहुः । न चोक्तपञ्चसंख्याहानिः, अस्मिन् पक्षेऽतिदेशेनोक्तयोर्द्वन्द्वसन्निपातयोः सर्वत्रागणनात् । शल्यनिमित्ततोऽन्येति आगन्तुरपरेत्यर्थः । इति पञ्च नाड्यः ॥ २ ॥

भा०टी०—तेजी के साथ उस पीप के अन्दर जाने से गति, और अन्दर नली की तरह बहने से उसे नाडी कहते हैं। भाषा में इसे नासुर कहते हैं यह फोड़ा बराबर बहा करता है। नाडी व्रण पाँच प्रकार का होता है। वात से,पित्त से, कफ से, सन्निपात से और शल्य से ॥ २ ॥

अथ वातजनाड्या लक्षणम् ।

वातजामाह—

तत्रानिलात् परुष-सूक्ष्म-मुखी सशूला
फेनानुविद्धमधिकं स्रवति क्षपासु ।

( सु० नि० अ० १ )

म०—तत्रेत्यादि । अधिकं स्रवति क्षपास्विति शैत्येन वातवृद्धे रात्रावधिकं स्रवणम् ॥—

अथ पित्तजनाड्या लक्षणम् ।

पित्तजामाह—

पित्तात् तृषा-ज्वर-करी परिदाहयुक्ता
पीतं स्रवत्यधिकमुष्णमहःसु चापि ॥ ३ ॥

( सु० नि० ग० ६ )

म०—पित्तादित्यादि । अधिकमुष्णमहःसु चेति दिवा औष्ण्येन पित्तकोपात् ॥ ३ ॥

भा०टी०—वातकी नाडी का मुह रूखा और छोटा होता है, दर्द होता है और रात में ठंडक होने की वजह से वात बढ़ जाने पर स्राव अधिक होता है। पित्त की नाडी में तृषा, ज्वर, और उसके चारो तरफ दाह होता है। दिन में स्राव अधिक और गर्म होता है, क्योंकि दिन में सूर्य के घाम से पित्त बढ़ जाता है ॥ ३॥

अथ कफजनाड्या लक्षणम् ।

कफजामाह—

ज्ञेया कफाद् बहु-घनार्जुन-पिच्छिला-ऽऽस्रा
स्तब्धा सकण्डुररुजा रजनीप्रवृद्धा ।

( सु० नि० ग० ६ )

म०—ज्ञेयेत्यादि । बहुघनार्जुनपिच्छिलास्रा इति अत्रार्जुनः=श्वेतः, घनः=सान्द्रः, आस्रशब्द=आस्रावशब्दैकदेशपाठः, पदेऽपि पदैकदेशप्रयोगात् यथा "जे प्रोष्ठपदानाम्"—इत्यत्र जे इत्यनेनैव जात इत्युच्यते ॥ पिच्छिलास्रुरिति पाठेऽप्ययमेवार्थः । आस्रुशब्दः संपदादिषु पाठात् क्विबन्तः । तुगभावस्त्वागमानित्यत्वात् ॥—

भा०टी०—कफ की नाडी स्तब्ध ( जकड़ी ) और उससे स्राव गाढ़ा, सफेद, लस दार और बहुत बहता है। खुजली होती है। दर्द कम होता है और रातमें बढ़ जाता है।

अथ त्रिदोषजनाड्या लक्षणम् ।

त्रिदोषजामाह—

दाह-ज्वर-श्वसन-मूर्च्छन- वक्त्रशोषाः
यस्यां भवन्त्यभिहितानि च लक्षणानि ॥ ४ ॥

१ यस्यां नाड्याम् ।

तामादिशेत् पवन-पित्त-कफप्रकोपाद्
घोरामसुक्षयकरीमिव कालरात्रिम् ।

( सु० नि० अ० ६ )

म०—दाहेत्यादि । अभिहितानीति प्रत्येकं वातादिजनाडीकथितानि । असुक्षयकरीमिति मारणात्मिकां, कालरात्रिं=मरणकारिणीं यमभगिनीमिव । 'गतिं त्वसुहराम्' इति पाठान्तरम् ॥ ४ ॥—

भा० टी०—सन्निपात की नाडी में दाह–ज्वर–श्वास–मूर्च्छा–मुह सूखना, ये सब, तथा वात पित्त, कफ की नाडी के भी लक्षण होते हैं,यह सन्निपात की नाड़ी बड़ी ही भयङ्कर मृत्यु तुल्य होती है ॥ ४ ॥

अथ शल्यजनाड्या लक्षणानि ।

शल्यनिमित्तामाह—

नष्टं कथंचिदनुमार्गमुदीरितेषु
स्थानेषु शल्यमचिरेण गतिं करोति ॥ ५ ॥
सा फेनिलं मथितमुष्णमसृग्विमिश्रं
स्रावं करोति सहसा सरुजा च नित्यम् ।

( सु० नि० अ० ६ )

म०—नष्टमित्यादि । नष्टमदृश्यमानम् कथंचिदिति 'वेगक्षयादिकारणानामनियमार्थमुक्तम् । अनुमार्गं=मार्गं लक्षीकृत्य । केचित् 'अणुमार्गम्' इति पठित्वा शल्यविशेषणतया योजयन्ति । किन्त्वस्मिन् पक्षेऽणुमार्गत्वेनैव शल्यस्यादर्शने प्रयुक्ते कथंचिदिति निरर्थकं स्यात् । उदीरितेष्विति त्वगादिषु । फेनिलं फेनवन्तम् । मथितमुन्माथितम् । उष्णमुष्णस्पर्शम् । एते च धर्माः प्रसारणाकुञ्च[२]नादौ चलता शल्येन मांसादिक्षोभेण भवन्ति ॥ ५ ॥—

---

१ शल्यस्य वेगरूपकारणेन क्षयादिकारणेन वाऽदृश्यता भवतीत्यत्र नियमो नास्ति द्वयोरपि सम्भवात् ।

२ अत्रादिपदेनोत्क्षेपणादिकर्मणामपि ग्रहणं स्यात् ।

भा०टी०—त्वगादि-स्थानों में किसी प्रकार के शल्य अटक जाने पर शीघ्र ही उससे नाडी व्रण हो जाता है। उसमें हर वक्त पीड़ा होती है, फेनदार, मथा सा, उष्ण, खून से मिला हुआ स्राव बहता है ॥ ५ ॥

अथ नाडीव्रणस्य साध्यासाध्यत्वम् ।

असाध्यत्वादिकमाह—

**नाडी त्रिदोषप्रभवा न सिध्येत्**
**शेषाश्चतस्रः खलु यत्नसाध्याः ॥ ६ ॥**

( सु० नि० अ० १ )

इति श्रीमाधवकरविरचिते माधवनिदाने नाडीव्रणनिदानं समाप्तम् ।

म०-नाडीत्यादि । ननु, नाडी त्रिदोषप्रभवा न सिध्येदिति पुनरुक्तम्, असुक्षयकरीमित्यनेनैवासाध्यत्वस्योक्तत्वात् । नैवम्, अयं ग्रन्थः सुश्रुतेन निदानस्थानोक्तमेव त्रिदोषनाड्या असाध्यत्वमनूद्य [1]तदन्यासां शेषत्वनिश्चयेन यत्नसाध्यत्वप्रतिपादनाय चिकित्सिते पठितः, स एवात्र माधवकरेण लिखित इत्यदोषः ॥ ६ ॥

इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायां नाडीव्रणनिदानं समाप्तम् ।

भा०टी०—सिर्फ त्रिदोष की नाडी साध्य नहीं होती । बाकी चार साध्य हैं ॥ ६ ॥

इति श्रीहरिनारायणशर्मवैद्यकृतायां निदानदीपिकायां रविनिदानदर्पण-भाषाटीकायां नाडीव्रणनिदानम् ।

## अथ भगन्दरनिदानम् ।

( Fistula in Ano ) फिस्चुला इन एनो

अथ भगन्दरस्य पूर्वरूपाणि ।

नाडीविशेषत्वात् संख्यासाम्याच्च भगन्दरनिदानम् । भगन्दरपूर्वरूप-पिडकामाह—

**गुदस्य द्व्यङ्गुले क्षेत्रे पार्श्वतः पिडकाऽर्तिकृत् ।**
**भिन्ना भगन्दरो ज्ञेयः स च पञ्चविधो मतः ॥ १ ॥**

---

१ तदन्येति—तस्या [illegible] ... [illegible]

म०—गुदस्येत्यादि । क्षेत्रे=देशे । सैव भिन्ना भगन्दरः । निरुक्तिरस्य सुश्रुतेन कृता । तद्यथा—"गुद-भग-बस्ति-प्रदेशदारणात् भगन्दराः" ( सु. नि. स्था. अ. ४ )–इति । भगशब्दो गुदाद्युपलक्षणम् । भोजेऽप्युक्तम्, "भगं परिसमन्ताच्च गुदं बस्ति तथैव च । भगवद्दारयेद्यस्मात्तस्माज्ज्ञेयो भगन्दरः"—इति । पूर्वरूपं त्वस्य सुश्रुते पठ्यते; यथा—"कटी-कपाल-वेदना गुदकण्डुर्दाहः शोथश्च गुदस्य भवति" ( सु. नि. स्था अ. ४ )–इति । एतत् सामान्यं पूर्वरूपम् । कटीकपालमत्र कटीफलकम् । पञ्चविध इति संख्याकथनं रक्तज-द्वन्द्वज-भगन्दर-सम्भावनानिरासार्थम् ॥ १ ॥

भा०टी०—गुद ( पाखाने के मुकाम ) के दो अंगुल आस पास एक पिडकी होती है। उसमें बड़ी पीड़ा होती है। जब वह बीच से योनि की तरह फट जाती है तब उसे भगंदर कहते हैं। भगंदर ५ तरह का होता है। तीनों दोषों से तीन, सन्निपात से चौथा और शल्य से पाचवाँ ॥ १ ॥

### अथ शतपोनकाख्यभगन्दरस्य लक्षणम् ।

शतपोनकमाह—

**कषायरूक्षैस्त्वतिकोपितोऽनिलस्त्वपानदेशे पिडिकां करोति याम् ।**
**उपेक्षणात् पाकमुपैति दारुणं रुजा च भिन्नाऽरुणफेनवाहिनी ॥२॥**
**तत्रागमो मूत्र-पुरीष-रेतसां व्रणैरनेकैः शतपोनकं वदेत ।**

म०—कषायेत्यादि । अपानदेश इति गुददेशे । उपेक्षणादिति विम्लापनाद्यकरणात् । रुजा च भिन्नेति रुजा रुजान्विता, अर्श आदेराकृतिगणत्वादच्, भिन्ना=विदीर्णा । व्रणैरनेकैः शतपोनकं वदेदिति शतपोनकतुल्यत्वात् शतपोनकः । शतपोनकश्चालनिका, सहस्रधारा इत्यन्ये । किंवा शतपोनकः शूकदोषे पठितो विकारः, "[1]छिद्रैरणुमुखैः"—इत्यादिना, किन्तु यदि शूकदोषपठितशतपोनकतुल्यत्वमस्य तदा छिद्रैरणुमुखैरित्यादिनिमित्तस्योभयत्र पठितत्वात् किं तत्सादृश्यप्रवृत्तेयं संज्ञा, सा वा एतत्सादृश्यप्रवृत्तेति दुर्विज्ञानात्तत्रापि चालनिकातुल्यत्वमेव

१ छिद्रैरित्यादि—छिद्रैरणुमुखैरिति तथा व्रणैरनेकैरित्यस्यचार्थत एव पाठसमानता न तु शब्दतः । तत्सादृश्येत्यत्र तदितिपदेन शूकदोषपठितशतपोनकस्य संकेतः । सा-शूकदोषजा शतपोनकेति संज्ञा । एतत्सादृश्यप्रवृत्ता वातजभगन्दरस्य सादृश्यप्रवृत्ता ।

प्रवृत्तिनिमित्तमिति मन्यमानेन जेज्जटेन चालनिकादृष्टान्तमत्र वर्णितम्। शतपोनकवदनेकमुखत्वे वातिकभगन्दरस्वभाव एव हेतुः॥ २॥—

भा०टी०—कसैले और रूखे पदार्थों से वायु कुपित होकर गुद में एक फुंसी, जिसमें पीड़ा होती है, पैदा कर देता है। लापरवाही से उसकी ठीक दवा न होने से वह खुदही तेजी से पकती है, उसमें पीड़ा होती है और फूट जाने पर उसमें अनेक छेद हो जाते हैं, जिनसे लाल २ फेन, मूत्र, मैला और वीर्य निकलता है, इसे शतपोनक भगन्दर कहते हैं। शतपोनक का अर्थ चलनी होता है। इसमें चलनी की तरह बहुत छेद रहते हैं इसलिए इसे शतपोनक कहते हैं। यह वातज भगन्दर है॥ २॥

### अथोष्ट्रशिरोधराख्यभगन्दरस्य लक्षणानि।

उष्ट्रग्रीवलक्षणमाह—

> प्रकोपणैः पित्तमतिप्रकोपितं
> करोति रक्तां पिडकां गुदाश्रिताम्॥ ३॥
> तदाऽऽशुपाकाहिमपूतिवाहिनीं
> भगन्दरं तूष्ट्रशिरोधरं वदेत्॥ ४॥

म—प्रकोपणैरित्यादि। तदाशुपाकाहिमपूतिवाहिनीमिति नदीर्न नल्यामे, पित्तजत्वेनाशुपाका च सा अहिमपूतिवाहिनी उष्णपूतिवाहिनी च सा आशुपाकाहिमपूतिवाहिनी ताम्। अत्र पिडकावस्थागतगलवक्रत्वेन उष्ट्रग्रीवाकारत्वं, तेनोष्ट्रग्रीवसंज्ञा॥ ३॥ ४॥

भा०टी०—पित्त कारक पदार्थोंसे कुपित पित्त गुद में लाल रंग की फुंसी पैदा करता है। वह जल्दी पकती है और बदबूदार गर्म मवाद बहता है। फुंसी ऊंट की गर्दन की तरह होती है, इससे इसे उष्ट्रशिरोधर कहते हैं॥ ३—४॥

### अथ परिस्राविभगन्दरस्य लक्षणानि।

परिस्राविणमाह—

> कण्डूयनो घनस्रावी कठिनो मन्दवेदनः।
> श्वेतावभासः कफजः परिस्रावी भगन्दरः॥ ५॥

म०-कण्डूयन इत्यादि । परिस्रावी कफजः, स च घनस्रावयोगात् परिस्रावी ॥ ५ ॥

भा०टी०—जो भगन्दर खुजलीदार, गाढ़ा मवाद बहाने वाला, कड़ा, सफेद हो और जिसमें पीड़ा कम हो उसे कफज परिस्रावी नाम का समझना चाहिये ॥ ५ ॥

### अथ शम्बूकावर्ताख्यभगन्दरस्य लक्षणानि ।

सन्निपातजं शम्बूकावर्तमाह—

> बहु-वर्ण-रुजा-स्रावा पिडका गोस्तनोपमा ।
> शम्बूकावर्तवन्नाडी शम्बूकावर्तको मतः ॥ ६ ॥

म०- बहुवर्णरुजास्रावेत्यादि । प्रत्येकदोषजभगन्दरपाठितवर्णवेदनाः स्रावश्च । शम्बूकावर्तवत् पूर्णनद्याः शम्बूकावर्तवदावर्तनं वेदना दोषगतिविशेषाद्भवतीति शम्बूकावर्तः । तथा च भोजः—"नदीनां परिपूर्णानां शम्बूकावर्तका यथा । समुत्तिष्ठन्ति वेगेन तोयवेगसमीरिताः"—इति ॥ ६ ॥

भा०टी०—सन्निपात से गुद में एक पिड़की गाय के थन के बराबर हो जाती है जिसमें वात आदि सब दोषों का वर्ण, पीड़ा और स्राव नज़र आते हैं। इसमें घोंघा या बरसाती नदी की भौंरी के समान नासूर हो जाता है इसलिये इसे शम्बूकावर्तक कहते हैं ॥ ६ ॥

### अथोन्मार्गिभगन्दरस्य लक्षणानि ।

उन्मार्गिभगन्दरमागन्तुमाह—

> क्षताद् गतिः पायुगता विवर्धते
> ह्युपेक्षणात स्युः क्रिमयो विदार्य ते ।
> प्रकुर्वते मार्गमनेकधा मुखै-
> र्व्रणैस्तदुन्मार्गि भगन्दरं वदेत् ॥ ७ ॥

म०-क्षताद्गतिरित्यादि । क्षतादिति कण्टकादिघातात् । विदार्येत इति ते क्रिमयो विदार्य मार्गं कुर्वत इति योजना । अनेकधा मुखैरनेकमुखैः । अत्रोन्मार्गेण=क्रिमिकृतविमार्गेण पुरीषादिगमनादुन्मार्गिसंज्ञा ज्ञेया । तन्त्रान्तरे

स्वर्शोभगन्दरः पठितः । तद्यथा-"[1]कफपित्ते तु पूर्वोत्थे दुर्नामाश्रित्य कुप्यतः । अर्शोमूले ततः शोथः कण्डूदाहार्तिमान् भवेत् ॥ स शीघ्रं पक्वभिन्नोऽस्य क्लेदयन् मूलमर्शसः । स्रवत्य स्रं गतिभिरयमर्शोभगन्दरः"-इति । अयमन्यतमास्मिन् शतपोनकादीनां दोषलक्षणदर्शनादन्तर्भाव्यः ॥ ७ ॥

भा०टी०—गुदप्रदेश में चोट लग जाने से या नाखून के लग जाने से एक पिड़की हो जाती है। वह बढ़कर पकती और फूटती है। लापरवाही से उसकी ठीक चिकित्सा न होने से उसमें कीड़े पड़ जाते हैं, वे कीड़े चाट २ कर वहाँ बहुत से छेद कर देते हैं, उन छेदोंसे मूत्र और मल निकलता है, इससे इसे उन्मार्गि भगन्दर कहते हैं ७॥

### अथ भगन्दरस्य साध्यासाध्यलक्षणानि ।

प्रतीकारप्रयत्नानाह—

**घोराः साधयितुं दुःखाः सर्व एव भगन्दराः ।**
**तेष्वसाध्यस्त्रिदोषोत्थः क्षतजश्च विशेषतः ॥ ८ ॥**

[ सु० नि० अ० ४ ]

**म०**–घोरा इत्यादि । दुःखा इति दुःखप्रदाः । क्षतजश्च विशेषत इति क्षतजोऽपि विशेषमनेकव्रणयोगं क्रिमिसंभवादिकं च वीक्ष्यासाध्यः, अत एव चिकित्सिते असाध्यतां प्रतिज्ञाय क्रियां वक्ष्यति । विशेषत इति ल्यब्लोपे पञ्चमी; विशेषतोऽतिशयादसाध्य इत्यर्थः । यापनार्थं क्रियाविधिरिति । क्वचित् 'क्षतजश्च भगन्दरः'-इति पाठः । क्षतजो विशेषतः, साधयितुं घोरः असाध्य एव, स्रावरूपविशेषस्य युक्तत्वादिति गदाधरः ॥ ८ ॥

भा०टी०—सभी भगन्दर बड़े भयङ्कर और दुःसाध्य होते हैं, परन्तु उनमें त्रिदोषज और क्षतज विशेषकर असाध्य होता है ॥ ८ ॥

---

१ पूर्वोत्थे कफपित्ते दुर्नाम अर्शः आश्रित्य कुप्यतः । ततस्तस्मात् अर्शोमूले कण्डूदाहार्तिमान् शोथो भवेत् । स–शोथः । पूर्वं पक्व पश्चाद्भिन्नः पक्वभिन्न ।

अथ भगन्दरस्यासाध्य लक्षणानि ।

अवस्थायामसाध्यतामाह—

**वात-मूत्र-पुरीषाणि क्रिमयः शुक्रमेव च ।**
**भगन्दरात् स्रवन्तस्तु नाशयन्ति तमातुरम् ॥ १ ॥**

[ सु० नि० अ० ४ ]

इति श्रीमाधवकरविरचिते माधवनिदाने भगन्दरनिदानं समाप्तम् ।

म०—वात मूत्रपुरीषाणीत्यादि । भगन्दरात्स्रवन्त इत्यत्र 'अमी विशेषा' इति शेषः ॥ १ ॥

इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायां भगन्दरनिदानं समाप्तम् ।

भा०टी०—यदि भगन्दर से हवा मल मूत्र वीर्य और कीड़े निकलें तो रोगी नहीं बचता ॥ १ ॥

इति श्रीहरिनारायणशर्मवैद्यकृतायां निदानदीपिकायां रुग्विनिश्चय-भाषाटीकायां भगन्दरनिदानम् ।

## अथोपदंशनिदानम् ।

( Soft ChancreSyphilis. )साफ्ट चेन्सर सिफिलिस

अथोपदंशस्य कारणानि ।

स्थानप्रत्यासत्तेरुपदंशनिदानमाह—

**हस्ताभिघातान्नख-दन्त-पातादधावनाद् रत्यतिसेवनाद् वा ।**
**योनिप्रदोषाच्च भवन्ति शिश्ने पञ्चोपदंशा विविधापचारैः ॥१॥**

म०—हस्तेत्यादि । नख-दन्त-पातादिति बलवदनुरागोदयात् नखदन्तच्छेदस्थानत्वेनानुक्तेऽपि मेहने नखदन्तपातः, यदुक्तं कामशास्त्रे—"शास्त्रस्य विषयस्तावद्यावन्मन्दरसा नराः । प्रवृत्ते रतिचक्रे तु न शास्त्रं नापि च क्रमः" (का. सू. सा. अ. अ. २)–इति । कलहादिवशाद्वा मेहने नखदन्तपातः । अधावनादप्रक्षालनात् । रत्यतिसेवनादिति व्यवायस्यात्यन्तसेवनात् । योनिप्रदोषादिति दीर्घ-कर्कश-रोमादियोगाद्योनिदुष्टेः । शिश्ने मेहने । विविधापचारैरिति अशुद्ध-सलिल-प्रक्षालन-ब्रह्मचारिणीगमनादिभिः । उपदंशसंज्ञा च दंशनोपाधिमन्तरेणापि रूढा बोद्धव्या । यद्यप्यभिघातक्षते मेहने उपदंश आगन्तुः षष्ठः सम्भाव्यते, तथाऽपि तस्य दोषलिङ्गयुक्ततया दोषज एवान्तर्भावः ॥ १ ॥

भा० टी०—लिंग में हाथ, नख,या दांत द्वारा चोट पहुचना, लिंग की मैल को धोकर साफ न करना, अधिक मैथुन करना, ऐसी स्त्री से मैथुन करना, जिसकी योनि छोटी, बड़ी, खरदरी या .अधिक रोयें वाली हो, या जिसमें कोई रोग हो, अथवा रजस्वला के साथ मैथुन करना, गन्दे पानी से लिंग धोना, बहुत दिनोंको छूटी स्त्री से मैथुन करना, उपदंश रोग का कारण है। वह उपदंश पांच प्रकार का होता है। १ वातज, २ पित्तज,३ कफज, ४ सन्निपातज, ५ रक्तज ॥ १ ॥

### अथ वातिकोपदंशस्य लक्षणानि ।

सतोदभेदैः स्फुरणैः सकृष्णैः स्फोटैर्व्यवस्येत् पवनोपदंशम् ।

भा०टी०—वात के उपदंश में काले २ लिंग में फफोले पड़ जाते हैं, जिनमें तोद और भेदन जैसी पीड़ा होती है और भीतर से फरकन होती है ।

### अथ पैत्तिकोपदंशस्य लक्षणानि ।

पैत्तिकमाह—

पीतैर्बहुक्लेदयुतैः सदाहैः पित्तेन,—

म०—पीतैरित्यादि । स्फोटैरित्यनुसञ्जनीयम् । एवमुत्तरत्रापि ॥—

भा०टी०—पित्त के उपदंश में फफोले पीले होते हैं—मवाद और जलन ज्यादा होती है ॥

### अथ रक्तोधिरोपदंशस्य लक्षणानि ।

रक्तजमाह—

—रक्तात् पिशितावभासैः ॥ २ ॥

स्फोटैः सकृष्णै रुधिरं स्रवन्तं रक्तात्मकं पित्तसमानलिङ्गम् ।
सकण्डुरैः शोथयुतैर्महद्भिः शुक्लैर्घनैः स्रावयुतैः कफेन ॥३॥

म०—रक्तादित्यादि । रक्तात् पिशितावभासैरिति मांसवत्ताम्रैः स्फोटैः रक्ताः-च्छोणितात् उपदंशं व्यवस्येत् । 'रक्तैः' इति पाठान्तरे रक्तैः शोणितैः ॥२॥३॥

भा०टी०—रक्तज उपदंश में फफोले मांस के रंग के या काले अथवा लाल होते हैं, और उससे खून बहता है, जलन होती है ॥ २ ॥

कफ के उपदंश के फफोले में सूजन ज्यादा होती है खुजली आती है। और रंग सफेद होता है। स्राव उससे सफेद और गाढ़ा होता है ॥३॥

अथ सान्निपातिकोपदंशस्य लक्षणानि ।

सन्निपातजमाह—

**नानाविध-स्राव-रुजोपपन्नमसाध्यमाहुस्त्रिमलोपदंशम् ।**

म०—नानाविधेत्यादि । नानाविधस्रावरुजोपपन्नमिति प्रत्येकदोषोक्तस्राववेदनायुक्तम् । त्रिमलोपदंशमिति त्रिदोषोपदंशम् ॥—

भा०टी०—जिस उपदंश में तीनों दोषों के लक्षण होते हैं, वह सन्निपातज और असाध्य होता है ।

अथासाध्योपदंशस्य लक्षणानि ।

असाध्यतामाह—

**विशीर्णमांसं क्रिमिभिः प्रजग्धं मुष्कावशेषं परिवर्जयेच्च ॥ ४ ॥**

म०—विशीर्णेत्यादि । मुष्कावशेषमिति विशीर्णसमस्तमेहनमांसत्वेनावशिष्टफलकोषमात्रम् ॥ ४ ॥

भा०टी—जिस रोगी के शिश्न का मांस गल सड़ कर गिर जाता है और कीड़े के खाने से सिर्फ अण्डकोष मात्र बच जाता है वह उपदंश असाध्य होता है ॥ ४ ॥

अथ पुनरुपदंशस्यासाध्यलक्षणानि ।

उपक्रमे चिकित्साकरणार्थमाह—

**सञ्जातमात्रे न करोति मूढः क्रियां नरो यो विषये प्रसक्तः ।**
**कालेन-शोथ-क्रिमि-दाह-पाकैर्विशीर्णशिश्नो म्रियते स तेन ॥५॥**

म०—संजातेत्यादि । विषये प्रसक्त इति अतिव्यवायरतः, कालेन=चिरकालेन ॥ ५ ॥

भा०टी०—उपदंश पैदा होते ही जो उसकी ठीक तरह से चिकित्सा नहीं कराता और विषय लम्पट होता है, कुछ दिनों के बाद शोथ, क्रिमि, दाह और पाक हो जाने से शिश्न गल जाता है और फिर वह नहीं बचता ॥ ५ ॥

अथ लिङ्गवर्त्याख्यरोगस्य लक्षणानि ।

एकस्थानत्वेनात्र लिङ्गार्श आह—

**अंकुरैरिव संघातैरुपर्युपरि संस्थितैः ।**
**क्रमेण जायते वर्तिस्ताम्रचूडशिखोपमा ॥ ६ ॥**

कोषस्याभ्यन्तरे सन्धौ सर्वसन्धिगताऽपि वा ।
( सवेदना पिच्छिला च दुश्चिकित्स्या त्रिदोषजा । )
लिङ्गवर्तिरभिख्याता लिङ्गार्श इति चापरे ॥ ७ ॥

इति श्रीमाधवकरविरचिते माधवनिदाने उपदंशनिदानं समाप्तम् ॥

म०—अंकुरैरित्यादि। अंकुरैरंकुरसदृशैरीषद्दीर्घैः,संघातैर्मांसमतानैः, 'संजातैः' इति पाठे 'मांसैः' इति शेषः । ताम्रचूडशिखोपमा इति ताम्रचूडः=कुक्कुटः तच्चूडातुल्या । सन्धाविति मेढ्रन्ध्रसन्धौ, सर्वसन्धिगतेत्यनेन सर्वसन्धेरुक्तत्वात् एषा त्रिदोषजा; अत एव 'सवेदना पिच्छिला च दुश्चिकित्स्या त्रिदोषजा'-इति क्वचित् पाठः। सुश्रुते क्वचित् स्त्रीणामप्युपदंशः पठ्यते । यथा। "मेढ्रसन्धौ व्रणा केचित् केचित्सर्वाश्रयास्तथा । कुलत्थाकृतयः केचित् केचित् पद्मदलोपमाः । रुजादाहार्तिबहुलाः कृष्णास्तोदसमन्विताः । शीघ्रं केचिद्विसर्पन्ति शनैः केचित्तथा ऽपरे । स्त्रीणां पुंसां च जायन्ते उपदंशाः सुदारुणाः"-इति किन्तु समानतन्त्रेष्व दर्शनादेतदनार्षमाहुः ॥ ६ ॥ ७ ॥

इति श्रीकण्ठदत्तविरचितायां मधुकोशव्याख्यायामुपदंशनिदानं समाप्तम् ।

भा०टी०—लिंग में या सुपारी के नीचे अथवा अण्डकोष और लिंग की सन्धि में लम्बे २ मांस के अँकुवे हो जाते हैं, जो कुछ दिनों के बाद धीरे २ बढ़ कर मुर्गे की कलँगी के समान हो जाते हैं। यह रोग तीनों दोषों से होता है । इसे कोई लिंगार्श और कोई लिङ्गवर्ति कहते हैं। इसमें पीड़ा और पिच्छिलता होती है । यह दुश्चिकित्स्य है ॥ ६—७ ॥

इति श्रीहरिनारायणशर्म्मवैद्यकृतायां निदानदीपिकायां रुग्विनिश्चय-भाषाटीकायामुपदंशनिदानम् ।

## अथ शूकदोषनिदानम् ।

### अथ शूकरोगस्योत्पत्तिक्रमः ।

समानस्थानत्वाच्छूकदोषनिदानमाह—

अक्रमाच्छेफसो वृद्धिं योऽभिवाञ्छति मूढधीः
व्याधयस्तस्य जायन्ते दश चाष्टौ च शूकजाः ॥ १ ॥

---

१ लिंगार्शः = Chancre of the Penis- चेन्सर आफ दि पेनिस,

२ अभिवाञ्छति—सर्वतोभावेन लिङ्गवर्धनायकविहितोपधप्रलेपादिना प्रयत्न [illegible]

चिनोति विलमात्राणि त्वचि ते तिलकालकाः"—इति; किन्त्वस्मिन्नपि तन्त्रे कफरक्तसमाश्रित इत्यनेन कफरक्तयोराश्रितवातेन पित्तसंहितेनोच्छोषादेवतिल-कालके कार्ष्ण्यस्य सम्भवोऽवगम्यते, ततश्च "वातापित्तकफोच्छोषात्' इति पाठो युज्यते । "वातपित्तरसोद्रेकात्" इति पाठान्तरम् ॥ ३७ ॥

भा० टी०—वात पित्त कुपित होकर कफ को सुखा देते हैं, वाद तिल के आकार का काला, शरीर से मिला हुआ [ ऊँचा नहीं ] विना पीड़ा का एक दाग हो जाता है, उसे तिलकालक कहते हैं। हिन्दी में इसे "तिल" कहते हैं ॥३७॥

अथ न्यच्छस्य लक्षणम् ।

न्यच्छलिङ्गमाह—

महद् वा यदि वा चाल्पं श्यावं वा यदि वाऽसितम् ।
नीरुजं मण्डलं गात्रे न्यच्छमित्यभिधीयते ॥ ३८ ॥

( सु० नि० अ० १३ )

म०—महद् वेत्यादि । असितं=कृष्णम् । "नीरुजं मण्डलम्" इत्यस्य स्थाने 'सहजं मण्डलम्' इति केचित् पठन्ति, तेन जन्मकालप्रवृत्तं न्यच्छमिच्छन्ति, अत एव न्यच्छस्य पर्याये लाञ्छनमिति तैः पठ्यते । यथा,—"न्यच्छं लाञ्छनमुच्यते"—इति । लाञ्छनं=लक्षणम् । अत्र भोजवचनात् पित्तरक्तान्वितो वायुः कारणम् । यदाह,—"रक्तपित्तान्वितो वायुस्त्वक्प्रदेशाश्रितो यदा । जनयेन्मण्डलं कृष्णं श्यावं वा न्यच्छमादिशेत्" इति । अत्र श्यावत्वपक्षे मुखेतरदेश एव संभवन् वहुलत्वेन व्यङ्गाद् भेदोऽवगन्तव्यः ॥ ३८ ॥

भा० टी०—पित्त रक्त और वायु के विगाड़ से शरीर में वड़ा या छोटा स्याह या काला पीड़ा रहित मण्डल हो जाता है। उसे न्यच्छ कहते हैं। हिन्दी में इसका नाम लच्छन[1] है ॥ ३८ ॥

अथ व्यङ्गस्य लक्षणम् ।

व्यङ्गलिङ्गमाह—

क्रोधायासप्रकुपितो वायुः पित्तेन संयुतः ।
मुखमागत्य सहसा मण्डलं विसृजत्यतः ॥ ३९ ॥
नीरुजं तनुकं श्यावं मुखे व्यङ्गं तमादिशेत् ।

( सु० नि० अ० १३ )

---

१—यस्य लोके "लच्छन" इति नाम्ना प्रसिद्धिः ।

म०—क्रोधायासेत्यादि । श्यावमिति शुक्लानुविद्धकृष्णवर्णम् । अस्य "छयावक" इति "मेछेता" इति च लोके ख्यातिः ॥ ३९ ॥—

भा० टी०—क्रोध और परिश्रम से वायु तथा पित्त के कोप से मुह में एका एक पतला, स्याह मण्डल हो जाता है, जिसमें पीड़ा बिल्कुल नहीं होती । उसे व्यङ्ग कहते हैं । हिन्दी में इसे झाँई कहते हैं ॥३९॥

अथ नीलिकाया लक्षणम् ।

नीलिकालक्षणमाह—

**कृष्णमेवंगुणं गात्रे मुखे वा नीलिकां विदुः ॥ ४० ॥**

[ सु० नि० अ० १३ ]

म०—कृष्णमेवंगुणमित्यादि । एवंगुणमिति नीरुज-तनुक-मण्डलधर्म:, व्यङ्गोक्तदोषोऽत्रापि बोद्धव्यः, संमूर्च्छनाविशेषात्तु नीलत्वकारी । कृष्णव्यङ्गा-दतिकृष्णत्वेन भिन्ना नीलिका, व्यङ्गनीलिकयोस्तु व्यक्त एव भेदः—श्यावो व्यङ्गः, कृष्णा नीलिका, भोजे तु नीलिका गात्र एवोक्ता । यदुक्तम्—"मारुतः क्रोध-हर्षाभ्यामूर्ध्वगो मुखमाश्रितः । पित्तेन सह संयुक्तः करोति वदनत्वचि ॥ नीरुजं तनुकं श्यावं व्यङ्गं तमिति निर्दिशेत् । कृष्णमेवंगुणं गात्रे नीलिकां तां विनि-र्दिशेत्" -इति ॥ ४० ॥

भा० टी०—इसी प्रकार का विना पीड़ा के, पतला, काला मण्डल शरीर या मुह में हो जाता है । उसे नीलिका कहते हैं । एक लक्षण होने पर भी व्यच्छ या और नीलिका में परस्पर यह फ़र्क है कि व्यच्छ बहुत काला नहीं होता और नीलिका बहुत काली होती है । झाँई या व्यङ्ग मुख में ही होता है और नीलिका मुख के अलावा शरीर में भी होती है ॥ ४० ॥

अथ परिवर्तिकाया लक्षणम् ।

( Parabhymosis ) पैराफाइ मोसिस

मेढ्रगताभिघातजे रोगत्रये परिवर्तिकामाह—

**मर्दनात् पीडनाद् वाऽपि तथैवाप्यभिघाततः ।**
**मेढ्रचर्म यदा वायुर्भजते सर्वतश्चरन् ॥ ४१ ॥**
**तदा वातोपसृष्टत्वात् तच्चर्म परिवर्तते ।**
**मणेरधस्तात कोशश्च ग्रन्थिरूपेण लम्बते ॥ ४२ ॥**

सरुजां वातसंभूतां तां विद्यात् परिवर्तिकाम् ।
सकण्डूः कठिना वापि सैव श्लेष्मसमुत्थिता ॥ ४३ ॥

[ सु० नि० अ० १३ ]

म०—मर्दनादित्यादि । पीडनाद्वाऽभीत्यतिशब्दो मर्दनपीडनाभ्यां सह संबध्यते । अतियोगादेव ते वातं कोपयतः । सर्वतश्चरन्निति व्यानः, "सर्वतश्चरः" इति पाठे स एवार्थः । परिवर्तित इति सर्वतो विवर्तते । कोश इति चर्मकोशः । परिवर्तिकेति वृतुधातोः "रोगाख्यायां ण्वुल् बहुलम्"–इति ण्वुल् ( वृत-णक्-आप् ) एवमवपाटिकायां च बोद्धव्यम् । अस्यां वातजायामपि पित्तानुबन्धाद्दाह-पाकौ भवतः, कफसम्बन्धस्तु सकण्डूः कठिना वापीत्यादिनाऽभिहितः । भोजे-ऽप्युक्तम्,–"मणेरधो मेढ्चर्म व्यानस्तु परिवर्तयेत् । सशूलतोददाहाद्यैर्विज्ञेया । परिवर्तिका । श्लैष्मिकी कठिना स्निग्धा कण्डूमत्यल्पवेदना"–इति ॥ ४१–४३ ॥

भा० टी०—लिङ्ग को अधिक मलने से या दबाने से या किसी कारण से उसमें चोट पहुँचने से व्यान वायु कुपित होकर लिङ्ग के चमड़े को बिगाड़ देता है । वायु द्वारा बिगड़ा हुआ वह चमड़ा एकदम उलट कर लिङ्ग के अगले हिस्से ( सोपाड़ी ) के नीचे इकट्ठा होकर गाँठ की सूरत में लटक जाता है और उसमें बड़ी पीड़ा होती है । इसमें वात प्रधान होता है । यदि कुछ खुजली भी उठे और गाँठ कड़ी हो तो कफ का भी सम्बन्ध समझना चाहिए । यदि जलन और पाक हो तो पित्त भी समझना चाहिए । इस रोग को परिवर्तिका कहते हैं ॥ ४१–४३ ॥

## अथावपाटिकाया लक्षणम् ।

अवपाटिकामाह–

अल्पीयःखां यदा हर्षाद् बलाद् गच्छेत् स्त्रियं नरः ।
हस्ताभिघातादपि वा चर्मण्युद्वर्तिते बलात् ॥ ४४ ॥
यस्यावपाट्यते चर्म तां विद्यादवपाटिकाम् ।

( सु० नि० अ० १३ )

म०—अल्पीयःखामित्यादि । अल्पीयःखामित्यल्पतरं खं योनिमुखं यस्याः सा तथा, कन्या हि अनार्तवा अल्पीयःखा भवति । अत्र हेत्वन्तरं हस्ताभिघाता-दपि वेति । उद्वर्तित इति ऊर्ध्वं वर्तिते । यस्यावपाट्यते इति स्वयमेव विदीर्यते । एषा च पृथक् दोषत्रयेणानुबध्यते । तथाच भोजः,—मर्दनादभिघाताद्वा कन्य-

योनिप्रपीडनात् । लक्ष्यते यदि मेढ्रस्य चर्म दर्भैरिव क्षतम् ॥ ज्ञेयाऽवपाटिका सा तु पृथग् दोषैः समन्विता । वातात् सा परुषा रूक्षा शूलनिस्तोद-कारिणी ॥ पित्तात् सदाहा रक्ताद्भवा दाह-तृष्णा-समन्विता । श्लैष्मिकी कठिना स्निग्धा कण्डूमत्यल्पवेदना"-इति ॥ ४४॥—

भा० टी०—जिस स्त्री की योनि छोटी हो याने मासिक धर्म न हुआ हो, ऐसी स्त्री के साथ यदि कोई आदमी कामातुर होकर बलात्कार करता है, अथवा हस्तमैथुन आदि करने से लिङ्ग का चमड़ा ऊपर की तरफ उलट जाता है या छिल जाता है और वहाँ दर्द मालूम होता है उसे अवपाटिका कहते हैं ॥ ४४ ॥

## अथ निरुद्धप्रकशस्य लक्षणम् ।

[ Phymosis. ] फाइमोसिस

निरुद्धप्रकशमाह—

**वातोपसृष्टे मेढ्रे वै चर्म संश्रयते मणिम् ॥ ४५ ॥**
**मणिश्चर्मोपनद्धस्तु मूत्रस्रोतो रुणद्धि च ।**
**निरुद्धप्रकशे तस्मिन् मन्दधारमवेदनम् ॥ ४६ ॥**
**मूत्रं प्रवर्तते जन्तोर्मणिर्विव्रियते न च ।**
**निरुद्धप्रकशं विद्यात् सरुजं वातसम्भवम् ॥ ४७ ॥**

( सु० नि० अ० १३ )

म०—वातोपसृष्ट इत्यादि । संश्रयत इति समग्रं श्रयते, अन्तर्नीयत इत्यर्थः । अवपाटिका त्वरूढा चर्मसंकोचान्निरुद्धप्रकशा भवतीति ब्रुवते. सन्निरुद्ध-गुदवत् स्वतन्त्रोऽपि भवतीति शक्यते वक्तुम्; निरुद्धप्रकाश इत्यस्मिन्नर्थे निरुद्ध-प्रकशः, नैरुक्तेन च रूपसिद्धिः । मूत्रस्रोतः संकुचितचर्मपीडनेन मणेः स्वल्पद्वार-त्वान्मूत्रस्रोतो रुणद्धि । अवेदनमित्यस्य स्थाने सवेदनमिति केचित् । अत्र भोजा-भिप्रायेण व्याचक्षते—एकदा निरुद्धे स्रोतसि सवेदनमन्यदा तु प्रकाशे मन्दधारं प्रवर्तते, मणिश्च नावदीर्यते मूत्रेणेति । तथा च भोजः—"मेढ्राग्रे चर्मणि यदा मारुतः कुपितो भृशम् । द्वारं रुणद्धि स शनैः प्रकाशश्च मुहुर्भवेत् ॥ मूत्रं मूत्रयते कृच्छ्रात् प्रकाशस्तु यदा भवेत् । वातोपसृष्टमेढ्रस्तु मणिर्न च विदीर्यते । निरुद्धं च प्रकाशं च व्याधिं विद्यात् सुदारुणम्"—इति । सुश्रुते तु निरुद्धप्रकाशत्वात् निरुद्धप्रकशः । मणिर्विव्रियते न चेति मणिर्विवृतो न भवति ॥ ४५-४७ ॥

भा० टी०--अवपाटिका के जो कारण वतलाये गये हैं, इन्हीं सब कारणों से लिङ्ग का चमड़ा वात से खराव होकर और सिकुड़ सोपाड़ी को घेर लेता है, यहाँ तक कि पेशाव निकलने का छेद भी मुँद जाता है, जिससे पेशाव नहीं होता है। किसी समय यदि जरा सा छिद्र से चमड़ा हटा तो पतली धार से कुछ थोड़ा पेशाव होता है, और थोड़ी २ पीड़ा भी होती है,परन्तु सोपाड़ी नहीं खुलती और पीड़ा होती है, इसे निरुद्ध प्रकश कहते हैं ॥ ४५-४७ ॥

### अथ सन्निरुद्धगुदस्य लक्षणम् ।

( Stricture of the Rectom. )

स्ट्रिक्चर आफ दि रिक्टम

मूत्रमार्गरोधकनिरुद्धप्रकाशानन्तरं पुरीषमार्गरोधकं सन्निरुद्धगुदमाह—

वेगसन्धारणाद् वायुर्विहतो गुदसंश्रितः ।
निरुणद्धि महास्रोतः सूक्ष्मद्वारं करोति च ॥ ४८ ॥
मार्गस्य सौक्ष्म्यात् कृच्छ्रेण पुरीषं तस्य गच्छति ।
सन्निरुद्धगुदं व्याधिमेतं विद्यात् सुदारुणम् ॥ ४९ ॥

( सु० नि० अ० १३ )

म०—वेगसन्धारणादित्यादि । तस्येति गुदस्य । "महत्स्रोत" इति पाठे तु महत्स्रोतो=गुदविवरम्, निरुद्धप्रकाशवदत्रापि चर्मसंकोचात् सन्निरुद्धगुदम् ॥ ४८ ॥ ४९ ॥

भा० टी०—पाखाना रोकने से गुदस्थित वायु धक्का खाकर गुद के चमड़ा को सिकोड़ देता है जिससे कि पाखाना का रास्ता छोटा हो जाता है और पाखाना वड़े कष्ट के साथ थोड़ा २ उतरतो है इसे सन्निरुद्ध गुद रोग कहते हैं । यह वड़ा कड़ा रोग है ॥ ४८-४९ ॥

### अथाहिपूतनस्य लक्षणम् ।

[ Pruritus Anii ] पुरीटस पेनी

अहिपूतनमाह—

शकृद्-मूत्र-समायुक्तेऽधौतेऽपाने शिशोर्भवेत् ।
स्विन्ने वाऽस्नाप्यमाने वा कण्डू रक्तकफोद्भवा ॥ ५० ॥

कण्डूयनात् ततः क्षिप्रं स्फोटः स्रावश्च जायते ।
एकीभूतं व्रणैर्घोरं तं विद्यादहिपूतनम् ॥ ५१ ॥

( सु० नि० अ० १३ )

म०—शकृन्मूत्रेत्यादि । अपान इति गुदे, स्विन्ने=स्वेदवति, अस्नाप्यमाने= अक्रियमाण क्षालने; स्वेदमलक्लेदादेव कण्डूर्भवतीत्यर्थः । एकीभूतमिति अपानं व्रणैः सहैकीभूतम् । अहिपूतनं च बालानामेव भवति, भोजे पुनरिदं दुष्टस्तन्य-पानादपि भवतीति पठितम् । यदुक्तं—"दुष्टस्तन्यस्य पानेन मलस्याक्षालनेन च । कण्डू-दाह-रुजावद्भिः पिडकैश्च समाचिता ॥ सम्भवन्ति यथादोषं दारुणा ह्यहि-पूतना"—इति ॥ ५० ॥ ५१ ॥

भा० टी०—छोटे लड़कों के पेशाब या पाखाना करने के बाद यदि धोकर उनकी सफाई नहीं की जाती, या बहुत पसीना होने पर उसे कपड़े से नहीं पोंछा जाता तो वहाँ वह मल सड़कर खुजली पैदा कर देता है, खुजलाने से जल्दी वहाँ फुन्सियाँ निकल आती हैं, और वे बहती हैं । वे फुन्सियाँ और गुदा एक हो जाता है और लड़कों को उससे बहुत तकलीफ होती है । इसे अहिपूतन रोग कहते हैं । इसमें कफरक्त प्रधान रहता है । यह रोग विशेषकर बालकों को ही होता है । हिन्दी में इसे "सुआ लगना" कहते हैं ॥ ५०-५१ ॥

अथ वृषणकच्छ्वा लक्षणम् ।

अहिपूतनसमानहेतुलिङ्गतया गुदाश्रयं गुदभ्रंशमुल्लङ्घ्यानन्तरं वृषणकच्छूमाह—

स्नानोत्सादनहीनस्य मलो वृषणसंस्थितः ।
यदा प्रक्लिद्यते स्वेदात् कण्डूं जनयते तदा ॥ ५२ ॥
कण्डूयनात्ततः क्षिप्रं स्फोटः स्रावश्च जायते ।
प्राहुर्वृषणकच्छूं तां श्लेष्म-रक्त-प्रकोपजाम् ॥ ५३ ॥

( सु० नि० अ० १३ )

म०-स्नानोत्सादनहीनस्येत्यादि एषा च निदानाविशेषात् प्रायो वृषणभा-वित्वात् विशिष्टचिकित्सोपयोगित्वाच्च कुष्ठोक्तकच्छूतो भेदेन पठ्यते ॥५२ ॥ ५३ ॥

भा० टी०--स्नान न करने से, या स्नान करते समय अण्डकोष की मैल साफ न करते रहने से पसीना आने पर वह मैल गीली होकर खुजली पैदा कर देती है, वार २ खुजलाने से वहाँ फुन्सियाँ होतीं और वहती हैं। इसे वृषण कच्छू कहते है। इसमें कफ और रक्त का विशेषतः प्रकोप रहता है। हिन्दी में इसे "फ़ोते की खुजली" कहते हैं ॥ ५३ ॥

### अथ गुदभ्रंशस्य लक्षणम् ।
( Prolapsus ani )
प्रोलेप्सस ऐनी

गुदभ्रंशलिङ्गमाह--

**प्रवाहणातीसाराभ्यां निर्गच्छति गुदं बहिः ।**
**रूक्ष-दुर्बल-देहस्य गुदभ्रंशं तमादिशेत् ॥ ५४ ॥**

( सु० नि० अ० १३ )

म०-प्रवाहणेत्यादि । प्रवाहणं=प्रकर्षेण कुन्थनम् । "वाह प्रयत्ने" इत्यस्य रूपम् । प्रवाहणेनातिवेगोदीरणेन वातकोपः, अतीसारेण तु धातुक्षयात् । यदि वा प्रवाहणेनातीसारेण चाधोगत मारुतत्वेन गुदनिर्गमो रूक्षादिदेहस्य ॥ ५४ ॥

भा० टी०--पाखाने के समय ज्यादा जोर से काँखने और अतिसार-अधिक पतले दस्त होने से गुदा वाहर निकल आती है। इसे गुदभ्रंश कहते हैं। हिन्दी में इसे "काँच निकलना" कहते हैं। यह रोग अक्सर ऐसे लोगों को अधिक होता है, जिसके शरीर में खुश्की अधिक होती है और जो कमजोर होते हैं ॥ ५४ ॥

### अथ शूकरदंष्ट्रकस्य लक्षणम् ।

वराहदंष्ट्रलिङ्गमाह--

**सदाहो रक्तपर्यन्तस्त्वक्पाकी तीव्रवेदनः ।**
**कण्डूमान् ज्वरकारी च स स्यात् शूकरदंष्ट्रकः ॥ ५५ ॥**

( सु० नि० अ० १३ )

इति श्रीमाधवकरविरचिते माधवनिदाने क्षुद्ररोगनिदानं समाप्तम् ।

म०--सदाह इत्यादि । अयम् "वराहदाढ" इति लोके प्रसिद्धः ॥ ५५ ॥

इतिश्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायां क्षुद्ररोगनिदानं समाप्तम् ।

जिसमें-जलन और तीव्र पीड़ा हो, चारो तरफ लाल रहे, त्वचा पक जाय, खुजली आये और ज्वर हो, उसे शूकरदंष्ट्र रोग कहते हैं ॥ ५५ ॥

इति श्रीहरिनारायणशर्म्मवैद्यकृतायां निदानदीपिकायां रुग्विनिश्चय-भाषाटीकायां क्षुद्ररोगनिदानम् ।

## अथ मुखरोगनिदानम् ।

### अथ मुखरोगस्य हेतवः ।

रोगगणत्वसामान्यान्मुखरोगनिदानमुच्यते—

**आनूप-पिशित-क्षीर-दधि-मत्स्या-ऽतिसेवनात् ।**
**मुखमध्ये गदान् कुर्युः क्रुद्धा दोषाः कफोत्तराः ॥ १ ॥**

म०—आनूपेत्यादि । मुखरोगाश्च पञ्चषष्टिर्भवन्ति । यदाह भोजः—"दन्तेष्वष्टावोष्ठयोश्च मूलेषु दश पञ्च च । नव तालुनि जिह्वायां पञ्च सप्तदशामयाः । कण्ठे त्रयः सर्वसरा एकषष्टिश्चतुः पराः"—इति ॥ १ ॥

भा० टी०—अनूप देश के जन्तुओं का माँस, दूध, दही, मछली के अधिक सेवन से कफप्रधान दोष कुपित होकर मुह के भीतर रोग पैदा कर देते हैं । मुख रोग ६५ होते हैं-दाँत में ८, ओष्ठ में ८, दन्तमूल में १५, तालु में ९, जीभ में ५, कण्ठ में १७ और मुह भर में ३ ॥ १ ॥

### अथ वातजौष्ठरोगस्य लक्षणम् ।

तत्रादावोष्ठगतेष्वष्टसु वातिकलक्षणमाह—

**कर्कशौ परुषौ स्तब्धौ सम्प्राप्तानिलवेदनौ ।**
**दाल्येते परिपाट्येते ओष्ठौ मारुतकोपतः ॥ २ ॥**

म०—कर्कशावित्यादि । दाल्येते इति विदार्येते । परिपाट्येते इति किञ्चिदवदीर्णत्वचौ भवत इत्यर्थः ॥ २ ॥

भा० टी०—वायु कोप से दोनों या एक ओठ खरखरे, रूखे, और कड़े हो जाते हैं और थोड़ा या अधिक फट जाते हैं और वात की पीड़ा होती है ॥ २ ॥

### अथ पैत्तिकौष्ठरोगस्य लक्षणम् ।

पैत्तिकलक्षणमाह—

**चीयेते पिडकाभिश्च सरुजाभिः समन्ततः ।**
**सदाह-पाक-पिडकौ पीताभासौ च पित्ततः ॥ ३ ॥**

( सु० नि० अ० १६ )

---

१—ओष्ठौ च दन्तमूलानि दन्तजिह्वा च तालु च । गलो मुखादि [illegible] । इति भावप्रकाशः ।

म०-चीयेते इत्यादि । सरुजाभिरिति पित्तकृतरुजान्विताभिः । यद्येवं सदाहपाकपिडकाविति किमर्थमुच्यते ? पूर्वेणैव गतार्थत्वात् । नैवम्, पक्षान्तर-प्रतीत्यर्थं पुनरुच्यते; अयमर्थः—कदाचित् पित्तरुजान्वितबहुपिडकाचितावोष्ठौ कदाचित् दाहपाकान्वितपिडकाचितौ वा भवतः; अन्यस्त्वाह—अनतिभिन्नार्थत्वा-दव्यक्तशब्दार्थत्वाच्च दाहपाकातिशयदर्शनार्थं पिडकानुवादः ॥ ३ ॥

भा० टी०—पित्तकोप से ओठ में चारो तरफ अनेक छोटी,२ फुन्सियाँ हो जाती हैं, वे पकती हैं, उनमें जलन होती है और ओठ का रंग पीला हो जाता है ॥ ३ ॥

### अथ कफजौष्ठरोगस्य लक्षणम् ।

कफजमाह—

> सवर्णाभिश्च चीयेते पिडकाभिरवेदनौ ।
> भवतस्तु कफादोष्ठौ पिच्छिलौ शीतलौ गुरू ॥ ४ ॥

( सु० चि० अ० १६ )

म०—सवर्णाभिरित्यादि । सवर्णाभिरिति ओष्ठसमानवर्णाभिः । अवेदनौ= ईषद्वेदनौ ॥ ४ ॥

भा० टी०—यदि ओठ में ओठ के रंग की फुन्सियाँ हो जाँय. पीड़ा कम हो और ओठ भारी, ठंडा, तथा गीला हो तो उसे कफ के कोप से समझना चाहिए ॥ ४ ॥

### अथ त्रिदोषजौष्ठरोगस्य लक्षणम् ।

सान्निपातिकलक्षणमाह—

> सकृत्कृष्णौ सकृत्पीतौ सकृच्छ्वेतौ तथैव च ।
> सन्निपातेन विज्ञेयावनेकपिडकाचितौ ॥ ५ ॥

( सु० चि० अ० १६ )

म०—सकृदित्यादि । सकृदिति कदाचिद्विकृतिवशादेवं भवति । अनेकपि-डकाचिताविति वातादिवेदनान्वितबहुपिडकौ, अनेकवर्णपिडकाचितावित्यन्ये; अनेकाश्च वर्णा वातादीनां कृष्ण-पीत-श्वेताः, अत्र पक्षे सकृत्कृष्णावित्यादिपिड-कातोऽन्यत्र कल्पनीयम् ॥ ५ ॥

भा० टी०—सन्निपात से ओठ कभी काला हो जाता है, कभी पीला, और कभी सफेद, और चारो तरफ अनेक फुन्सियाँ निकल आती हैं, जिनमें वात आदि दोषों का लक्षण मिलता है ॥ ५ ॥

अथ रक्तजौष्ठरोगस्य लक्षणम् ।

रक्तजमाह—

खर्जूरफलवर्णाभिः पिडकाभिर्निपीडितौ ।
रक्तोपसृष्टौ रुधिरं स्रवतः शोणितप्रभौ ॥ ६ ॥

( सु० नि० अ० १६ )

म०—खर्जूरेत्यादि । खर्जूरफलवर्णाभिरित्यनेन वर्णमात्रेणैव साधर्म्यं प्रतिपाद्यते, यदि तु सर्वात्मना साधर्म्यमभीष्टं स्यात्, तदा "खर्जूरफलतुल्याभिः" इत्येवोच्येत । रक्तोपसृष्टाविति रक्तदूषितौ ॥ ६ ॥

भा० टी०—खून की खराबी से ओठ में खजूर के रंग की फुन्सियां होती हैं, उनसे खून बहता है और ओठ लाल हो जाता है ॥ ६ ॥

अथ मांसजौष्ठरोगस्य लक्षणम् ।

मांसजमाह—

गुरू स्थूलौ मांसदुष्टौ मांसपिण्डवदुद्गतौ ।
जन्तवश्चात्र मूर्च्छन्ति नरस्योभयतो मुखात् ॥ ७ ॥

( सु० नि० अ० १६ )

म०—गुरू स्थूलावित्यादि । जन्तवश्चात्र मूर्च्छन्तीति क्रिमयोऽत्र उच्छ्रिता भवन्ति । उभयतो मुखादिति मुखविवरमपेक्ष्योभयभागयोः, सृक्कणीप्रदेशयोरिति यावत् । मुखादिति ल्यब्लोपे पञ्चमी "उभयतो मुखाः" इति पाठान्तरे उभयसृक्कणीभागो मुखमाश्रयो येषां ते तथा । द्विमुखा इत्यन्ये ॥ ७ ॥

भा० टी०—मांस कोप से ओठ मोटे, भारी हो जाते हैं और ओठ के दोनों तरफ कीड़े देख पड़ते हैं ॥ ७ ॥

अथ मेदोजौष्ठरोगस्य लक्षणम् ।

मेदोजमाह—

सर्पिर्मण्ड-प्रतीकाशौ मेदसा कण्डुरौ गुरू ।
अच्छं स्फटिकसंकाशमास्रावं स्रवतो भृशम् ॥ ८ ॥
तयोर्व्रणो न संरोहेत् मृदुत्वं च न गच्छति ।

( सु० नि० अ० १६ )

म०—सर्पिर्मण्डप्रतीकाशावित्यादि । सर्पिमण्डप्रतीकाशाविति सर्पिर्मण्डो घृतस्योपरितनस्वच्छभागः, तत्प्रतीकाशौ=तत्सदृशौ । तयोरिति तादृशयोः ॥ ८ ॥

भा० टी०—मेद से ओठ घी की फाँफी की तरह हो जाते हैं, भारी और खुजलीदार होते हैं और उनसे स्फटिक ( बिल्लौर ) की तरह साफ स्राव बहता है । ऐसे दोनों ओठों का व्रण न तो मुलायम होता है और न भरता है ॥ ८ ॥

## अथाभिघातजौष्ठरोगस्य लक्षणम् ।

अभिघातजमाह—

**क्षतजाभौ विदीर्येते पाट्येते चाभिघाततः ॥ ९ ॥**
**ग्रथितौ च तथा स्यातामोष्ठौ कण्डूसमन्वितौ ।**

[ सु० चि० अ० १६ ]

म०—क्षतजाभावित्यादिना । अत्र कफरक्तयोरप्यनुबन्धो बोद्धव्यः । यदुक्तं भोजे,—"क्षतावभिहतौ वापि रक्तावोष्ठौ सवेदनौ । भवतः सपरिस्रावौ कफ-रक्त-प्रदूषितौ"—इति । वायुरप्यत्राभिघाताल्लभ्यते, अयं चाभिघातजशोथात् । यथोक्तलक्षणकारणभेदेन तथा वातिकोष्ठप्रकोपणादपि कफरक्तरूपहेतु-भेदयोगाद्भिद्यते ॥ ९ ॥—

भा० टी०—ओठ में चोट लग जाने से फट जाते हैं, लाल और गठीले हो जाते हैं और उनमें खुजली आती है ॥ ९ ॥

## अथ शीतादस्य लक्षणानि ।

दन्तमूलगतान् पञ्चदश व्याकरोति, तत्र शीतादमाह—

**शोणितं दन्तवेष्टेभ्यो यस्याकस्मात् प्रवर्तते ।**
**दुर्गन्धीनि सकृष्णानि प्रक्लेदीनि मृदूनि च ॥ १० ॥**
**दन्तमांसानि शीर्यन्ते पचन्ति च परस्परम् ।**
**शीतादो नाम स व्याधिः कफ-शोणित-सम्भवः ॥ ११ ॥**

( सु० चि० अ० १६ )

म०—शोणितमित्यादि । दन्तवेष्टेभ्य इति दन्तबन्धनमांसेभ्यः । अकस्मादिति अभिघातादिनिमित्तं विना । "शीर्यन्त" इत्यस्य स्थाने, "पच्यन्त" इति गदाधरः, व्याचष्टे च "स्वयम्" इति शेषः । पचन्ति च परस्परमित्यन्योन्यं पचन्ति, पाकोष्मदूषितशोणितसञ्चरणेन ॥ १० ॥ ११ ॥

भा० टी०—कफ और खून के बिगाड़ से दाँत के मसूड़ों से अकस्मात् बिना चोट लगे खून बहे और वे काले पड़ जाँय, उनमें बदबू आवे, गीले रहें, मुलायम हो जाय। आपस में एक दूसरे को पकावें और गलकर गिर जाँय तो उसे शीताद रोग कहते हैं ॥ १०-११ ॥

अथ दन्तपुप्पुटकस्य लक्षणम् ।

दन्तपुप्पुटकमाह—

दन्तयोस्त्रिषु वा यस्य श्वयथुर्जायते महान् ।
दन्तपुप्पुटको नाम स व्याधिः कफरक्तजः ॥ १२ ॥

( सु० नि० अ० १६ )

म०—दन्तयोरित्यादि । अयं च दन्तयोस्त्रिष्वित्यभिधानात् द्वित्रिदन्तनियतः, कफरक्तजत्वेऽपि शौषिराद्भिन्नोऽयम्, रुजालालास्रावाभावात् ॥ १२ ॥

भा० टी०—दो या तीन मसूड़ों में बहुत बड़ी सूजन हो जाय तो उसे दन्त पुप्पुट कहते हैं। यह कफरक्त के प्रकोप से होता है ॥ १२ ॥

अथ दन्तवेष्टस्य लक्षणम् ।

( Piorrhoea ) पायरिया

दन्तवेष्टमाह—

स्रवन्ति पूयरुधिरं चला दन्ता भवन्ति च ।
दन्तवेष्टः स विज्ञेयो दुष्टशोणितसम्भवः ॥ १३ ॥

( सु० नि० अ० १६ )

म०—स्रवन्तीत्यादि । स्रवन्ति पूयरुधिरमित्यत्र "दन्तमूलानि" इति शेषः । चला दन्ता भवन्ति चेति चकारेण पचन्ति चेति द्रष्टव्यम् ॥ १३ ॥

भा० टी०—खून की खराबी से मसूड़ों से खून और पीप निकले और दाँत हिलने लगें तो उसे दन्तवेष्ट कहते हैं ॥ १३ ॥

अथ शौषिरस्य लक्षणम् ।

( Gum boile ) गम बॉइल

शौषिरलिङ्गमाह—

श्वयथुर्दन्तमूलेषु रुजावान् कफरक्तजः ।
लालास्रावी स विज्ञेयः शौषिरो नाम नामतः ॥ १४ ॥

( सु० नि० अ० १६ )

म०-श्वयथुरित्यादि । नामत इति प्रसिद्धितः ॥ १४ ॥

भा० टी०—मसूढ़ों में कफरक्त के प्रकोप से एक सूजन हो जाय, पीड़ा हो और लार वहे तो उसे शौषिर रोग कहते हैं ॥ १४ ॥

अथ महाशौषिरस्य लक्षणम् ।

महाशौषिरलिङ्गमाह—

**दन्ताश्चलन्ति वेष्टेभ्यस्तालु चाप्यवदीर्यते ।**
**यस्मिन् स सर्वजो व्याधिर्महाशौषिरसंज्ञितः ॥ १५ ॥**

( सु० चि० अ० १६ )

म०-दन्ता इत्यादि । तालु चाप्यवदीर्यत इत्यत्र चकारेण दन्ता ओष्ठौ चाप्यवदीर्यन्ते इति बोद्धव्यम् । सप्तरात्राच्चायं मारकः । यदाह भोजः,— "सदाहो दन्तमूलेषु शोथः पित्तकफानिलात् । जातः कफं क्षपयति क्षीणे तस्मिन्स्तु शोणितम् ॥ विवृद्धमनिशं दन्तान् ताल्वोष्ठमपि दारयेत् । महाशौषिर इत्येतत् सप्तरात्रान्निहन्त्यसून्"—इति । यस्मिन् शौषिरे एवमपि भवति स महाशौषिर इति गदाधरः ॥ १५ ॥

भा० टी०—सन्निपात के कोप से मसूढ़ों से दाँत हिलने लगें दाँत तालु ओष्ठ फट जाँय तो उसे महाशौषिर रोग कहते हैं ॥ १५ ॥

अथ परिदरस्य लक्षणम् ।

परिदरमाह—

**दन्तमांसानि शीर्यन्ते यस्मिन् ष्ठीवति चाप्यसृक् ।**
**पित्तासृक्कफजो व्याधिर्ज्ञेयः परिदरो हि सः ॥ १६ ॥**

( सु० चि० अ० १६ )

म०-दन्तमांसानीत्यादि । दन्तमांसस्य परिदारणात् परिदरसंज्ञा ॥१६॥

भा० टी०—जिस रोग में मसूढ़े गले और फटें । थूक के साथ खून निकले तो इसे परिदर कहते हैं ॥ १६ ॥

अथोपकुशस्य लक्षणम् ।

उपकुशलक्षणमाह—

**वेष्टेषु दाहः पाकश्च ताभ्यां दन्ताश्चलन्ति च ।**
**( आघट्टिताः प्रस्रवन्ति शोणितं मन्दवेदनाः ।)**
**(आध्मायन्ते स्रुते रक्ते मुखं पूति च जायते ॥ )**
**यस्मिन् सोपकुशो नाम पित्तरक्तकृतो गदः ॥ १७ ॥**

म०-वेष्टेष्वित्यादि । ताभ्यामिति दाहपाकाभ्याम् । सोपकुश इति निर्देशोऽसिद्धस्यानित्यत्वात् साधुः, तेन स उपकुश इत्यर्थः ॥ १७ ॥

भा० टी०—मसूढ़ों में दाह और पाक होय और दोनों के होने से दांत हिलने लगें। हिलाने से उनसे खून बहे और थोड़ी २ पीड़ा हो खून थाने पर फूल जाय और मुह में बदबू आवे तो उसे उपकुश रोग कहते हैं यह पित्तरक्त से होता है ॥ १७ ॥

अथ वैदर्भस्य लक्षणम् ।

वैदर्भलिङ्गमाह—

घृष्टेषु दन्तमांसेषु संरम्भो जायते महान् ।
चला भवन्ति दन्ताश्च स वैदर्भोऽभिघातजः ॥१८॥

( सु० नि० अ० १६ )

म०-घृष्टेष्वित्यादि । संरम्भ इति शोथः, वेदनापाकौ वा ॥ १८ ॥

भा० टी०—मसूढ़ों के दतुवन वगैरह से घिस जाने से एक बड़ी सूजन हो जाती है और दाँत हिलने लगते हैं, पीड़ा होती है, तथा दाह पाक होता है। उसे वैदर्भ कहते हैं। यह प्रायः मसूढ़ों में चोट लगने से होता है ॥ १८ ॥

अथ खलिवर्द्धनस्य लक्षणम् ।
[ Extra Tooth ] एक्स्ट्रा टूथ ।

खलिवर्धनलिङ्गमाह—

मारुतेनाधिको दन्तो जायते तीव्रवेदनः ।
खलिवर्धनसंज्ञोऽसौ जाते रुक् च प्रशाम्यति ॥ १९ ॥

( सु० नि० अ० १६ )

म०-मारुतेनेत्यादि ।जाते रुक् च प्रशाम्यतीति उत्थिते जाते दन्ते प्रभावाद् वेदनाया अभावः ॥ १९ ॥

भा० टी०—वायु के प्रकोप से दाँत के ऊपर दाँत जमने लगता है और जब तक दाँत पूरा नहीं निकल आता तब तक बड़ी पीड़ा होती है, किन्तु दांत निकल जाने पर पीड़ा स्वयं शान्त हो जाती है। इसे खलिवर्धन रोग कहते हैं ॥ १९ ॥

अथ करालस्य लक्षणम् ।

करालक्षणमाह—

शनैः शनैः प्रकुरुते वायुर्दन्तसमाश्रितः ।
करालान् विकटान् दन्तान् करालो न स सिध्यति ॥ २० ॥

सु० नि० अ० १६

म०-शनैरित्यादि । करालान्=विषमान् । करालस्तु सुश्रुतेऽनुक्तोऽधिकः संग्रहकारेण पठितः, तेन न सुश्रुतोक्तपञ्चदशसंख्याहानिः ॥ २० ॥

भा० टी०—वायु दाँतों को टेढ़ा मेढ़ा और नोकीला कर देता है। इस रोग को कराल कहते हैं। यह असाध्य होता है। यह रोग सुश्रुत में नहीं है, किन्तु माधव ने इसे किसी ग्रन्थ से उद्धृत किया है ॥ २० ॥

अथाधिमांसकस्य लक्षणम् ।

अधिमांसकमाह—

हानव्ये पश्चिमे दन्ते महान् शोथो महारुजः ।

लालास्रावी कफकृतो विज्ञेयः सोऽधिमांसकः ।

( सु० नि० अ० १६ )

म०-हानव्य इत्यादि । अधिमांसक इति संज्ञायां कन् । हानव्य इति हनुकुहरे । पश्चिम इत्यवसानजे, अन्तजे इति यावत् ॥—

भा० टी०—जबड़े के आखीर हिस्से में एक भारी सूजन हो जाती है, पीड़ा होती है और लार बहता है इसे अधिमांसक कहते हैं। यह कफ के कोप से होता है ॥

अथ दन्तनाडीनां लक्षणानि ।

( Sinus in the Guns ) साय नस इन दि गम्स ।

पञ्चदन्तनाडीराह—

दन्तमूलगता नाड्यः पञ्च ज्ञेया यथेरिताः ॥ २१ ॥

( सु० नि० अ० १६ )

म०-दन्तेत्यादि । नाड्यः पञ्च ज्ञेया यथेरिता नाडीनिदाने यथोक्ता वात-पित्त-कफ-सन्निपाता-ऽऽगन्तु-निमित्तास्तथा दन्तमांसगता अपि नाड्यः । एताश्च नाडीव्रणसमानलक्षणा अपि शालाक्यसिद्धान्तेन संख्यापूरणाय चिकित्साभेदाच्च पुनरुक्ताः ॥ २१ ॥

भा० टी०—पहले जो वात, पित्त, कफ, सन्निपात और आगन्तु सम्बन्धी पाँच नाडी व्रण कहे गये हैं वे पाँचों दन्तमूल में भी होते हैं ॥ २१ ॥

अथ दालनाख्यदन्तरोगस्य लक्षणम् ।

दन्तगतेष्वष्टसु दालनमाह—

दीर्यमाणेष्विव रुजा यस्य दन्तेषु जायते ।

दालनो नाम स व्याधिः सदागतिनिमित्तजः ॥ २२ ॥

( सु० नि० अ० १६ )

म०-दीर्यमाणेष्वित्यादि । सदागतिनिमित्तज इति सदागतिर्वायुः, तस्मान्निमित्ताज्जात इति । सदागतिनिमित्तज इति वक्तव्ये सदागतिनिमित्तज इति यत्कृतं तद्दलवद्धेतुजन्यवातकृतत्वबाधनार्थमिति कार्तिकः केवलवातजन्यत्वप्रतिपादनार्थमित्यन्यः ॥ २२ ॥

भा० टी०—वायुके कोपसे ऐसी पीड़ा हो मानो दांत चीरा जाता हो तो उसे दालन नामक रोग कहते हैं ॥ २२ ॥

अथ क्रिमिदन्तकस्य लक्षणम् ।

( Carries of Tooth ) कैरीज़ आफ टूथ ।

क्रिमिदन्तकमाह—

कृष्णच्छिद्रश्चलः स्रावी ससंरम्भो महारुजः ।
अनिमित्तरुजो वाताद् विज्ञेयः क्रिमिदन्तकः ॥ २३ ॥
( सु० नि० अ० १६ )

म०—कृष्णच्छिद्र इत्यादि । कृष्णच्छिद्र इति दुष्टरक्तजक्रिमिकृतशोषणकद्वारेण कृष्णच्छिद्र इत्यर्थः । अन्ये "कृष्णश्चित्र" इति पठन्ति, चित्र इति चित्रवान्, अर्श आदित्वादच् । स्रावीति दन्तमूलेषु स्रावो बोद्धव्यः, दन्तानां नीरसत्वेन स्रावाभावात् । अनिमित्तरुज इति अवघट्टनादिनिमित्तं विनैव महारुजत्वेन रुजावानिति कार्तिकः ॥ २३ ॥

भा० टी०—खून की खराबी से कीड़े पड़ जाने से दाँतों के मसूढ़ों में सूजन हो जाय, दाह हो और वह पके, बहे, अकस्मात् पीड़ा हो और दांत हिले तथा छेद हो जाय तो उसे क्रिमिदन्तक कहते हैं इसमें वातका कोप होता है ॥ २३ ॥

अथ भञ्जनकस्य लक्षणम् ।

भञ्जनकलक्षणमाह—

वक्त्रं वक्रं भवेद् यस्य दन्तभङ्गश्च जायते ।
कफ-वातकृतो व्याधिः स भञ्जनकसंज्ञितः ॥ २४ ॥
( सु० नि० अ० १६ )

म०—वक्त्रमित्यादि । वक्त्रं वक्रमिति दन्तभङ्गकारिणा दोषेण वदनस्यापि वक्रत्वम् ॥ २४ ॥

भा० टी०—कफवात के कोप से दाँत टूट कर गिर जाय और मुंह टेढ़ा हो जाय तो उसे भञ्जनक रोग कहते हैं ॥ २४ ॥

### अथ दन्तहर्षस्य लक्षणम् ।
( Irritation in the Tooth )
इरटेशन इन् दि टूथ ।

दन्तहर्षलक्षणमाह—

**शीत-रूक्ष-प्रवाताम्ल-स्पर्शानामसहा द्विजाः ।**
**पित्त-मारुत-कोपेन दन्तहर्षः स नामतः ॥ २५ ॥**

( सु० नि० अ० १६ )

म०—शीतेत्यादि । "शीतमुष्णं च दशनाः सहन्ते स्पर्शनं न च । यस्य तं दन्तहर्षं तु व्याधिं विद्यात् समीरणात्"—इति श्लोकान्तरं पठन्ति । तत्र दन्तहर्षस्य वातजत्वेऽपि उष्णासहत्वं व्याधिप्रभावात्, कफरक्ताद्युतत्वाद् वा बोद्धव्यम् ॥ २५ ॥

भा० टी०—वातपित्त के कोप से दाँत में ठंडक, रूखा, तेज हवा और खटाई के लगने से विशेष तकलीफ हो तो उसे दन्तहर्ष कहते हैं। हिन्दी में इसे "दाँत कोट होना" कहते हैं ॥ २५ ॥

### अथ दन्तशर्कराया लक्षणम् ।
( Tartar ) टारटर ।

दन्तशर्करालक्षणमाह—

**मलो दन्तगतो यस्तु पित्त[1]-मारुत-शोषितः ।**
**शर्करेव[2] खरस्पर्शा सा ज्ञेया दन्तशर्करा ॥ २६ ॥**

( सु० नि० अ० १६ )

म०—मल इत्यादि । "शर्करेव खरस्पर्शा" इत्यस्य स्थाने "सा दन्तानां गुणहरी" इति क्वचित् पठ्यते, दन्तानां गुणस्य शुक्लत्व–दृढत्वादिकस्य हरणशीला ॥ २६ ॥

भा०टी०—दतुवन न करने से दाँत में मैल बैठ जाती है और वह वायु पित्त द्वारा सूख कर रेत के समान खरखरी हो जाती है तो उसे दन्तशर्करा कहते हैं ॥ २६ ॥

### अथ कपालिकाया लक्षणम् ।

कपालिकालक्षणमाह—

**कपालेष्विव दीर्यत्सु दन्तानां सैव शर्करा ।**
**कपालिकेति विज्ञेया सदा दन्तविनाशिनी ॥ २७ ॥**

( सु० नि० अ० १६ )

---

१–"कफश्चानिलशोषित." इति पाठान्तरम् । २ "शर्करा सिकता" इति भावमिश्रः ।

म०—कपालेष्वित्यादि । कपालेष्विवेति मलसहितदन्तावयवेषु कठिनेषु न कपालतुल्येषु; दन्तमल एव कठिने=कपालप्राये दीर्यमाणे सैव शर्करा=कपालिका; सदेति बाल्यादौ । अत्रावकाशे हनुमोक्षः सुश्रुते दन्तदेशसामीप्याद्दन्तरोगेषु पठितः, स इह संग्रहकारेण मुख्यदन्तगतत्वाभावान्न पठितः, पठितस्तु हनुग्रहसंज्ञो वातव्याधौ भोजवचनात् । यदुक्तम्, "वाताभिघाताज्जन्तोर्हि हनुसन्धिर्विमुच्यते । निरस्तजिह्वः कृच्छ्रेण भाषितुं तत्र गच्छति ॥ सम्यक् तमनिलव्याधिं हनुमोक्षं विनिर्दिशेत्"—इति ॥ २७ ॥

भा० टी०—यही दन्तशर्करा खपरा की तरह टूट २ कर गिरे तो इसे कपालिका कहते हैं । शर्करा के साथ दाँत का भी कुछ हिस्सा टूटता है । यह रोग दांत का नाश कर देता है ॥ २१ ॥

अथ श्यावदन्तस्य लक्षणम् ।

( Black or Necrosed Tooth ) ब्लैक, नेक्रोज्ड टूथ ।

योऽसृङ्मिश्रेण पित्तेन दग्धो दन्तस्त्वशेषतः ।
श्यावतां नीलतां वापि गतः स श्यावदन्तकः ॥ २८ ॥

( सु० नि० अ० १६ )

भा० टी०—खून और पित्त के कोप से दाँत बिल्कुल जल कर स्याह या नीला हो जाय तो उसे श्यावदन्त कहते हैं ॥ २८ ॥

अथ दन्तविद्रधेर्लक्षणम् ।

दन्तमांसे मलैः सास्रैर्बाह्यान्तः श्वयथुर्गुरुः ।
सदाहरुक् स्रवेद् भिन्नः पूयास्रं दन्तविद्रधिः ॥ २६ ॥

( सु० नि० अ० १६ )

भा० टी०—सरक्त सन्निपात के कोप से मसूढ़ों में अन्दर और बाहर भारी सूजन हो जाय, दाह हो, पीड़ा हो, पके, और उससे खून तथा पीप बहे तो उसे दन्त विद्रधि कहते हैं ॥ २६ ॥

अथ जिह्वारोगाणां लक्षणानि ।

सम्प्रति जिह्वागतानाह—

जिह्वाऽनिलेन स्फुटिता प्रसुप्ता भवेच्च शाकच्छदनप्रकाशा
पित्तेन दह्यत्युपचीयते च दीर्घैः सरक्तैरपि कण्टकैश्च ।

केफन गुर्वी बहुला चिता च मांसोच्छ्रयैः शाल्मलिकण्टकाभैः॥३०॥

( सु० नि० अ० १६ )

म०-जिह्वानिलेनेत्यादि । स्फुटितेति मनाग्विदीर्णा । प्रसुप्तेति सुप्तेव, रसस्यानवबोधात् । शाकच्छदनप्रकाशेति शाकतरुपत्रवत् कण्टकाचितेत्यर्थः, शाको= मरुजद्रुमः । पैत्तिककण्टकलक्षणे दह्यतीति आत्मनेपदानित्यत्वात् साधु । अयं च रोगो जाडीति ख्यातः ॥ ३० ॥

भा० टी०—वायु के कोपसे जीभ कुछ फट जातीहै । और सागौन के पत्तेके समान खरखरी हो जाती है । और रसों का ठीक स्वाद नहीं मालूम होता । पित्त के कोप से जीभ में जलन होती है, लम्बे २ कटीले लाल २ मस्से हो जाते हैं । कफ के कोप से जीभ भारी,मोटी हो जाती है और उस पर चारो तरफ सेमर के काँटों की तरह मस्से उभड़ आते हैं ॥ ३० ॥

## अथालासरोगस्य लक्षणम् ।

( Svblingval Abscess ) सब्लिंग्वल एवसेस

अलासमाह—

जिह्वातले यः श्वयथुः प्रगाढः सोऽलाससंज्ञः कफरक्तमूर्तिः ।
जिह्वां स तु स्तम्भयति प्रवृद्धो मूले च जिह्वा भृशमेति पाकम्३१

( सु० नि० अ० १६ )

म०—जिह्वेत्यादि । प्रगाढ इति प्रकर्षेण गाढो दारुण इत्यर्थः । तेन "जिह्वागतेष्वलासस्तु" इत्यादिना अलासस्यासाध्यतोक्ता सूच्यते । कफरक्तमूर्तिरिति कफरक्ताभ्यां हेतुभ्यां लब्धमूर्तिः । कफरक्तज इत्यर्थः । जिह्वास्तम्भेन वायुरप्यत्र बोद्धव्यः, भृशपाकेन पित्तम्, अतस्त्रिदोषजो ज्ञेयः, अत एवास्यानुपक्रमेणासाध्यत्वम्, कफरक्तयोस्तु प्राधान्येनाभिधानम् । "अधोगतः" इति पाठान्तरे जिह्वाया अधोगतः ॥ ३१ ॥

भा० टी०—जीभ पर एक कड़ी सूजन हो जाती है, उसके बढ़ने पर बोलना,खाना और स्वाद लेना यह सब काम जीभ का बंद हो जाता है, और जीभ की जड़ बहुत पक जाती है । इसे अलास कहते हैं । यह कफरक्त से होता है ॥ ३१ ॥

## अथोपजिह्वाया लक्षणम् ।

( Ranula ) रेन्युला ।

उपजिह्विकामाह—

जिह्वाग्ररूपः श्वयथुर्हि जिह्वामुन्नम्य जातः कफरक्तमूलः ।
लालाकरः कण्डुयुतःसचोषःसा तूपजिह्वा पठिता भिषग्भिः॥३२॥

( सु० नि० अ० १६ )

म०—जिह्वाग्ररूप इत्यादि । सचोष इति चोषः साक्षादग्निसन्दग्धेनेवोदतापः चोषश्चात्र रक्तयोनिना पित्तेन ॥ ३२ ॥

भा० टी०—जीभ के नीचे कफरक्त के प्रकोप से जीभ के अगले हिस्से के समान एक सूजन हो जाती है, जिससे जीभ ऊँची पड़ जाती है, लार आता है, खुजलाहट होती है, और चूसने ऐसी पीड़ा होती है। इसे उपजिह्वा रोग कहते हैं ॥ ३२ ॥

## अथ कण्ठशुण्ड्या लक्षणम् ।

( Elongated Uvula. ) एलोंगेटेड युव्युला ।

तालुगतेषु कण्ठशुण्डीमाह—

श्लेष्मासृग्भ्यां तालुमूले प्रवृद्धो
दीर्घः शोथो ध्मातवस्तिप्रकाशः ।
तृष्णा-कास-श्वास-कृत् तं वदन्ति
व्याधिं वैद्याः कण्ठशुण्डीति नाम्ना ॥ ३३ ॥

म०—श्लेष्मासृग्भ्यामित्यादि । ध्मातवस्तिप्रकाश इति वायुपूरितचर्मपुटतुल्यः ॥ ३३ ॥

भा० टी०—कफ और रक्त के प्रकोप से तालु की जड़ में एक लम्बी सूजन हो जाती है जो कि हवा भरे फुटबाल के समान होती है। उसके होने से प्यास खाँसी श्वास रोग पैदा हो जाता है वैद्य लोग उसे कण्ठशुण्डी कहते हैं। हिन्दी में इसे गलसूवा कहते है ॥ ३३ ॥

## अथ तुण्डिकेर्या लक्षणम् ।

तुण्डिकेरीलक्षणमाह—

शोथः स्थूलस्तोद-दाह-प्रपाकी
प्रागुक्ताभ्यां तुण्डिकेरी मता तु ।

( सु० नि० अ० १६ )

म०—शोथ इत्यादि । प्रागुक्ताभ्यामिति श्लेष्मासृग्भ्याम् । तुण्डिकेरी=वनकार्पासीफलम्, तत्तुल्यशोथतया तुण्डिकेरी । तोददाहाभ्यामिह वातपित्तानुबन्धो ज्ञेयः ॥—

भा० टी०—तालु में एक बड़ी सूजन होती है, उसमें कोंच, जलन होती और वह पकती है। इसे तुण्डिकेरी कहते हैं, इसलिए कि यह तुण्डिकेरी ( वन कपास ) के फल की तरह होती है। यह रोग भी कफ और खून के ही बिगाड़ से होता है।

### अथाध्रुषस्य लक्षणम् ।

अध्रुषलक्षणमाह—

मृदुः शोथो लोहितः शोणितोत्थो
ज्ञेयोऽध्रुषः सज्वरस्तीव्ररुक् च ॥ ३४ ॥

( सु० नि० अ० १६ )

म०—मृदुरित्यादि । शोणितोत्थ इति रक्तसमुत्थः ॥ ३४ ॥

भा० टी०—तालु में एक मुलायम लाल सूजन होती है, इसमें ज्वर आता है और बड़ी तेज पीड़ा होती है। इसे अध्रुष कहते हैं। यह रक्त के कोप से होता है॥३४॥

### अथ कच्छपस्य लक्षणम् ।

कच्छपलक्षणमाह—

कूर्मोन्नतोऽवेदनोऽशीघ्रजन्मा
रोगो ज्ञेयः कच्छपः श्लेष्मणा तु ।

[ सु० नि० अ० १६ ]

म०—कूर्मोन्नत इत्यादि । अवेदन इत्यल्पवेदनः । अशीघ्रजन्मेति चिरजः॥

### अथ तालव्वुर्दस्य लक्षणम् ।

ताल्वर्बुदमाह—

( Palatal cancer ) पेलेटेल केन्सर ।

पद्माकारं तालुमध्ये तु शोथं
विद्याद् रक्तादर्बुदं प्रोक्तलिङ्गम् ॥ ३५ ॥
दुष्टं मांसं नीरुजं तालुमध्ये
कफाच्छूनं मांससंघातमाहुः ।

( सु० नि० अ० १६ )

**म०पद्माकारमित्यादि।** पद्माकारमिति पद्मकर्णिकाकारम्। तथाच भोजः—"उपर्येव भवेन्नद्धो यथा पद्मस्य कर्णिका। पार्श्वतश्चाङ्कुरैर्दीर्घैर्नातिनाम्यवसीदति॥ श्लेष्म-रक्त- समुत्थानं तत्ताल्वर्बुदसंज्ञितम्"—इति। रक्तजत्वाल्लोहितम्। प्रोक्तलिङ्गमिति पूर्वोक्तरक्तार्बुदतुल्यलिङ्गमित्यर्थः॥ ३५॥—

भा० टी०—तालु में कफ के कोप से कछुवे की पीठ की तरह बीच में ऊंची और किनारे झुकी हुई एक सूजन होती है। इसमें पीड़ा कम होती है, और धीरे २ पैदा होती है-इसे कच्छप कहते हैं॥

तालु के बीच में कमल के केसर की तरह लम्बे२ मांस के अंकुरोंसे युक्त एक सूजन हो जाती है उसे ताल्वर्बुद कहते हैं। यह रक्त से होता है। कफ के प्रकोप से तालु में मांस इकट्ठा हो जाता है इसमें पीड़ा नहीं होती यह **मांस संघात** कहलाता है॥३५॥

**अथ तालुपुप्पुटस्य लक्षणम्।**

पुप्पुटमाह—

**नीरुक् स्थायी कोलमात्रः कफात् स्यात्**
**मेदोयुक्तात् पुप्पुटस्तालुदेशे॥ ३६॥**
**शोषोऽत्यर्थं दीर्यते चापि तालुः**
**श्वासश्चोग्रस्तालुशोषोऽनिलाच्च।**
**पित्तं कुर्यात् पाकमत्यर्थघोरं**
**तालुन्येनं तालुपाकं वदन्ति॥ ३७॥**

( सु० नि० अ० १६ )

**म०—नीरुगित्यादि।** पुप्पुटस्तालुदेशे इति तालुपुप्पुटः। तालुशब्दोऽत्र लुप्तनिर्दिष्टो द्रष्टव्यः। "तालुशोषस्तु पित्तात्" इति केचित् पठन्ति, पित्तस्यापि शोषकत्वात्। केचित्तु वक्ष्यमाणं "पित्तं कुर्यात् इति पदमत्रापि संबध्य श्वासश्चोग्र इति चकारं भिन्नक्रमेण योजयित्वा विभक्तिविपरिणामं च कृत्वा पित्तं तालुशोषं कुर्यादिति व्याचक्षते। किन्त्वयं भोजेऽपि वातादेव पठितः। यदुक्तम्,—"तालुशोषो भवेद् वातात्'—इत्यादि॥ ३६॥ ३७॥

भा० टी०—तालु में मेद और कफ से एक पीड़ा रहित, कड़ी, बेर के समान गांठ हो जाती है उसे **तालुपुप्पुट** कहते हैं॥ वायु के कोप से तालु सूखता है। बड़ी तेजी से साँस फूलती है उसे **तालुशोष** कहते हैं॥ पित्त के कोप से तालु पकता है, इसे **तालुपाक** कहते हैं यह बड़ा ही भयानक रोग है॥ ३६-३७॥

## अथ रोहिणीरोगस्य संप्राप्तिः ।

कण्ठगतास्तु रोहिण्यादयः सप्तदशोच्यन्ते, तत्र पञ्चानां रोहिणीनां सामान्यसंप्राप्तिमाह—

**गलेऽनिलः पित्तकफौ च मूर्च्छितौ**
**प्रदूष्य मांसं च तथैव शोणितम् ।**
**गलोपसंरोधकरैस्तथाऽङ्कुरै-**
**र्निहन्त्यसून् व्याधिरियं हि रोहिणी ॥ ३८ ॥**

( सु० नि० अ० १६ )

**म०**–गलेऽनिल इत्यादि । सर्वरोहिण्यः सन्निपातजाः, उत्कर्षाद्वातजादिव्यपदेशः । अन्ये तु "पृथक् समस्ताश्च तथैव शोणितम्" इति पठित्वा सुश्रुते एकदोषजत्वमप्याहुः । भोजेऽप्युक्तम्—'वात-पित्त-कफा रक्तमेकशः सर्वशोऽपि वा । कण्ठं यदा निषेवन्ते"–इत्यादि । निहन्त्यसूनित्यनेन यद्यपि सामान्येनासाध्यत्वमुक्तं तथाऽपि सप्ताहादिना पृथग्दोषत्रयजानामनुक्रमेणासाध्यत्वम्, एवं रक्तजाया अपि, सन्निपातजायास्तु जन्मनैवासाध्यत्वम् । तदुक्तं भोजेन,–"तालुः शुष्यति कण्ठश्च वातेनायाम्यते यदा । कण्ठेऽस्यान्नं प्रसज्येत सप्ताहात् स जहात्यसून् ॥ उष्यते चूष्यते पित्तात् धूप्यते परिदह्यते । अङ्गारैरिव जह्यात् स प्राणानाशु चतुर्दिनात्"—इति । "कफादन्तर्बहिः शोथः श्वासः कण्ठश्च बाध्यते । यस्य सोऽसून् त्यजेद् रोगी त्र्यहाद् रोहिणिपीडितः ॥ लक्षणं पित्तरोहिण्या तुल्यं शोणितजन्मनः । सर्वदोषकृता या तु सर्वलिङ्गसमन्विता । असाध्यां तां विजानीयाद् रोहिणीं सन्निपातजाम् ॥ एषा सद्यो मारयति तिस्र आद्याः क्रियां विना" इति क्वचित । भोजे "अन्या सद्यो मारयति" इति पाठः, तदा रक्तजायामप्यसाध्यत्वमायाति । किंत्वियं साध्यैव, यदुक्तम्—"लेख्याश्चतस्रो रोहिण्यः" (सु. सू. अ. २५ )—इति । तथा,—"साध्यानां रोहिणीनां तु हितं शोणितमोक्षणम्"–( सु. चि. स्था. अ. २२ ) इत्यनेन रक्तजाया अपि चिकित्सोक्ता, किंच गलगतेष्वेकैव रोहिणी सन्निपातजा "रोहिणी गले' इत्यनेनासाध्योक्ता । भोजे तु "तिस्र आद्याः क्रियां विना" इत्यभिधानं त्रिदोषजत्वेन प्राधान्यमभिप्रेत्य, खरनादेऽपि सन्निपातजाया एव सद्यो मारकत्वमुक्तम् । यदाह—"सद्य-

त्रिदोषजा हन्ति [illegible] । [illegible] पित्तसंभूता [illegible] रक्तो-
त्थिता"–इति ॥ ३८ ॥

भा० टी०—वात पित्त कफ के कोप से मांस तथा शोणित के [illegible] होने से गला में मांसांकुर हो जाते हैं जो कि प्राणनाश करनेवाले होते हैं इसे रोहिणी कहते हैं ॥ ३८ ॥

## अथ वातजादिरोहिणीनां लक्षणानि ।

वातजादिभेदेन रोहिणीलक्षणमाह—

जिह्वासमन्ताद् भृशवेदनास्तु मांसाङ्कुराः कण्ठविरोधिनो ये ।
सा रोहिणी वातकृता प्रदिष्टा वातात्मकोपद्रवगाढयुक्ता ॥ ३९ ॥
क्षिप्रोद्गमा क्षिप्र-विदाह-पाका तीव्रज्वरा पित्तनिमित्तजा तु ।
स्रोतोविरोधिन्यचलोद्गता च स्थिराङ्कुरा या कफसंभवा सा ॥४०॥
गम्भीरपाकिन्यनिवार्यवीर्या त्रिदोषलिङ्गा त्रितयोत्थिता च ।
स्फोटैश्चिता पित्तसमानलिङ्गा साध्या प्रदिष्टा रुधिरात्मिका तु॥४१॥

( सु० नि० अ० १६ )

म०–जिह्वेत्यादि । जिह्वासमन्तादिति जिह्वायाः सर्वत इत्यर्थः । वातात्मको-
पद्रवगाढयुक्तेति वातात्मका उपद्रवाः=[illegible] नाम–स्तम्भादयस्तैर्गाढमनुगता ।
त्रिदोषजायामनिवार्यवीर्येति क्रिययापि न निवार्यं वीर्यमस्याः, [illegible]
दित्यर्थः । त्रितयोत्थितेति दोषत्रयोत्थिता । पित्तलिङ्गातिदेश[illegible]
त्यर्थं पित्तरोहिण्यनन्तरं रक्तजाया वक्तुमुचितायाः शेषेऽभिधान[illegible]
सुखसाध्यत्वख्यापनार्थमिति केचित् ॥ ३९—४१ ॥

भा० टी०—जीभ के चारों तरफ मांसांकुर हो जाते हैं जिनमें [illegible] होता है और जो गला को छेक लेते हैं। इसमें वात सम्बन्धी उपद्रव पैदा हो जाते हैं। [illegible] वात की रोहिणी है। पित्तसे रोहिणी जल्दी पैदा होती है और जल्दी [illegible] तथा पकती है और तेज ज्वर चढ़ जाता है। कफ की रोहिणी [illegible] स्थिर होती है और धीरे २ पकती है। त्रिदोष की रोहिणी [illegible] तीनों दोषों के लक्षण होते हैं। [illegible] होती है। जो [illegible] हो और जिसमें पित्तज रोहिणी के लक्षण हों उसे रक्तज रोहिणी [illegible] ॥ ३९-४१ ॥

## अथ कण्ठशालूकस्य लक्षणम् ।

कण्ठशालूकलक्षणमाह—

**कोलास्थिमात्रः कफसंभवो यो ग्रन्थिर्गले कण्टक-शूक-भूतः ।**
**खरः स्थिरः शस्त्रनिपातसाध्यस्तं कण्ठशालूकमिति ब्रुवन्ति ॥४२॥**

( सु० नि० अ० १६ )

म०—कोलेत्यादि । कण्टक-शूक-भूत इति कण्टकवत् शूकवच्च वेदनाजनकः, भूतशब्दः उपमानार्थे; किंवा कण्टकोपलक्षितः शूको जलशूकः, स इव भूतो जातः । कठिनगुडकतया शाळूकसमत्वेन कण्ठशाळूकम् । शाळूकं=जलोत्पल-कन्दम् ॥ ४२ ॥

भा० टी०—गले में वैर की गुठली की तरह, काँटा और जव गोहूँ के टूँड की तरह चुभने वाली, खरखरी, कड़ी एक गाँठ पैदा हो जाती है। इसे कण्ठ शालूक कहते हैं। यह कफ के कोप से पैदा होता है। विना चीरा लगे यह अच्छा नहीं होता ॥४२॥

## अथाधिजिह्वकस्य लक्षणम् ।

अधिजिह्वकमाह—

**जिह्वाग्ररूपः श्वयथुः कफात्तु जिह्वोपरिष्टादपि रक्तमिश्रात् ।**
**ज्ञेयोऽधिजिह्वः खलु रोग एष विवर्जयेदागतपाकमेनम् ॥ ४३ ॥**

( सु० नि० अ० १६ )

म०—जिह्वाग्ररूप इत्यादि । जिह्वोपरिष्टादित्यनेन जिह्वातलजातामुपजिह्वां व्यावर्तयति । अपि रक्तमिश्रादिति न केवलात् कफाद् भवति, किंतु रक्त-मिश्रादेव कफादित्यर्थः । अपिरवधारणे । आगतपाकत्वेन पित्तमप्यत्र द्रष्ट-व्यम् ॥ ४३ ॥

भा० टी०—कफ और रक्त के प्रकोप से जीभ के ऊपर जीभ के अगला की तरह एक सूजन होती है। इसे अधिजिह्व कहते हैं। पक जाने पर यह अच्छी नहीं होती॥४३॥

## अथ वलयस्य लक्षणम् ।

वलयमाह—

**बलाश एवायतमुन्नतं च शोथं करोत्यन्नगतिं निवार्य ।**
**तं सर्वथैवाप्रतिवार्यवीर्यं विवर्जनीयं वलयं वदन्ति ॥४४॥**

( सु० नि० अ० १६ )

म०—बलास एवेत्यादि । बलासः=कफः । अन्नगतिमिति अन्नस्य गतिर्येन स्रोतसा सोऽन्नगतिः=अन्नवहमार्गः, अन्नस्य प्रवेशो वा । कफजोऽप्ययं प्रभावादसाध्यः ॥ ४४ ॥

भा० टी०—कफ के कोप से गले में एक ऐसी सूजन होती है, जिससे भोजन का मार्ग एकदम रुक जाता है, यह किसी तरह अच्छा नहीं होता । इसकी चिकित्सा नहीं करनी चाहिए । इसे बलय रोग कहते हैं ॥ ४४ ॥

अथ बलाशस्य लक्षणम् ।

बलाशलिङ्गमाह—

**गले तु शोथं कुरुतः प्रवृद्धौ श्लेष्मानिलौ श्वासरुजोपपन्नम् ।**
**मर्मच्छिदं दुस्तरमेनमाहुर्बलाशसंज्ञं निपुणा विकारम् ॥ ४५ ॥**

( सु० नि० अ० १६ )

म०—गल इत्यादि । मर्मच्छिदमिति प्राणायतनहृदयमर्मच्छिदम् ॥ ४५ ॥

भा० टी०—वात और कफ के प्रकोप से गले में एक सूजन होती है, जिसमें दम फूलता है और मर्मच्छेदन जैसी तीव्र पीड़ा होती है । अच्छे वैद्य लोग इसे दुस्तर समझते हैं । इसका नाम बलाश है ॥ ४५ ॥

अथैकवृन्दस्य लक्षणम् ।

एकवृन्दमाह—

**वृत्तोन्नतोऽन्तःश्वयथुः सदाहः सकण्डुरोऽपाक्यमृदुर्गुरुश्च ।**
**नाम्नैकवृन्दः परिकीर्तितोऽसौ व्याधिर्बलाश-क्षतज-प्रसूतः ॥४६॥**

( सु० नि० अ० १६ )

म०—वृत्तोन्नत इत्यादि । अन्तः श्वयथुरिति गलस्यान्तर्मध्ये । सदाह इति मन्ददाहः, सहशब्द ईषदर्थे । अपाक्यमृदुरिति अपाकी=ईषत्पाकी, अमृदुरीषन्मृदुः; अन्ये "अपाकमृदुः" इति पठन्ति, अपाकश्चासौ मृदुश्चेति अपाकमृदुः । बलाश-क्षतजप्रसूत इति कफरक्तभव इत्यर्थः ॥ ४६ ॥

भा० टी०—गले के अन्दर एक गोल सूजन होती है, इसमें जलन होती है । खुजली आती है । वह कम पकती और थोड़ी मुलायम होती है, अन्दर से भारी मालूम होती है, इसको नाम एकवृन्द कहते हैं ॥ ४६ ॥

### अथ वृन्दस्य लक्षणम् ।

वृन्दमाह—

**समुन्नतं वृत्तममन्ददाहं तीव्रज्वरं वृन्दमुदाहरन्ति ।**
**तच्चापि पित्त-क्षतज-प्रकोपाज्ज्ञेयं सतोदं पवनात्मकं तु॥४७॥**

[ सु० नि० अ० १६ ]

म०—समुन्नतमित्यादि । वृन्दमेव पवनानुविद्धं सतोदं स्यात् । ननु, सप्तदश कण्ठगता उक्ता, उक्तं हि,—"सप्तदशामयाः कण्ठे"—इति, वृन्देन सहाष्टादश स्युः? उच्यते, एकवृन्दस्यावस्थाविशेष एव वृन्दः, तुल्यस्थानाकृतितो न संख्यातिरेकः, यद्यप्येकवृन्दः कफ-रक्तजः, वृन्दस्तु पित्त-रक्तजः पठितः, तथा वृन्दस्यैव सतोदत्वेन वातात्मकत्वमुक्तं, तथाप्येकवृन्दस्यावस्थाविशेषत्वेन वृन्दःसङ्गच्छत एव, यथा कामलायां तद्भिन्नहेतु-लक्षणस्यापि हलीमकस्य संग्रहः, यथा वातमदात्ययेन ध्वंसक-विक्षेपकयोरत्यन्ताभेदेऽपि स एव स्यान्न पुनस्तेन संग्रहः, भोजेऽप्ययमेकवृन्दज एव पठितः । यदाह,—"श्लेष्म-रक्त-समुत्थानमेकवृन्दं विभावयेत् । तुल्यस्थानाकृतिर्वृन्दो वृन्दजो रक्त-पित्तजः"—इति । वृन्दज इत्येकवृन्दजः । गदाधरस्तु कारणभेदात् धर्मभेदाच्च उत्पन्नत्वेन चैककार्यकारणयोरभेदप्रसङ्गमभिधाय वृन्दशब्दं छन्दोऽनुरोधादादिलोपादेकवृन्द एव वर्णयति, तथाच सति समुन्नतमित्यादिना पित्तानुबन्धसहितवहुलरक्तकृतैकवृन्दस्य लक्षणमुच्यते, सतोदं पवनात्मकं चेत्यनेन च वातानुबन्धैकवृन्दलक्षणमिति व्याख्येयम् । परन्तु वृन्दजो वृन्द इति भोजवचनेनासंगतमिदं व्याख्यानम्॥ ४७ ॥

भा० टी०—पित्त और रुधिर के कोप से गले में एक ऊँची और गोल सूजन होती है, जिसमें बड़ी जलन होती है और तेज ज्वर होता है। इसे वृन्द कहते हैं। यदि इसमें कोंच हो तो वात का भी सम्बन्ध समझना चाहिए॥ ४७॥

### अथ शतघ्नीरोगस्य लक्षणम् ।

शतघ्नीलक्षणमाह—

**वर्तिर्घना कण्ठनिरोधिनी या चिताऽतिमात्रं पिशितप्ररोहैः ।**
**अनेकरुक् प्राणहरी त्रिदोषाज्ज्ञेया शतघ्नी च शतघ्निरूपा ॥४८॥**

( सु० नि० अ० १६ )

---

१ घना—कठिना ।

म०—वर्तिरित्यादि । अनेकरुगिति वात-पित्त-कफज-तोद-दाह-कण्ड्वादि-वेदनान्वितेत्यर्थः । शतघ्निरूपेति अयःकण्टकाकीर्णा महती शिला=शतघ्नी, तत्तुल्या । प्राणहरीत्यसाध्या । भोजेऽप्युक्तम्,—"शंकुमेव गले विद्या शतघ्न्येषा न सिध्यति"—इति ॥ ४८ ॥

भा० टी०—गले के अन्दर त्रिदोष के कोप से एक डोरा ( कड़ी ) बनी होती है जिसके चारों तरफ छोटे २ मांस के अँकुवे हो जाते हैं। इनसे गला रुक जाता है। इसमें वात पित्त कफ, तीनों दोषों की तोद-दाह-कण्डू पीड़ायें होती हैं। इसे शतघ्नी कहते हैं, क्योंकि इसका आकार शतघ्नी [ लोहे के कांटों से जड़ी हुई बड़ी शिला] के समान होता है। इससे रोगी बचता नहीं शतघ्नी तोपको कहते हैं ॥ ४८ ॥

अथ गलायुरोगस्य लक्षणम् ।

गलायुलक्षणमाह—

**ग्रन्थिर्गले त्वामलकास्थिमात्रः स्थिरोऽतिरुग्[1] यः कफ-रक्त-मूर्तिः ।**
**संलक्ष्यते सक्तमिवाशनं च स शस्त्रसाध्यस्तु गलायुसंज्ञः ॥ ४९ ॥**

( सु० नि० अ० १६ )

म०—ग्रन्थिरित्यादि । कफ-रक्त-मूर्तिरिति कफ-रक्त-जः। सक्तमिवेति लग्नमिव, अशनं=भुक्तम् ॥ ४९ ॥

भा० टी०—गले में आँवले की गुठली के आकार वाली कड़ी एक सूजन हो जाती है, जो बहुत पीड़ा करती है और मालूम होता है कि भोजन का ग्रास गले में रुकता है। यह कफ रक्त से होता है, विना चीरा लगे यह रोग अच्छा नहीं होता। इसका नाम गलायु है ॥ ४९ ॥

अथ गलविद्रधेर्लक्षणम् ।

गलविद्रधिलिङ्गमाह—

**सर्वं गलं व्याप्य समुत्थितो यः शोथो रुजः सन्ति च यत्र सर्वाः ।**
**स सर्वदोषैर्गलविद्रधिस्तु तस्यैव तुल्यः खलु सर्वजस्य ॥ ५१ ॥**

( सु० नि० अ० १६ )

म०—सर्वमित्यादि । तस्यैव तुल्यः खलु सर्वजस्येति प्रागुक्तस्य त्रिदोषसान्निपातजस्य तुल्य इत्यर्थः । स च स्थानप्रभावेण सान्निपातज एव, चिकित्साभेदार्थं च पुनः पठितः ॥ ५० ॥

1 "स्थिरोऽल्परुक्"इत्यन्यः पाठः क्वचिद् दृश्यते ।

भा० टी०—सब गला को छेक कर एक सूजन होती है, इसमें तीनों दोषों की पीड़ा और लक्षण होते हैं । इसमें वेही सब लक्षण होते हैं जो कि सन्निपातज विद्रधि में होते हैं । इसे गलविद्रधि कहते हैं ॥ ५० ॥

### अथ गलौघस्य लक्षणम् ।

गलौघलक्षणमाह—

**शोथो महानन्नजलावरोधी तीव्रज्वरो वायुगतेर्निहन्ता ।**
**कफेन जातो रुधिरान्वितेन गले गलौघः परिकीर्त्यते तु ॥ ५१ ॥**

( सु० नि० अ० १६ )

अ०-शोथ इत्यादि । वायुगतेर्निहन्तेति अतिमहत्त्वादुदानवायुगतिरोधक इत्यर्थः ॥ ५१ ॥

भा० टी०—कफ और रक्त के प्रकोप से गले में एक बड़ा शोथ हो जाता है, जिससे भोजन और साँस लेने का मार्ग बन्द हो जाता है और तेज बुखार चढ़ा रहता है । इसे गलौघ कहते हैं ॥ ५१ ॥

### अथ स्वरघ्नस्य लक्षणम् ।

स्वरघ्नलक्षणमाह—

**यस्ताम्यमानः श्वसिति प्रसक्तं भिन्नस्वरः शुष्क-विमुक्त-कण्ठः ।**
**कफोपदिग्धेष्वनिलायनेषु ज्ञेयः स रोगःश्वसनात् स्वरघ्नः ॥५२॥**

( सु० नि० अ० १६ )

अ०-य इत्यादि । ताम्यमान इति मूर्च्छां गच्छन् अथवा तमः पश्यन् । श्वसिति प्रसक्तमिति निरन्तरं श्वसिति । शुष्क-विमुक्त-कण्ठ इति शुष्को=नीरसो विमुक्तश्चास्वाधीनः कण्ठो यस्य स तथा । अस्वाधीनता च किमपि गिलितुमशक्यतया बोद्धव्या । अनिलायनेष्विति अनिलमार्गेषु कफरुद्धेषु सत्सु वायुगतस्रोतसोर्द्वित्वेऽपि बहुवचनं प्रतानबहुत्वात् श्वसनादिति वातात् ॥ ५२ ॥

भा० टी०—वात ज्यादा बढ़कर साँस लेने के रास्ता को बन्द कर देता है और वहां कफ घेर लेता है । बेहोशी होती है, साँस फूलता है । स्वर भेद हो जाता है । गला सूखता है । गले से कुछ भी निगला नहीं जाता । इसे स्वरघ्न कहते हैं ॥ ५२ ॥

## अथ मांसतानस्य लक्षणम्।

मांसतानलिङ्गमाह—

**प्रतानवान् यः श्वयथुः सुकष्टो गलोपरोधं कुरुते क्रमेण।**
**स मांसतानः कथितोऽवलम्बी प्राणप्रणुत् सर्वकृतो विकारः॥४३॥**

(सु० नि० स० १६)

म०—प्रतानवानित्यादि। प्रतानवानिति विस्तारवान् सुकष्ट इति महादुःखप्रदायी, न तु कृच्छ्रसाध्यः, प्राणप्रणुदिति वचनात्; अथवा प्राक् कृच्छ्रसाध्यः, समस्तगलोपरोधे तु प्राणप्रणुत्। "स मांसतानः कथितोऽवलम्बी"—इत्यस्य—स्थाने "स मांसतानेति बिभर्ति संज्ञाम्"—इति पाठान्तरे मांसतानेत्यत्र इतिशब्देन प्रातिपदिकार्थस्योक्तत्वाद्विभक्त्यभावः। "बिभर्ति संज्ञाम्" इत्यस्य स्थाने "निरुणद्धि चेष्टम्"—इति कार्त्तिकः। अस्मिन् व्याख्याने स मांसतान इत्यस्यानन्तरं स्यात् इति द्रष्टव्यम्॥ ४३॥

भा० टी०—गले में एक ऐसी फैली हुई सूजन होती है, जो कि धीरे धीरे सारे गले को छेक लेती है, बहुत पीड़ा करती है और लटकी रहती है इसे मांसतान कहते हैं। यह सन्निपात से होती है और प्राणनाश करनेवाली है॥ ४३॥

## अथ विदार्या लक्षणम्।

विदारीलक्षणमाह—

**सदाह-तोदं श्वयथुं सुताम्रमन्तर्गले पूति-विशीर्ण-मांसम्।**
**पित्तेन विद्याद् वदने विदारीं पार्श्वे विशेषात् स तु येन शेते॥४४॥**

(सु० नि० स० १६)

म०—सदाहतोदमित्यादि। वदन इति स्वरूपपरमिदम्, अन्तर्गल इत्यनेनैव वदनशब्दस्य लब्धत्वात्। पार्श्वे विशेषात् स तु येन शेते इति स=दुष्टो येन=पार्श्वेन विशेषाद्=बाहुल्येन शेते तस्मिन्नेव पार्श्वे विदारी भवतीत्यर्थः। विशेषग्रहणादन्यस्मिन् पार्श्वेऽपि संभवोऽस्याः। विदारीसंज्ञा च मांसविदारणेन। भोजेऽप्युक्तम्,—"पित्तेन जातो वदने विकारः पार्श्वे विशेषात् स तु येन शेते। स्नायु-प्रतान-प्रभवो विशेषाद् दाह-प्रपाक-प्रचुरो विदारी"—इति॥ ४४॥

भा० टी०—गले के अन्दर एक लाल रंग की सूजन होती है, जिसमें कोंच और जलन होती है और वहाँ का मांस बदबूदार सड़ा होता है। इसे विदारी कहते हैं। यह रोग खासकर उसी तरफ होता है जिस करवट आदमी ज्यादातर सोता है। यह पित्त के कोप से होता है ॥ ५४ ॥

### अथ सर्वसराख्यमुखरोगस्य लक्षणम्।

[ Stomatrisw ]

सर्वसराख्योऽभिधीयन्ते—

**स्फोटैः सतोदैर्वदनं समन्ताद् यस्याचितं सर्वसरः स वातात्।**
**रक्तैः सदाहैस्तनुभिः सपीतैर्यस्याचितं चापि स पित्तकोपात्।**
**अवेदनैः कण्डुयुतैः सवर्णैर्यस्याचितं चापि स वै कफेन ॥ ५५ ॥**

( सु० नि० अ० १६ )

म०-स्फोटैरित्यादिना। मुखदन्तौष्ठादिसप्तस्थानव्यापकतया सर्वसरत्वं ज्ञेयम्। स्फोटैरिति, वदनमिति च उत्तरत्र संबन्धनीयम्। आचितं=व्याप्तम्। सर्वसरा मुखपाका उच्यन्ते। केचिद् विदेहोक्तरक्तजसर्वसरलक्षणं पठन्ति। यथा,-"रक्तेन पित्तोदित एव चापि केश्चित् प्रदिष्टो मुखपाकसंज्ञः"-इति। अयं च पैत्तिक एवान्तर्भूत इति नेह दर्शित इति ॥ ५५ ॥

भा० टी०—जिसके मुह भर में फुन्सियाँ हो जाँय और उनमें तोद हो तो वह वात से सर्वसर मुखरोग कहलाता है। पित्त से मुह भर में लाल या पीली छोटी २ फुन्सियाँ हो जाती हैं और उनमें जलन होती है। कफ से त्वचा के रङ्ग की सफेद फुन्सियाँ मुह भर में हो जाती हैं और खुजलाती हैं। उनमें पीड़ा नहीं होती ॥ ५५ ॥

### अथासाध्यमुखरोगाणां लक्षणानि।

ओष्ठप्रकोपादिष्वसाध्यानाह—

**ओष्ठप्रकोपे वर्ज्याः स्युर्मांस-रक्त-त्रिदोष-जाः**
**दन्तमूलेषु वर्ज्यौ च त्रिलिङ्गगति-शौषिरौ ॥ ५६ ॥**
**दन्तेषु च न सिध्यन्ति श्याव-दालन-भञ्जनाः।**
**जिह्वारोगे वलाशस्तु तालव्येष्वर्बुदं तथा ॥ ५७ ॥**

स्वरघ्नो वलयो वृन्दो बलाशश्च विदारिका ।
गलौघो मांसतानश्च शतघ्नी रोहिणी गले ॥ ५८ ॥
असाध्याः कीर्तिता ह्येते रोगा नव दशैव तु ।
तेषु चापि क्रियां वैद्यः प्रत्याख्याय समाचरेत् ॥ ५९ ॥

( सु० नि० अ० १६ )

इति श्रीमाधवकरविरचिते माधवनिदाने मुखरोगनिदानं समाप्तम् ।

म०-ओष्ठप्रकोपे वर्ज्याः स्युरित्यादि । त्रिलिङ्गगतिर्शोंपिशाचीति त्रिदो-पजनाडी त्रिदोषजश्च महाशौंषिरोऽसाध्यः । रोहिणी गले इति त्रिदोषजा रोहिणी ॥ ५६-५९ ॥

इतिश्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायां मुखरोगनिदानं समाप्तम् ।

भा० टी०—ओष्ठरोग में मांसज, रक्तज और त्रिदोषज, दन्तमूल में-त्रिदोषज नाड़ी और शोषिर । दन्तरोग में-श्यावदन्त, दालन और भञ्जन । जिह्वारोगमें अलास । तालुरोग में-अर्बुद । गलरोग में-स्वरघ्न, वलय, वृन्द, बलाश, विदारिका, गलौघ, मांसतान, शतघ्नी, और रोहिणी । ये उन्नीस रोग असाध्य होते हैं । परन्तु इन्हें असाध्य समझकर छोड़ न दे किन्तु असाध्य कहकर चिकित्सा जरूर करे । शायद अच्छे हो जांय ॥ ५६-५९ ॥

इति श्रीहरिनारायणशर्मवैद्यकृतायां निदानदीपिकायां रुग्विनिश्चयभाषाटीकायां मुखरोगनिदानम् ।

---

## अथ कर्णरोगनिदानम् ।

### अथ कर्णशूलस्य लक्षणम् ।

( Otalgia, Otitis ) ओटाल्जिया, ओटाइटिस,

मुखरोगे, जिह्वाश्रयरोगोऽभिहितः, जिह्वा चेन्द्रियाधिष्ठानम्, अत इन्द्रियाधि-ष्ठानदुष्टिसाम्यात् कर्णरोगनिदानमुच्यते, कर्णशष्कुल्यवच्छिन्नमदृष्टोपगृहीतं श्रोत्र-मुच्यते, तत्र यद्यप्येकदेशगतो रोगस्तथाप्यवयवेऽपि समुदायोपचारात् कर्णरोगः । तत्र कर्णशूलं कष्टत्वात् प्रागाह—

समीरणः श्रोत्रगतोऽन्यथा चरन् समन्ततः शूलमतीव कर्णयोः ।
करोति दोषैश्च यथास्वमावृतः स कर्णशूलः कथितो दुराचरः ॥१॥
( सु० उ० अ० २० )

म०—समीरण इत्यादि । अत्रानयैव सम्प्राप्त्याऽर्थतो निदानसंचयाद्याक्षिप्तं; यतो निदानात् संचयः, संचयात् प्रकोपः, प्रकोपात् प्रसरः, प्रसरात् स्थानसंश्रयः, ततो व्यक्तिः, ततो भेद इति । कर्णशूलस्य च कष्टत्वं मूर्च्छाद्युपद्रवयोगात् । यदाह विदेहः,—"मूर्च्छा दाहो ज्वरः कासो हृल्लासो वमथुस्तथा । उपद्रवाः कर्णशूले भवन्त्येते मरिष्यतः"—इति । अन्यथाचरन्निति प्रतिलोमं चरन् । दोषैरिति कफ-पित्त-रक्तैः, रक्तेऽपि रुजाकर्तृत्वात् सामान्येन दोषव्यपदेशः । यथास्वमावृत इति स्वनिदानकुपितदोषैर्यथास्वीयलक्षणैरावृतो न तु कोपितैर्वायुना; "एकः प्रकुपितो दोषः सर्वानेव प्रकोपयेत्" इति न्यायात्, यतः स्वतन्त्रकुपिता दोषाः संसर्गभाजो भवन्ति, परतन्त्रकुपितास्त्वनुबन्धरूपा भवन्ति । अथवा यथास्वमिति शूलविशेषणं, यथास्वीयमित्यर्थः । दुराचर इति दुःखेनाचर्यते इति दुराचरः ॥ १ ॥

भा० टी०—वात कारक आहार विहार से वायु कुपित होकर उलटी रीति से घूमता हुआ कान भर में दर्द पैदा कर देता है, यदि पित्त साथ रहता है तो पित्त की पीड़ा और कफ रहता है तो कफ की भी पीड़ा होती है । इसे कर्णशूल कहते हैं । यह कृच्छ्रसाध्य होता है ॥ १ ॥

## अथ कर्णनादस्य लक्षणम् ।

( Noises in the Ear. ) न्वाइजेस इन् दि इअर

कर्णनादमाह—

कर्णस्रोतः स्थिते वाते शृणोति विविधान् स्वरान् ।
भेरी-मृदङ्ग-शङ्खानां कर्णनादः स उच्यते ॥ २ ॥

म०—कर्णस्रोतः स्थित इत्यादि । यदा कर्णस्रोतसि विविधप्रकारेणावस्थितो वायुर्भवति तदा तस्य विविधाभिहननादुक्तविविधशब्दश्रवणम्, भेरीमृदङ्गशङ्खानामित्युपलक्षणम्, तेन भृङ्गारादिशब्दश्रवणं च भवति । यदुक्तं विदेहे,—"शिरोगतो यदा वायुः श्रोत्रयोः प्रतिपद्यते । तदा तु विविधान् शब्दान् समीरयति कर्णयोः ॥ भृङ्गार-क्रौञ्चनादं वा मण्डूक-काकयोस्तथा । तन्त्री-मृदङ्ग-शब्दं वा साम-तूर्य-स्वनं तथा ॥ गीताध्ययनवंशानां निर्घोषं क्ष्वेडनं तथा । अपामिव पतन्तीनां शकटस्यैव गच्छतः ॥ श्वसतामिव सर्पाणां सदृशः श्रूयते स्वनः"—इति ॥ २ ॥

भा० टी०—कर्णस्रोत में वायु कुपित हो जाने से नगाड़ा, मृदङ्ग, शङ्ख, झाँझर, वंशी, कौवा, मेघा आदि की तरह आवाज अन्दर सुनने में आती है। इसे कर्णनाद कहते हैं ॥ २ ॥

अथ बाधिर्यस्य लक्षणम् ।

( Deafness. )

यदा शब्दवहं वायुः स्रोत आवृत्य तिष्ठति ।
शुद्धः श्लेष्मान्वितो वापि बाधिर्यं तेन जायते ॥ ३ ॥

भा० टी०—जब केवल वायु या कफ के साथ शब्दवाली धमनी को (कान के भीतरी परदे को जिससे की आवाज सुन पड़ती है) घेर लेना है तो आदमी बहरा हो जाता है। इसे बाधिर्य कहते हैं ॥ ३ ॥

अथ कर्णक्ष्वेडस्य लक्षणम् ।

कर्णक्ष्वेडमाह—

वायुः पित्तादिभिर्युक्तो वेणुघोषोपमं स्वनम् ।
करोति कर्णयोः क्ष्वेडं कर्णक्ष्वेडः स उच्यते ॥ ४ ॥

म०—वायुरित्यादि । क्ष्वेडमेव व्याकरोति—वेणुघोषोपमं स्वनमिति । ननु, कर्णनादात् कथमस्य भेदः ? उच्यते, कर्णनादे केवलानिलजे नानाशब्दान् शृणोति अत्र तु वेणुशब्दमेव नियमेन । तथाऽयं पित्तादिसंसृष्टवातजन्य इति । तथाह विदेहः,—"मारुतः कफपित्ताभ्यां संसृष्टः शोणितेन च । कर्णक्ष्वेडं संजनयेत् क्ष्वेडनं वेणुघोषवत्"—इति ॥ ४ ॥

भा० टी०—जब वायु पित्त कफ रक्त के साथ कुपित होकर कान के परदे में व्याप्त हो जाताहै तो वंशी की आवाज सुन पड़ती है। इसे कर्णक्ष्वेड कहते हैं। कर्णनाद में केवल वायु रहता है और उसमें भेरी आदि कई तरह की आवाजें सुन पड़ती हैं और कर्णक्ष्वेड में पित्त कफ रक्त भी रहता है और केवल वंशी ही की आवाज सुन पड़ती है ॥ ४ ॥

अथ कर्णस्रावस्य लक्षणम् ।

( Otorrhoea ) ओटोरिया

कर्णस्रावमाह—

शिरोऽभिघातादथवा निमज्जतो जले प्रपाकादथवापि विद्रधेः ।

स्रवेद् हि पूयं श्रवणोऽनिलार्दितः स कर्णसंस्राव इति प्रकीर्तितः ॥५॥
[ सु० उ० अ० २१ ].

म०—शिरोऽभिघातादित्यादि । स्रवेद्धि पूयमित्युपलक्षणम्, तेन रक्तजले च स्रवत इति मन्तव्यम्, शिरोऽभिघातजलमज्जनमात्रेण पूयस्यासम्भवात् । अथ वा प्रपाकादिति सर्वत्र सम्बध्यते; तर्हि न पाकात् पृथक् स्राव उक्तः सर्वत्र पाकस्याविशिष्टत्वादिति कार्तिकः । ननु, पाकात् विद्रधेः स्रावसम्भवोऽस्तु, विद्रधौ तु वातेतरदोषस्यापि सम्भवात् कथमनिलार्दित इत्युक्तम् ? उच्यते, अतिस्रावेणात्रानिलकोपादनिलार्दितत्वं बोद्धव्यम् ॥ ५ ॥

भा० टी०—शिर में चोट लगने से, पानी में डूबनेसे या कान में फुन्सी हो जाने से वायु कोप से कान से पीप, खून या पानी वहा करता है । इसे कर्णस्राव कहते हैं ॥५॥

## अथ कर्णकण्ड्वादिरोगाणां लक्षणानि ।

कर्णकण्ड्वादीनाह—

मारुतः कफसंयुक्तः कर्णकण्डूं करोति च ।
पित्तोष्मशोषितः श्लेष्मा कुरुते कर्णगूथकम् ॥ ६ ॥
स कर्णगूथो द्रवतां गतो यदा विलायितो घ्राणमुखं प्रपद्यते ।
तदा स कर्णप्रतिनाहसंज्ञितो भवेद् विकारः शिरसोऽर्धभेदकृत् ७
( सु० उ० अ० २० )

म०—कर्णप्रतिनाहमाह—स कर्णगूथो द्रवतामित्यादि । विलायित इति स्नेह-स्वेदाभ्यां विलीनीकृतः सन् । घ्राणमुखमिति द्वन्द्वत्वादेकवद्भावः तेन घ्राणं च मुखं च प्रतिपद्यते इत्यर्थः । अन्ये "घ्राणमुखात्" इति पठन्ति, तदा घ्राणमुखात्=नासासकाशात् प्रतिपद्यते=गच्छतीत्यर्थः । अयं कफजो विकारः, अथवा कर्णगूथशोषे मारुतपित्तव्यापारात्त्रयाणामपि सम्बन्धोऽस्ति, तेन सन्निपातजोऽयम्; तथाच विदेहः;—"कफाद् वा मारुताद् वापि सन्निपातेन वा पुनः"—इति । शिरसोऽर्धभेदकृदिति अर्धावभेदशिरोरोगकृत् ॥ ६ ॥ ७ ॥

भा० टी०—कफ सहित वायु कान में खुजली पैदा कर देता है, उसे कर्णकण्डू कहते हैं । हिन्दी में कान कुकुहाना कहते हैं । वायु पित्त से कान के अन्दर कफ सूख कर खूट की सूरत में हो जाता है उसे कर्णगूथ कहते हैं हिन्दी में इसे कान का खूट कहते हैं ॥ ६ ॥ ७ ॥

भा० टी०—यही कान का मूट जब पिघल कर और सड़ कर मुख और नाक से बहता है तो उसे कर्णप्रतिनाह कहते हैं। इससे अर्धावभेदक[अधकपारी] हो जाता है।७।

अथ क्रिमिकर्णकस्य लक्षणानि।

[ Worms in the Ear ]
वर्म्स इन इअर.

क्रिमिकर्णकमाह—

यदा तु मूर्च्छन्त्यथवापि जन्तवः
सृजन्त्यपत्यान्यथवापि मक्षिकाः।
तद्व्यञ्जनत्वाच्च व्रणो निरुच्यते
भिषग्भिराद्यैः क्रिमिकर्णको गदः ॥ ८ ॥

(सु० उ० २० १०)

म०—यदा तु मूर्च्छन्ति=उच्छ्रिता भवन्ति। जन्तवः=क्रिमयः। क्रिमिमूर्च्छनं च मांस-शोणित-कोथे सति ज्ञेयम्, तदन्तरेण क्रिमीणामसंभवात्। अपत्यानीति डिम्बकान्। तद्व्यञ्जनत्वादिति क्रिमिलक्षणत्वात्। श्रवणो निरुच्यते इति क्रिमिकर्णको गद इति आश्रयाश्रयिणोरभेदोपचारान्छ्रवणः क्रिमिकर्णको गदो भण्यते। श्रवणशब्दः पुंल्लिङ्गोऽप्यस्तीत्यस्मादेव निर्देशात् प्रतीयते। अयं विकारस्त्रिदोषजो मन्तव्यः। तथाच निमिः,—"श्लेष्मपित्तमलोन्मिश्रे कोथे शोणितमांसजे। मूर्च्छन्ति जन्तवस्तत्र कृष्णास्ताम्राः सितारुणाः॥ भक्षयन्तोऽत्र ते कर्णं कुर्वन्तो विविधा रुजः। क्रिमिकर्णं तु तं विद्यात् सन्निपातसमुद्भवम्"—इति ॥ ८ ॥

भा० टी०—जब कान के भीतर मांस और रक्त के कोप से पक कर और उसमें सड़ाइन होती है तब छोटे २ कीड़े पड़ जाते हैं। अथवा मक्खियां अण्डा बच्चा भर देती हैं तो कृमि के लक्षण मालूम होते हैं और इसे क्रिमिकर्णक रोग कहते हैं। ८।

अथ कर्णप्रविष्टकीटादीनां लक्षणानि

कर्णप्रविष्टलक्षणं कीटादिभिराह—

पतङ्गाः शतपद्यश्च कर्णस्रोतः प्रविश्य हि।
अरतिं व्याकुलत्वं च भृशं कुर्वन्ति वेदनाम् ॥ ९ ॥

कर्णौ निस्तुद्यते तस्य तथा फरफरायते ।
कीटे चरति रुक् तीव्रा निष्पन्दे मन्दवेदना ॥ १० ॥
(सु० उ० अ० २० )

म०—पतङ्गा इत्यादि । शतपद्य इति कारण्डिकाः । निष्पन्दे इति स्थिरे ॥ ९ ॥ १० ॥

भा० टी०—फतिङ्गे या कानखजूरे के कान के अन्दर चले जाने से बड़ी बेचैनी, घबड़ाहट और पीड़ा होती है कान में टपकन होती है, और कान भीतर से फरफराता है। जब कीडे रेङ्गते हैं तो बड़ी तेज पीड़ा होती है और न रेङ्गने से पीड़ा कम होजाती है ॥ १० ॥

अथ कर्णविद्रधेर्लक्षणम् ।

( Abscess in the Ear ) एब्सेस इन दि इअर,

कर्णविद्रधिमाह—

क्षताभिघातप्रभवस्तु विद्रधिर्भवेत्तथा दोषकृतोऽपरः पुनः ।
सरक्तपीतारुणमस्रमास्रवेत् प्रतोद-धूमायन-दाह-चोष-वान् ॥ ११ ॥
( सु० उ० अ० २० )

म० क्षताभिघातप्रभवस्त्वित्यादि ।—क्षतप्रभवोऽभिघातप्रभवश्च, क्षताभिघातप्रभवयोरागन्तुकत्वादेकत्वम्, एवं वातादिजस्यापि दोषजत्वादेकत्वम् । सरक्त-पीता-ऽरुणमस्रमास्रवेदिति अस्रमास्रावम्, सरक्त-पीता-ऽरुण-वर्णत्वं चास्रावस्य वात-पित्त-कफ-संभवात् ॥ ११ ॥

भा० टी०—कान के अन्दर क्षत [ घाव ] हो जाने या चोट लगने से, अथवा भीतरी दोषों के वैगुण्य से विद्रधि हो जाती है तो लाल, पीला, गुलाबी रंगका स्राव होता है और कोंच, दाह, चूसने जैसी और धूँवा लगने जैसी पीड़ा होती है। इसे कर्णविद्रधि कहते हैं ॥ ११ ॥

अथ कर्णपाकस्य लक्षणम् ।

( Suppuration of the Ear )

सप्युरेशन इन दि इअर,

कर्णपाकलक्षणमाह—

कर्णपाकस्तु पित्तेन कोथ-विक्लेद-कृद् भवेत् ।
कर्णविद्रधिपाकाद् वा जायते चाम्बुपूरणात् ॥ १२ ॥
( सु० उ० अ० २० )

म०—कर्णपाक इत्यादि । कोथ-विक्लेद-कारिणि कोथः=पूतिभावः, विक्लेदः= आर्द्रता । ननु, कर्णगूथलक्षणे पित्तेन शोषणमुक्तम्, तत्कथमार्द्रता ? नैवम्, एवं विकारजनककर्मसहकारिणा द्रवांशोद्रिक्तेन पित्तेनार्द्रता, तत्र स्वेदादिपरीत- त्वेन शोषः ॥ १२ ॥

भा० टी०—कान में विद्रधि के पक जाने से, या पानी भर जाने से या पित्त दोष से कान पक जाता है, भीतर की तरफ सड़ जाता है और गीला रहता है । इसे कर्ण- पाक कहते हैं ॥ १२ ॥

अथ पूतिकर्णस्य लक्षणम् ।

( Faetid discharge from the Ear. )

फीटिड डिस्चार्ज फ्राम दि इअर,

पूतिकर्णलक्षणमाह—

**पूयं स्रवति पूति वा स ज्ञेयः पूतिकर्णकः ।**

म०—पूयमित्यादि । पूतीति क्रियाविशेषणं, वाशब्दोऽत्र समुच्चये, तेनावे- दनत्वं सवेदनत्वं वा घनस्रावित्वं च समुच्चीयते । घनस्रावनियमात् कर्णस्रावा- दस्य भेदः । तथाचोक्तं सुश्रुते—"स्रोतः स्थिते श्लेष्मणि पित्ततेजसा विलीयमाने भृशसंप्रतापिते । अवेदनो वाऽथ सवेदनो वा घनं स्रवेत् पूति च पूतिकर्णः"— इति ( सु. उ. त. अ. २० ) पूतिमान् कर्णः=पूतिकर्णः ॥—

भा० टी०—जिस कान से बदबूदार पीप बहे उसे पूतिकर्णक रोग कहते हैं ।

अथ कर्णशोथ-कर्णार्बुद-कर्णार्शसां लक्षणानि ।

( Inflammation of the Ear. ) इन्फ्लमेशन आफ दि इअर.

इदानीं संख्यापूरणार्थं कर्णगतशोथार्बुदार्शसामतिदेशेन लक्षणमाह—

**कर्णशोथार्बुदार्शांसि जानीयादुक्तलक्षणैः ॥ १३ ॥**

म०—कर्णशोथेत्यादि । कर्णशोथाश्चत्वारो वात-पित्त-कफ-रक्त-भेदेन; एवमर्शश्चतुर्विधम्, सहजसन्निपातजार्शसोः सन्निपातजन्यशोथयोश्चात्रासम्भवि- राधारप्रभावात् । अर्बुदं च सप्तविधं वात-पित्त-कफ-रक्त-मांस-मेदः-सिरानिमित्त- भेदात्; सिराजस्य वातजावरुद्धस्यात्र पृथग्गणनं शालाक्यसिद्धान्तसंवादादिति कार्तिकः । यथा सुश्रुत एव कर्णरोगानन्तरम् "दोषैस्त्रिभिस्तैः पृथगेव तद्वद् ब्रूयात्तथाऽर्शांसि तथैव शोथान् । शालाक्यसिद्धान्तमवेक्ष्य चापि सर्वात्मकं सप्तम- मर्बुदं तु—" ( सु. उ. त. अ. २२ ) इति नासारोगेऽभिधास्यति. कर्णगताः पुनः

तेन रक्तजस्य पित्तसमानालिङ्गत्वात् पित्तजेऽन्तर्भावः, तथाऽऽगन्तुजस्यापि रक्तपित्तलिङ्गत्वात् पित्तज एवान्तर्भावः, तेन शोथः सन्निपातजोऽत्रागणनीयः, एवं सहजरक्तजयोर्दोषज एवान्तर्भावात् सन्निपातजमर्शोऽपृथग्गणनीयम्, अर्बुदं च सन्निपातजं सप्तममिति, एवमेभिः सहाष्टाविंशतिः सुश्रुतोक्ताः कर्णरोगा भवन्ति ॥ १३ ॥

भा० टी०—कानमें वात, पित्त, कफ, रक्त से ४ प्रकार का शोथ, इसी प्रकार चार प्रकार का अर्श और वात, पित्त, कफ–रक्त–मांस–मेद–सिरा से सात प्रकार का अर्बुद भी होता है। इनमें वेही सब लक्षण होतेहैं जो कि शोथ, अर्श, और अर्बुद में होतेहैं॥१३॥

## अथ चरकोक्तकर्णरोगचतुष्टयस्य लक्षणानि ।

इदानीं चरकोक्तं कर्णरोगचतुष्टयं वात-पित्त-कफ-सन्निपात-प्रभेदादाह—

**नादोऽतिरुक् कर्णमलस्य शोषः स्रावस्तनुश्चाश्रवणं च वातात् ।**
**शोथः सरागो दरणं विदाहः सपीत-पूति-स्रवणं च पित्तात् ॥१४॥**
**वैश्रुत्य-कण्डु-स्थिरशोथ-शुक्ल-स्निग्ध-स्रुतिः स्वल्परुजः कफाच्च ।**
**सर्वाणि रूपाणि च सन्निपातात् स्रावश्च तत्राधिकदोषवर्णः ॥१५॥**

( च० चि० अ० १६ )

म०—नादोऽतिरुगित्यादि । अश्रवणमिति अशब्दश्रुतिः । वैश्रुत्यमिति विरुद्धश्रवणम् ॥ १४ ॥ १५ ॥

भा० टी०—यदि कान में साँय २ आवाज मालूम हो, पीड़ा हो, कान की मैल सूख जाय, पतला स्राव हो और सुन न पड़े तो वात रोग समझना चाहिए। लाल शोथ हो, कान फटे, जलन हो, पीला रङ्ग का वदवूदार स्राव हो तो पित्त रोग समझे। कुछ का कुछ सुनना, खुजली, कड़ी सूजन, सफ़ेद–चिकना स्राव और थोड़ी २ पीड़ा हो तो कफ रोग समझे। और तीनों दोषों के लक्षण तथा जो दोष अधिक हो उसी दोषकेसे रङ्ग का स्राव हो तो सन्निपात से समझना चाहिए ॥ १४–१५ ॥

## अथ परिपोटकस्य लक्षणम् ।

कर्णावयवत्वात् कर्णपाल्यास्तद्विकारानाह—

**सौकुमार्याच्चिरोत्सृष्टे सहसाऽतिप्रवर्धिते ।**
**कर्णशोथो भवेत् पाल्यां सरुजः परिपोटवान् ।**
**कृष्णारुणनिभः स्तब्धः स वातात् परिपोटकः ॥१६॥**

( सु० चि० अ० २५ )

म०—सौकुमार्यादित्यादि । सौकुमार्याद्चिरोत्सृष्टं वर्धनेन त्यक्ते, तस्मा च वर्धयितुमारब्धे कर्णे शोथः परिपोटवान् मनाक् स्वगवदरुणस्तनानिन्दयः ॥१६॥

भा० टी०—सुकुमारी से पहले तो कान को बढ़ावे नहीं—बहुत दिनों तक छोटा रहने दे, बाद बढ़ाये तो कान की लहर में सूजन हो जाती है जो कि पीड़ा करती है, कुछ २ फट जाती है, रङ्ग उसका काला या लाल होता है और सूजन नहीं होती है। उसे परिपोटक कहते हैं। यह वात से होता है ॥ १६ ॥

## अथोत्पातस्य लक्षणम् ।

उत्पातलक्षणमाह—

गुर्वाभरणसंयोगात् ताडनाद् घर्षणादपि ।
शोथः पाल्यां भवेत् श्यावो दाह-पाक-रुजाऽन्वितः ॥१७ ॥
रक्तो वा रक्तपित्ताभ्यामुत्पातः स गदो मतः ।
( सु० नि० अ० २४)

म०—गुर्वित्यादि । श्यावत्वं व्याधिप्रभावात्, पित्त-रक्तयोः श्यावत्वाजनकत्वात्, किंवा वातानुबन्धादत्र श्यावत्वम् ॥ १७ ॥—

भा० टी०—कान में भारी गहना पहनने से, या चोट लग जाने से, अथवा घिस जाने से, लहर में एक सूजन लाल रङ्ग की हो जाती है, उसमें जलन होती है, पीड़ा होती है और वह पकती है। यदि सूजन लाल रङ्ग की हो तो वह रक्त पित्त से होती है। इसे उत्पात रोग कहते हैं ॥ १७ ॥

## अथोन्मन्थक-दुःखवर्धनयोर्लक्षणानि ।

उन्मन्थकमाह—

कर्णं बलाद् वर्धयतः पाल्यां वायुः प्रकुप्यति ॥ १८ ॥
कफं संगृह्य कुरुते शोथं स्तब्धमवेदनम् ।
उन्मन्थकः सकण्डूको विकारः कफवातजः ॥ १९ ॥
संवर्ध्यमाने दुर्विद्धे कण्डू-पाक-रुजाऽन्वितः ।
शोथो भवति पाकश्च त्रिदोषो दुःखवर्धनः ॥२०॥

म०—कर्णमित्यादि । स्तब्धत्वं वातकृतम्, कण्डूः कफात्, इति वात-कफलिङ्गम् ॥ १८—२० ॥

भा० टी०—कान को जबर्दस्ती बढ़ाने से लहर में वायु कुपित होकर कफ की सहायता से जकड़ा और कम पीड़ा करने वाले शोथ को पैदा कर देता है और उसमें खुजली उठती है। इसे उन्मन्थक रोग कहते हैं। यह कफ वात से होता है, ख़राब तोर पर कानछेदने से कान के बढ़ावे समय एक सूजन हो जाती है जिसमें खुजली उठती है, पीड़ा होती है और सूजन पक जाती है, जिससे बहुत दुःख होता है। इसे दुःखवर्धन रोग कहते हैं। यह त्रिदोष से होता है ॥ १८-२० ॥

## अथ परिलेहिनो लक्षणम् ।

परिलेहिनमाह—

कफासृक्क्रिमयः क्रुद्धाः सर्षपाभा विसर्पिणः ।
कुर्वन्ति पाल्यां पिडकाः कण्डू-दाह-रुजाऽ-न्विताः ॥ २१ ॥
कफासृक्क्रिमिसंभूतः स विसर्पन्नितस्ततः ।
लिहेत् सशष्कुलीं पालीं परिलेहीति स स्मृतः ॥ २२ ॥

(सु० चि० अ० २५)

इति श्रीमाधवकरविरचिते माधवनिदाने कर्णरोगनिदानं समाप्तम् ।

म०—कफासृगित्यादि । स विसर्पन्निति स इति पिडकात्मको विकारः; "विसर्पान्वितः" इति पाठान्तरे विसर्पणान्वितः । लिहेदिति निर्मांसीं करोति आच्छादयेद् वा ॥ २१–२२ ॥

इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायां कर्णरोगनिदानं समाप्तम् ।

भा० टी०—कफ और खून के सड़ जाने से कीड़े पड़ जाते हैं, बाद सरसों की तरह छोटी-२ फुन्सियाँ कान की लहर में हो जाती हैं, जो कि फैलती हैं और जिसमें खुजली पाक और पीड़ा होती है, वे फुन्सियाँ बढ़कर लहर भर में चारों तरफ फैलती जाती हैं और कान तथा लहर को चाट जाती हैं जिससे उस जगह कहीं भी मांस नहीं देख पड़ता। इसे परिलेही रोग कहते हैं ॥ २१-२२ ॥

इति श्रीहरिनारायणशर्मवैद्यकृतायां निदानदीपिकायां रुग्विनिश्चय-भाषाटीकायां कर्णरोगनिदानम् ।

## अथ नासारोगनिदानम्।

### अथ पीनसरोगस्य लक्षणम्।

( Ozaena ) ओ जीना,

इन्द्रियाधिकरणविकाराधिकारान्नासारोगनिदानम्। तत्रादौ पीनसमाह—

**आनह्यते यस्य विशुष्यते च प्रक्लिद्यते धूप्यति चापि नासा।**
**न वेत्ति यो गन्धरसांश्च जन्तुस्तं[1] पीनसाक्रान्तमिह व्यवस्येत्**
**तं चानिल-श्लेष्मभवं विकारं ब्रूयात् प्रतिश्यायसमानलिङ्गम् ॥१॥**

( च० चि० अ० २६ )

म०—आनह्यत इत्यादि। आनह्यत इत्यवबध्यते, वातशोषितत्वेन। प्रक्लिद्यते आर्द्रीभवति। धूप्यतीति सन्तापमनुभवति, दिवादेराकृतिगणत्वात् धूप्यतीति रूपम्। गन्धरसानिति गन्धान्=सुरभ्यसुरभीन्, आवृतत्वेन नासायाः; नासारोगारम्भकदोषेण रसनाया अपि दुष्टेः रसान् मधुरादीन् न वेत्ति। तं चानिलश्लेष्मभवमिति वातकफजम्। ननु, अन्यत्र पित्तकफजोऽसदृशलिङ्गश्च पठितः, तद्यथा—"मस्तुलुङ्गोचितः श्लेष्मा यदा पित्ताद् विदह्यते। तदाऽसृक् पिच्छिलं नासा बहुसिंहाणकं स्रवेत् ॥ सकण्डू-दाह-पाकं च तं तु विद्याद्धि पीनसम्"—इति, तत् कथं न विरोधः? नैवम्, संप्राप्तिविशेषेणास्य तथाभाव इति कार्त्तिकः। तत्रान्तर-प्रत्ययात् पित्तसम्बन्धो लिङ्गविशेषश्चात्र बोद्धव्य इत्यर्थः। गदाधरस्तु तन्त्रान्तरात् "अनिलश्लेष्मभवम्" इति पठित्वा श्लेष्मपित्तज एव व्याख्यातः इत्याह। प्रतिश्याय-समानलिङ्गमिति कफवातजप्रतिश्यायतुल्यलिङ्गम् ॥ १ ॥

भा० टी०—वात कफ के कोप से नाक के अन्दर कफ रुक जाता है जिससे नाक बन्द हो जाती है और फिर कभी गीली हो जाती है, गर्मी मालूम होती है, बास खुशबू और बदबू नहीं मालूम होती है और इसका विकार अन्दर जीभ तक पहुँच जाता है जिससे रस ज्ञान नहीं होता और जुकाम के सब लक्षण होते हैं इसे पीनस रोग कहते हैं ॥ १ ॥

---

१ "क्षुद्रं व्यवस्येत्तमपीनसेन" इति पाठान्तरम्।

### अथ पूतिनस्यस्य लक्षणम् ।

पूतिनस्यमाह—

**दोषैर्विदग्धैर्गल-तालु-मूले सम्मूर्च्छितो यस्य समीरणस्तु ।**
**निरेति पूतिर्मुख-नासिकाभ्यां तं पूतिनस्यं प्रवदन्ति रोगम् ॥ २ ॥**

( सु० उ० अ० २२ )

म०—दोषैरित्यादि । दोषैरिति पित्त-कफ-रक्तैः, रक्तस्यापि दोषतुल्यरूपत्वाद्दोषत्वम् । विदग्धैरिति पित्तश्लेष्मणोः सरक्तयोरूष्मणा विरुद्धलवणाम्लरसपाकेन पूतिभावमापन्नैः । सम्मूर्च्छित इति उच्छ्रायं नीतः । निरेतीति समीरण एव, अन्यस्य कर्तृपदस्याभावात् । तं पूतिनस्यमिति नासिकाभवो नस्यः, पूतिर्नस्यो वायुर्यत्र तं पूतिनस्यम् । इहैव विदेहः—"कफपित्तमसृङ्मिश्रं संचितं मूर्ध्नि देहिनाम् । विदग्धमूष्मणा गाढं रुजां कृत्वाऽक्षिशङ्खजाम् ॥ ततः प्रस्यन्दते घ्राणात् सरक्तं पूतिपीतकम् । पूतिनस्यं तु तं विद्यात्-घ्राण-कण्डू-ज्वर-प्रदम्"—इति ॥ २ ॥

भा० टी०—गला और तालुमूल में कुपित वात, पित्त कफ और रक्त से मिल जाता है जिससे साँस बदबूदार आती है । इसे पूतिनस्य रोग कहते हैं ॥ २ ॥

### अथ नासापाकस्य लक्षणम् ।

( Pustule in the Nose. )

पुस्चुल इन दि नोज,

नासापाकमाह—

**घ्राणाश्रितं पित्तमरूंषि कुर्याद् यस्मिन् विकारे बलवांश्च पाकः ।**
**तं नासिकापाकमिति व्यवस्येद् विक्लेद-कोथावथवाऽपि यत्र ॥३॥**

( सु० उ० अ० २२ )

म०—घ्राणाश्रितमित्यादि । अरूंषीति व्रणान् । यस्मिन् विकार इति यस्यां विकृतौ सत्याम् । व्यवस्येत्=जानीयात् । विक्लेदः=आर्द्रता, कोथः=पूतिभावः ॥ ३ ॥

भा० टी०—कुपित पित्त से नाक में फुन्सियाँ हो जाँय, नाक अत्यन्त पके, गीली रहै और बदबू आवे । इसे नासापाक कहते हैं ॥ ३ ॥

अथ पूयरक्तस्य लक्षणम् ।

दोषागन्तुजं पूयरक्तमाह—

**दोषैर्विदग्धैरथवाऽपि जन्तोर्ललाटदेशेऽभिहतस्य तैस्तैः ।**
**नासा स्रवेत् पूयमसृग्विमिश्रं तं पूयरक्तं प्रवदन्ति रोगम् ॥ ४ ॥**

( सु० उ० अ० २२ )

म०—दोषैरित्यादि । विदग्धैरिति पित्तरक्ताधिक्याद् ... पाकं प्राप्तैः, ललाटाभिघातेन वा पाकं प्राप्तैः । तैस्तैरिति प्रहारपतनादिभिः ॥ ४ ॥

भा० टी०—दोषों के अर्धपाक होने से या माथे में किसी प्रकार चोट लगने से नाक से रक्तमिश्रित पीप निकला करती है । इसे पूय रक्त कहते हैं ॥ ४ ॥

अथ क्षवथुरोगस्य लक्षणम् ।

( Sneezing ) छींकना

क्षवथुर्दोषागन्तुभेदाद् द्विविधो भवति; तत्र दोषजं माह—

**घ्राणाश्रिते मर्मणि संप्रदुष्टो यस्यानिलो नासिकया निरेति ।**
**कफानुजातो बहुशोऽतिशब्दस्तं रोगमाहुः क्षवथुं विधिज्ञाः ॥ ५ ॥**

( सु० उ० अ० २२ )

म०—घ्राणाश्रित इत्यादि । ... ... ... नासापुटयोः, 'तदाश्रितः सन्' इति ... ॥ ५ ॥

भा० टी०—नाक के अन्दर शृङ्गाटक नामक मर्मस्थान में ... के साथ बार बार ... ( ... ) ... निकलता ... रोग कहते हैं । ... ॥ ५ ॥

... ... लक्षणम् ।

आगन्तु ...

**तीक्ष्णोपयोगादतिजिघ्रतो वा ... ...**
**सूत्रादिभिर्वा तरुणास्थिमर्मण्युद्घाटितेऽन्यः क्षवथुर्निरेति ... ।**

म०-तीक्ष्णोपयोगादित्यादि । तीक्ष्णोपयोगाद्=राजिकादितीक्ष्णद्रव्य-भक्षणात् । भावान् कटूनिति कटूनि द्रव्याणि । अभिजिघ्रतो=भृशं जिघ्रतः । अर्कनिरीक्षणाद् वा कफविलयनकरत्वात् । तरुणास्थिमर्मणीति तरुणास्थि=नासा-वंशास्थि, तदेव मर्म तस्मिन् फणामर्मणीत्यर्थः, अभिघातादिना मर्मव्यथाजनक-त्वात्; अथवा तरुणास्थि च मर्मणि च शृङ्गाटके, द्वन्द्वैकवद्भावनिर्देशात् । उद्घा-टिते=चालिते । अन्य=आगन्तुजः ॥ ६ ॥

भा० टी०—तीखी (राई वगैरह) चीजों के खाने से, चरपरी ( मिर्च, कायफर वगैरह) चीजों के ज्यादा सूँघने से, सूर्य की तरफ देखने से, या नाक में सूत, तिनका, या वत्ती डालकर घुमाने से, नाक की तरुण हड्डी के रगड़ खाने से जो छींकें आती हैं उसे आगन्तुज क्षवथु कहते हैं ॥ ६ ॥

### अथ भ्रंशथुरोगस्य लक्षणम् ।

भ्रंशथुमाह-

**प्रभ्रश्यते नासिकया तु यस्य सान्द्रो विदग्धो लवणः कफस्तु ।**
**प्राक्संचितो मूर्धनि सूर्यतप्तस्तं भ्रंशथुं रोगमुदाहरन्ति ॥ ७ ॥**

( सु० उ० अ० २२ )

म०-प्रभ्रश्यत इत्यादि । प्रभ्रश्यते=गलति । विदग्धो लवण इति स्वरूपा-ख्यानम्, विदग्धत्वादेव कफस्य लवणत्वसिद्धेः । प्राक्संचित इत्यनेन संचयपूर्वकं कोपं दर्शयति, हेतुभूयस्त्वेन चयमन्तरेणापि कोपदर्शनात् । यदुक्तम्-"न केवलं चयं प्राप्य दोषाः कुप्यन्ति देहिनाम् । अन्यतोऽपि हि कुप्यन्ति हेतुबाहुल्यतो बलात्"-इति ॥ ७ ॥

भा० टी०—मस्तक में कफ पहले इकट्ठा रहता है और वह अधपका होने से नमकीन होता है, बाद वह पित्त या सूर्य के घाम से पिघल कर नाक से निकलता है । उसे भ्रंशथु रोग कहते हैं ॥ ७ ॥

### अथ दीप्ताख्यनासारोगस्य लक्षणम् ।

दीप्तमाह-

**घ्राणे भृशं दाहसमन्विते तु विनिःसरेद्धूम इवेह वायुः ।**
**नासा प्रदीप्तेव च यस्य जन्तोर्व्याधिं तु तं दीप्तमुदाहरन्ति ॥८॥**

( सु० उ० अ० २२ )

म०—घ्राणे भृशमित्यादि । प्रदीप्तेनेवेति प्रज्वालितेनेव ॥ ८ ॥

भा० टी०—नाक के अन्दर जलन मालुम होती है साँस धुँवा की तरह आती है और नाक जलती सी जान पड़ती है। उसे दीप्त कहते हैं ॥ ८ ॥

अथ प्रतीनाहस्य लक्षणम् ।

प्रतीनाहमाह—

उच्छ्वासमार्गं तु कफः सवातो रुन्ध्यात् प्रतीनाहमुदाहरेत्तम् ।

( सु० उ० अ० २२ )

म०—उच्छ्वासमार्गमित्यादि ॥

भा० टी०—कफ वात साँस लेने के रास्ता को रोक देते हैं, इसे प्रतीनाह कहते हैं।

अथ नासास्रावस्य लक्षणम् ।

नासास्रावमाह—

घ्राणाद् घनः पीतसितस्तनुर्वा दोषः स्रवेत् स्रावमुदाहरेत्तम् ॥ ९ ॥

( सु० उ० अ० २२ )

म०—घ्राणादित्यादि । दोष इति कफः ॥ ९ ॥

भा०टी०—नाक से पीला या सफेद गाढ़ा या पतला कफ निकला करता है। इसे नासास्राव कहते हैं ॥ ९ ॥

अथ नासाशोषस्य लक्षणम् ।

( Dryness of Nose. ) ड्राईनेस आफनोज़

नासाशोषमाह—

घ्राणाश्रिते स्रोतसि मारुतेन गाढं प्रतप्ते परिशोषिते च ।

कृच्छ्रात् श्वसेदूर्ध्वमधश्च जन्तुर्यस्मिन् स नासापरिशोष उक्तः ॥ १० ॥

( सु० उ० अ० २२ )

म०—घ्राणाश्रिते स्रोतसीत्यादि । अत्र च वायुकर्तृकेण शोषणेन तद्गतश्लेष्मशोषो बोद्धव्यः, प्रतप्त इत्यनेन पित्तमपि गम्यते; प्रतपनस्य पित्तकर्तृ-

णालम्भादात् । तथाच कश्चित् पठति,—"घ्राणाश्रिते श्लेष्मणि मारुतेन पित्तेन गाढं परिशोषिते च"—इति । अतएव इत्यस्य स्थाने "..." इति पाठान्तरे स एवार्थः । कृच्छ्राच्छ्वसेदूर्ध्वमधश्च यस्मिन्निति कष्टेनोच्छ्वास...श्वासौ करोतीत्यर्थः ॥ १० ॥

भा० टी०—वात पित्त के द्वारा नाक में कफ सूख जाता है जिससे साँस लेने और छोड़ने में तकलीफ होती है। इसे नासा परिशोष कहते हैं ॥ १० ॥

अथाम-पक्व-पीनसलिङ्गलक्षणम् ।

चिकित्साभेदार्थं पीनसस्याम-पक्व-लक्षणमाह—

शिरोगुरुत्वमरुचिर्नासास्रावस्तनुः स्वरः ।
क्षामः ष्ठीवत्यथाभीक्ष्णमामपीनसलक्षणम् ॥ ११ ॥
आमलिङ्गान्वितः श्लेष्मा घनः खेषु निमज्जति ।
स्वर-वर्ण-विशुद्धिश्च परिपक्वस्य लक्षणम् ॥ १२ ॥

म०—शिरोगुरुत्वमित्यादि । तनुरघनः । स्वरः क्षाम इति अविस्पष्टं वचनम् । ष्ठीवत्यथाभीक्ष्णमिति मुहुर्मुहुर्नासिकया श्लेष्माणं निरस्यतीत्यर्थः । आमरसान्वितेन दोषेण शिरोगुरुत्वादयः । 'आमलिङ्गान्वितः श्लेष्मा घनः खेषु निमज्जति' इत्यादि पक्वलक्षणम् । आमलिङ्गैः=शिरोगुरुत्वादिभिरन्वितः श्लेष्मा निमज्जति=लीनो भवति । अयमर्थः—श्लेष्मा तावल्लीनो भवति, आमलिङ्गान्यपि लीनानि भवन्ति, तथाच "तनुत्वमामलिङ्गानाम्" इति सुश्रुतः । "न सज्जति इति पाठान्तरे न सक्तो भवति, न तिष्ठतीति यावत् । तदामलिङ्गान्वितः स्तोकेनामलिङ्गेनान्वितः । घनः=स्त्यानः । खेषु=नासारन्ध्रेषु, स्थितः" इति शेषः; व्यक्त्यपेक्षया बहुवचनम् । स्वरविशुद्धिः=स्वरभेदाभावः, वर्णविशुद्धिः=प्रकृतिसवर्णता ॥ ११ ॥ १२ ॥

भा० टी०—शिर भारी रहे, अन्न में अरुचि, नाक बहा करे, गला बैठ जाय, बार २ थूके, ये लक्षण कच्चे पीनस के होते हैं । आम पीनस के-शिर का भारीपन वगैरह लक्षण न रहें। कफ गाढ़ा हो जाय और कम निकले, आवाज चेहरा का रंग साफ हो जाय। ये पक्वलक्षण पीनस के होते हैं ॥ ११—१२ ॥

प्रतिश्यायकराः । अन्ये तु चयं गता मूर्धनीति यथा स्थितमेव योजयन्ति, उदानवायोरूर्ध्वगतित्वाच्छिरस्यापि संभवात्, त्वक्सिराश्रितत्वात् पित्तासृजोः कफस्य च निसर्गतः शिरोवस्थितेः शिरसि चय इति । तत इति प्रकोपविशेषात् प्रसरादनन्तरम् । प्रतिश्याय इति वातं प्रति=अभिमुखम्, श्यायो=गमनं कफादीनां यत्र स प्रतिश्यायः । "श्यैङ् गतौ" इत्यस्य प्रयोगः । तथाच चरकः,—"घ्राणमूले स्थितः श्लेष्मा रुधिरं पित्तमेव वा । मारुताध्मातशिरसः श्यायते मारुतं प्रति" ( च. चि. स्था. अ. ८ ) इति ॥ १३-१४ ॥

भा० टी०—मल मूत्र के वेग का धारण करना, अजीर्ण, नाक में धूल घुस जाना, अधिक बोलना, अतिक्रोध ऋतुचर्या के उलटा आहार विहार करना, धूवाँ और घाम में रहना, रात में जागना, दिन में सोना, ठण्डा जल अधिक पीना, ठण्डी हवा में रहना, ओस में सोना, अधिक मैथुन, अधिक रोना, गाढ़ा कफ शिर में अधिक जमा होना, इन कारणों से वायु कुपित होकर प्रतिश्याय ( जुकाम ) पैदा कर देता है। यह निदान तुरन्त प्रतिश्याय पैदा करने वाला है। संचित वायु आदि दोष तथा रक्त अपने २ कारणों से मस्तक मे कुपित होकर प्रतिश्याय पैदा कर देवे हैं ॥ १३-१४ ॥

## अथ प्रतिश्यायस्य पूर्वरूपाणि ।

तस्य पूर्वरूपमाह—

**क्षवप्रवृत्तिः शिरसोऽतिपूर्णता स्तम्भोऽङ्गमर्दः परिहृष्टरोमता ।**
**उपद्रवाश्चाप्यपरे पृथग्विधा नृणां प्रतिश्यायपुरःसराः स्मृताः ॥१५॥**

( सु० नि० अ० २४ )

म०—क्षवप्रवृत्तिरित्यादि । उपद्रवाश्चाप्यपरे इति उपद्रवास्तत्कालभाविनो रोगाः, न तु पारिभाषिकाः पश्चात्कालभाविनः; ते च घ्राणधूमायनमन्थादयः । यदाह विदेहः,—"पूर्वरूपाणि दृश्यन्ते प्रतिश्याये भविष्यति । घ्राणधूमायनं मन्थः क्षवथुस्तालुदारणम् ॥ कण्ठध्वंसो मुखस्रावः शिरसः पूरणं तथा"—इति । पुरःसरा इति पूर्वरूपाणि ॥ १५ ॥

भा० टी०—छींक आना, शिर भारी रहना, शरीर जकड़ा रहना, अँगड़ाई होना, रोंवा खड़ा होना, और भी उपद्रव—नाक में धूँवा के लगने जैसी जलन होना, तालु फट जाय, मुँह से लार वहना, गला वैठना, ये सब प्रतिश्याय के पूर्वरूप हैं ॥ १५ ॥

अथ वातजादिप्रतिश्यायानां लक्षणानि।

वातादिप्रतिश्यायलिङ्गान्याह—

आनद्धा पिहिता नासा तनुस्रावप्रसेकिनी।
गलताल्वोष्ठशोषश्च निस्तोदः शङ्खयोस्तथा ॥ १६ ॥
क्षवप्रवृत्तिरत्यर्थं वक्त्रवैरस्यमेव च।
भवेत स्वरोपघातश्च प्रतिश्यायेऽनिलात्मके ॥ १७ ॥
उष्णः सपीतकः स्रावो घ्राणात् स्रवति पैत्तिके।
कृशोऽतिपाण्डुः सन्तप्तो भवेदुष्णाभिपीडितः ॥ १८ ॥
सधूममग्निं सहसा वमतीव स मानवः।
घ्राणात् कफः कफकृते शीतः पाण्डुः स्रवेद् बहुः।
शुक्लावभासः शुक्लाक्षो भवेद् गुरुशिरा नरः ॥ १९ ॥
कण्ठ-ताल्वोष्ठ-शिरसां कण्डूभिरभिपीडितः।

(सु० उ० अ० २४)

म०—आनद्धेत्यादि। आनद्धा=विबद्धा। पिहिता=अपिधानेन। निस्तोदः=सूचिव्यधनवद् व्यथा। शङ्खयोरिति भ्रूपुच्छान्तयोः। स्वरोपघात इति स्वरभेदः। पित्तप्रतिश्यायवान् मानवः कृशो भवति। अतिपाण्डुः [illegible]। उष्णाभिपीडित इति उष्णगुणेनाभिपीडित इत्यर्थः ॥ १६–१९ ॥

भा० टी०—नाक बन्द हो जाय, नाक से पानी बहे, गला, तालु और ओठ सूखे, कनपटी में तोद होय, छींक ज्यादा आवे, मुँह फीका रहे, स्वर बैठ जाय। ये लक्षण वातज प्रतिश्याय के हैं। पित्तज प्रतिश्याय में नाक से गर्म और पीला पानी [illegible] होता है। रोगी दुबला हो जाता है। शरीर का रंग पाण्डु [illegible] मालूम होती है। रोगी को ऐसी तकलीफ मालूम होती है मानो नाक से धुआँ के साथ आग निकलती है। कफज प्रतिश्याय में नाक से ठंढा पाण्डु वर्ण का कफ बहुत निकला करता है। शरीर का रंग सफेद पड़ जाता है। आँखें सफेद हो जाती हैं। शिर भारी हो जाता है, गला, तालु ओठ और शिर में खुजली होती है ॥ १६–१९ ॥

अथ सान्निपातिकप्रतिश्यायस्य लक्षणम् ।

सन्निपातजमाह—

भूत्वा भूत्वा प्रतिश्यायो यस्याकस्मान्निवर्तते ॥ २० ॥
सम्पक्वो वाऽप्यपक्वो वा स सर्वप्रभवः स्मृतः ।

( सु० नि० अ० २४ )

म०—भूत्वेत्यादि । भूत्वा भूत्वा इति वीप्सया पुनः पुनः सम्भवं दर्शयति । अन्यतमदोषस्य कालादिनाऽनवधारितेन बलहानेर्निवृत्तिः, अकस्मात् प्रवृत्तिरपि असम्यङ्निवृत्तदोषस्य कालादिना बललाभात् । अत्र यद्यपि दोषत्रयलिङ्गानि नोक्तानि, तथाऽपि सर्वप्रभवत्वात् प्रत्येतव्यानि । असाध्यश्चायं दुष्टतां गतः सन्, "नृणां दुष्टप्रतिश्यायस्त्वसाध्यः सर्वजः स्मृतः"—इति विदेहवचनात् ॥ २० ॥

भा० टी०—जो प्रतिश्याय पैदा हो २ कर, चाहे पका हो या न पका हो, अकस्मात् बन्द हो जाय वह सन्निपातज प्रतिश्याय समझा जाता है ॥ २० ॥

अथ दुष्टप्रतिश्यायस्य लक्षणानि ।

एकदोषस्यापि दुरुपचाराद् दोषद्वयानुबन्धेन दुष्टतां गतस्य दोषत्रयसम्बन्धसाम्येन सन्निपातजानन्तरं लिङ्गमाह—

प्रक्लिद्यते पुनर्नासा पुनश्च परिशुष्यति ॥ २१ ॥
पुनरानह्यते वाऽपि पुनर्विव्रियते तथा ।
निश्वासो वाऽतिदुर्गन्धो नरो गन्धान् न वेत्ति च ॥२२॥
एवं दुष्टप्रतिश्यायं जानीयात् कृच्छ्रसाधनम् ।

[ सु० नि० अ० २४ ]

म०—प्रक्लिद्यते पुनर्नासेत्यादि । आनह्यत इति विदह्यते । विव्रियत इति विगतावरणा भवतीत्यर्थः । क्लेद-शोष-पिधान-विवरणानि नैककालं भिन्नदोषजानि बोद्धव्यानि, तेन विरोधो नोद्भावनीयः । एवमिति इत्थम्भूत लिङ्गं दुष्टप्रतिश्यायं परस्परविरुद्धोपक्रमदोषसम्बन्धात् कृच्छ्रसाध्यं जानीयात् । अयं च पञ्चानामेवावस्थान्तरतया अनन्यत्वान्न षष्ठः । ननु, अवस्थान्तरत्वेऽपि अभिष्यन्दादधिमन्थ इव भिन्नो भविष्यति ? नैवम्, तद्वद्वातादिजत्वेनानिर्देशात् ॥ २१ ॥ २२ ॥

भा० टी०—कभी कफ से नाक भरी सी हो जाय और कभी स्वयं साफ हो जाय और कभी खुल जाय, साँस में बदबू आवे और गन्ध न मालूम हो। इन लक्षणों से समझना चाहिए कि प्रतिश्याय बिगड़ गया है। ऐसा प्रतिश्याय दुष्ट हो जाता है॥ २१-२२॥

अथ रक्तजप्रतिश्यायस्य लक्षणम् ।

रक्तजलिङ्गमाह—

रक्तजे तु प्रतिश्याये रक्तस्रावः प्रवर्तते ॥ २३ ॥
ताम्राक्षश्च भवेज्जन्तुरुरोघातप्रपीडितः ।
दुर्गन्धोच्छ्वासवदनो गन्धानपि न वेत्ति सः ॥ २४ ॥

(सु० उ० अ० २४)

म०—रक्तज इत्यादि । उरोघातप्रपीडित इति उरोघातनामव्याधिप्रपीडित-लक्षणः, तेन प्रकर्षेण पीडितः । तद्यथा—"उरःक्षतमुरःस्तम्भः पूतिकफोऽरुचिः स्वरः । सकासः सज्वरो ज्ञेय उरोघातः सपीनसः"—इति । अत्र पित्तप्रतिश्यायलिङ्गान्यपि बोद्धव्यानि, तुल्यत्वात् पित्तरक्तयोः । तथा च क्वचित् पठ्यते—"पित्तप्रतिश्यायकृतैः लिङ्गैश्चापि समन्वितः"—इति ॥ २३-२४ ॥

भा० टी०—रक्तज प्रतिश्याय में नाक से खून निकलता है, आँखें ताम्बे सी लाल हो जाती हैं और छाती में पीड़ा होती है, खाँसी आती है, ज्वर होता है। मुख और साँस में बदबू आती है और गन्धज्ञान नहीं होता ॥ २३-२४ ॥

अथासाध्यप्रतिश्यायस्य लक्षणम् ।

अप्रतिक्रियया कालान्तरेण सर्व एव दुष्टप्रतिश्यायो भवति, स चा-साध्य इत्याह—

सर्व एव प्रतिश्याया नरस्याप्रतिकारिणः ।
दुष्टतां यान्ति कालेन तदाऽसाध्या भवन्ति हि ॥ २५ ॥
मूर्च्छन्ति चात्र क्रिमयः श्वेताः स्निग्धास्तथाऽणवः ।
क्रिमितो यः शिरोरोगस्तुल्यं तेनास्य लक्षणम् ॥ २६ ॥

(सु० उ० अ० २४)

म०-सर्व एवेत्यादि । मूर्च्छन्ति चात्र क्रिमय इति अत्रेति एषु, बहुवचनान्तात्त्रल्प्रत्ययविधिः। अन्ये तु प्रत्यासन्नत्वात् रक्तज एव क्रिमिमूर्च्छनं वदन्ति। श्वेता इति कफाधिकत्वात् प्रतिश्यायस्य सर्वत्र कफजा एव श्वेतक्रिमयो भवन्ति। "क्रिमितो यः शिरोरोगस्तुल्यं तेनास्य लक्षणम्" इति क्रिमिजशिरोरोगेणेह तुल्यं लिङ्गम्, तच्च-"निस्तुद्यते यस्य शिरोऽतिमात्रम्"-इत्यादिना वक्ष्यमाणम्॥२५-२६॥

भा० टी०—यदि प्रतिश्याय की ठीक चिकित्सा न की जाय, तो सभी प्रकार के प्रतिश्याय कुछ काल के बाद बिगड़ जाते और असाध्य होजाते हैं। बाद उनमें सफ़ेद, चिकने छोटे २ कीड़े देख पड़ते हैं और क्रिमिज शिरो रोग में जो लक्षण होते हैं वे ही लक्षण इसमें पैदा हो जाते हैं॥ २५-२६॥

अथ प्रवृद्धप्रतिश्यायानां विकारान्तरकर्तृत्वम्।

अतःपरमपरान् विकारान् प्रवृद्धाः प्रतिश्यायाः कुर्वन्ति तानाह—

बाधिर्यमान्ध्यमघ्रत्वं घोरांश्च नयनामयान्।
शोथाग्निसादकासांश्च वृद्धाः कुर्वन्ति पीनसाः॥ २७॥

( सु० उ० अ० २४ )

म०-बाधिर्यमित्यादि । घोरान् नयनामयानित्यभिधानादेवान्ध्ये लब्धे विशेषेण तत्करत्वप्रतिपादनार्थमान्ध्यग्रहणम् । अघ्रत्वमिति न जिघ्रतीत्यघ्रस्तस्य भावोऽघ्रत्वम्। "घ्रा" गन्धोपादाने, इत्यस्मात् "सुपि स्थः" इत्यत्र योगविभागात् कप्रत्ययः॥ २७॥

भा० टी०—जब कि प्रतिश्याय अच्छा न होकर बहुत बढ़ जाता है तो बहिरापन, आँख से न सूझना, दूसरे भी नेत्ररोग, सूजन, मन्दाग्नि, खाँसी, ये रोग पैदा हो जाते हैं॥ २७॥

अथान्येऽपि नासारोगाः।

सुश्रुते नासारोगा एकत्रिंशदुक्ताः, अत्रापि पीनसमारभ्य प्रतिश्यायपर्यन्तेन पञ्चदशोक्ताः, शेषसंख्यापूरणाय अपरान् षोडशनासारोगानाह—

अर्बुदं सप्तधा शोथाश्चत्वारोऽर्शश्चतुर्विधम्।
चतुर्विधं रक्तपित्तमुक्तं घ्राणेऽपि तद्विदुः॥ २८॥

( सु० उ० अ० २४ )

इति श्रीमाधवकरविरचिते माधवनिदाने नासारोगनिदानं समाप्तम्।

इति । द्व्यङ्गुलवाहुल्यं विस्तारेण, अन्तः स्वाङ्गुष्ठोदरसम्मितम्, द्व्यङ्गुलं सर्वतः सार्धमायामेन । अन्ये द्व्यङ्गुलवाहुल्यमिति यदुक्तं तत्र द्व्यङ्गुलमानानियमं स्वाङ्गुष्ठोदरसम्मितमित्यनेनाहुः । अयमर्थः,—स्वेनाङ्गुष्ठोदरेण सम्मितं द्व्यङ्गुलवहुलम्, द्व्यङ्गुलं सर्वतः सार्धमिति च आयाम-विस्ताराभ्यां बोद्धव्यमिति । ननु, यद्यर्धतृतीयाङ्गुलायामं नेत्रं तर्हि "द्व्यङ्गुलायतं च नयनम्"(सु.सू.स्था.अ.३५)-इत्यातुरोपक्रमणीयोक्तं विरुध्यते ? नैवम्, वर्त्ममण्डलं गृहीत्वा गणनयाऽर्धतृतीयाङ्गुलं, तद्विरहात् द्व्यङ्गुलायतमिति न विरोधः । नयनरोगहेतुमाह—

उष्णाभितप्तस्य जले प्रवेशाद् दूरेक्षणात् स्वप्नविपर्ययाच्च ।
स्वेदाद् रजो-धूम-निषेवणाच्च छर्देर्विघाताद् वमनातियोगात् ॥ १ ॥
द्रवात् तथाऽन्नान्निशि सेविताच्च विड्-मूत्र-वात-क्रम-निग्रहाच्च ।
प्रसक्त-संरोदन-कोप-शोकाच्छिरोऽभिघातादतिमद्यपानात् ॥ २ ॥
तथा ऋतूनां च विपर्ययेण क्लेशाभिघातादतिमैथुनाच्च[१] ।
बाष्पग्रहात् सूक्ष्मनिरीक्षणाच्च नेत्रे विकारान् जनयन्ति दोषाः॥३॥

( सु० उ० अ० १ )

म०—उष्णाभितप्तस्येत्यादि । उष्णेनातपादिना सन्तप्तदेहस्य जलावगाहनात्,—शीतावृतदेहस्योर्ध्वगतेनोष्मणा नयनतेजसोऽभिभवाच्चक्षूरोगोदयः । स्वेदाद्रजोधूमनिषेवणाच्चेति घर्म-रजो-धूमानां नयनसम्बन्धानां हेतुत्वम् । छर्देर्विघातात्=वान्तिवेगविघातात् । वमनातियोगादतिवान्तेः । विण्-मूत्र-वात-क्रम-निग्रहात्=विण्मूत्रवातानां क्रमेण शनैःशनैर्निग्रहात् वेगविधारणात् । प्रसक्तसंरोदन शोक कोपादिति, प्रसक्तं=निरन्तरं कृतसंरोदनादेरित्यर्थः । ऋतुविपर्ययेण=एकर्तुचर्याया अन्यर्तौ करणेन । क्लेशाभिघातात्=क्लेशः=कायादिदुःखम् तेनाभिसम्बन्धात् । बाष्पनिग्रहात्=अश्रुवेगधारणात् । यदुक्तम्-"आनन्दजं वाऽप्यथ शोकजं वा नेत्रोदकं प्राप्तममुञ्चतो हि । शिरोगुरुत्वं नयनामयाश्च भवन्ति तीव्राः सह पीनसेन" इति । नयनरोगसम्प्राप्तिश्च सुश्रुते पठ्यते,-"सिरानुसारिभिर्दोषैर्विगुणैरूर्ध्वमाश्रितैः । जायन्ते नेत्रभागेषु रोगाः परमदारुणाः" (सु. उ. त. अ. १ ) इति ॥ १—३ ॥

---

१ अत्र "गुल्मारनालाम्बुकुलत्थमाषात्" इति पाठान्तरम् । २ "अतिशीघ्रयानात्" इति पाठान्तरम् ।

भा० टी०—निम्न लिखित कारणों से दोष प्रबल [illegible] नेत्र में रोग पैदा [illegible] है। कारण—किसी कारण से-धूप या आग अथवा परिश्रम से [illegible] विश्राम किये एकाएकी ठंडे पानी में स्नान करना, बहुत दूर की चीजों को देखने की कोशिश करना, दिन में सोना, रात में जागना, आग की लपट लग जाना, [illegible] में धूल घुस जाना, और धूँआ लगना, [illegible] अधिक [illegible], रात में [illegible] [ तरल ] पदार्थ अधिक सेवन करना, [illegible] पाखाना, पेशाब, [illegible] रोकना, हर वक्त रोना, क्रोध में भरे रहना, रंज करना, शिर में चोट लगना, अधिक मद्य पीना, जो मौसिम हो उसके अनुसार आहार विहार न करना, [illegible] काम क्रोध आदि। अधिक मैथुन करना, आँसू रोकना, बहुत बारीक चीजों को देखने की कोशिश करना, खटाई, काँजी, उड़द अधिक खाना, इन कारणों से दोष कुपित होकर नेत्र में लगी हुई शिराओं के द्वारा जाकर नेत्र में रोग पैदा कर देते हैं ॥ १-३ ॥

अथाभिष्यन्दरोगस्य प्रकाराः ।

( Ophthalmia ) आपर्थेलमिया

सामान्यपूर्वकत्वात् विशेषस्य, तथा सर्वनयनरोगानुगत्वाच्च, आदौ सर्वनयनगतमभिष्यन्दमाह—

**वातात् पित्तात् कफाद् रक्तादभिष्यन्दश्चतुर्विधः ।**
**प्रायेण जायते घोरः सर्वनेत्रामयाकरः ॥ ४ ॥**

म०—वातादित्यादि। घोर इति दुःखसहवेदनः । सर्वनेत्रामयाकर इति सर्वेषां नेत्ररोगाणामधिमन्थादीनामाकरः=उत्पत्तिहेतुत्वादाकरः स्थानम् । अत एवाह सुश्रुतः—"प्रायेण सर्वे नयनामयास्ते भवन्त्यभिष्यन्दनिमित्तमूलाः"—( सु. उ. त. अ १ )—इति ॥ ४ ॥

भा० टी०—समस्त नेत्र में ४ प्रकार के अभिष्यन्द रोग होते हैं जो कि बहुत [illegible] तकलीफ देते हैं और बड़े ही भयङ्कर होते हैं। इसके बिगड़ जाने से नेत्र में दूसरे रोग पैदा हो जाते हैं। १ वातज, २ पित्तज, ३ कफज, ४ रक्तज, ये ४ प्रकार के अभिष्यन्द होते हैं। हिन्दी में इसे आँख आना या आँख उठना कहते हैं ॥ ४ ॥

अथ वाताभिष्यन्दस्य लक्षणम् ।

वाताभिष्यन्दरूपमाह—

**निस्तोदन-स्तम्भन-रोमहर्ष-संघर्ष-पारुष्य-शिरोऽभितापाः ।**
**विशुष्कभावः शिशिराश्रुता च वाताभिपन्ने नयने भवन्ति ॥ ५ ॥**

( [illegible] )

म०—निस्तोदनेत्यादि । निस्तोदनं=सूचीव्यधनवद् व्यथा, स्तम्भनं= जडिमा, संघर्षः=करकरिका, पारुष्यं=रूक्षता, शिरोऽभितापः=शिरोव्यथा । विशुष्कभावो=दूषिकारहितत्वं, न त्वास्रावरहितत्वं, शिशिराश्रुतेस्तयुक्तेः ॥ ५ ॥

भा० टी०—वातज अभिष्यन्द में ये लक्षण होते हैं–आँख में कोंच होना, आँख जकड़ी रहना, वरौनी का खड़ा रहना,आँख में भीतर ऐसी गड़न हो जैसे आँख में बालू पड़ गया हो [ किरकिराना ] आँख में रूखापन होना, शिर में पीड़ा होना, कीचड़ न बहना, आँसू ठंडा निकलना ॥ ५ ॥

### अथ पैत्तिकाभिष्यन्दस्य लक्षणम् ।

पैत्तिकलक्षणमाह—

**दाहप्रपाकौ शिशिराभिनन्दा धूमायनं वाष्पसमुच्छ्रयश्च ।**
**उष्णाश्रुता पीतकनेत्रता च पित्ताभिपन्ने नयने भवन्ति ॥ ६ ॥**

( सु० उ० अ० ६ )

म०—दाहप्रपाकावित्यादि । प्रपाकः=प्रकृष्टपाकः । शिशिराभिनन्दा= शीतेच्छा । धूमायनं=धूमस्योद्गमनम् । वाष्पसमुच्छ्रयो=वाष्पबाहुल्यम् ॥ ६ ॥

भा० टी०—आँख में जलन होना, पकना, ठंडक अच्छा मालूम होना, धुँवाना, आँसू बहना, आँसू गर्म निकलना, आँख पीली हो जाना, ये लक्षण पित्तज अभिष्यन्द में होते हैं ॥ ६ ॥

### अथ श्लैष्मिकाभिष्यन्दस्य लक्षणम् ।

कफजालङ्गमाह—

**उष्णाभिनन्दा गुरुताऽक्षिशोथः कण्डूपदेहावतिशीतता च ।**
**स्रावो मुहुः पिच्छिल एव चापि कफाभिपन्ने नयने भवन्ति ॥७ ॥**

( सु० उ० अ० ६ )

म०—उष्णाभिनन्देत्यादि । उपदेहः=पिच्चटबाहुल्यम् । शीतता नेत्रस्य । पिच्छिल इति स्रावविशेषणम् । कफाभिपन्ने=कफयुक्ते । नयने=चक्षुषि । भवन्ति=जायन्ते ॥ ७ ॥

भा० टी०—गर्मी अच्छी मालूम होना, भारीपन, सूजन होना, [illegible] होना, [illegible] चलाहट मालूम होना, कीचड़ बहुत निकलना, आँख में ठंडक मालूम होना, [illegible] लसदार आँसू बहना यह सब लक्षण कफज अभिष्यन्द में होते हैं ॥ ७ ॥

## अथ रक्तजाभिष्यन्दस्य लक्षणम्।

रक्ताभिष्यन्दलक्षणमाह—

ताम्राश्रुता लोहितनेत्रता च नाड्यः समन्तादतिलोहिताश्च।
पित्तस्य लिङ्गानि च यानि तानि रक्ताभिपन्ने नयने भवन्ति ॥८॥

( सु० उ० अ० ६ )

म०—ताम्राश्रुतेत्यादि। पित्तस्य लिङ्गानीति पित्ताभिष्यन्दलिङ्गानि ॥ ८ ॥

भा० टी०—आँसू लाल, आँख लाल, और चारों तरफ [illegible] में लाल नसों का उमड़ आना, ये लक्षण, तथा पित्तज अभिष्यन्द के लक्षण रक्तजाभिष्यन्द में होते हैं ॥ ८ ॥

## अथाधिमन्थस्य लक्षणम्।

अधिमन्थानामभिष्यन्दजत्वमाह—

वृद्धैरेतैरभिष्यन्दैर्नराणामक्रियावताम्।
तावन्तस्त्वधिमन्थाः स्युर्नयने तीव्रवेदनाः ॥ ९ ॥

( [illegible] ९ )

म०—वृद्धैरित्यादि। तावन्त इति अभिष्यन्दैर्वातादिभि[illegible]रोऽधिमन्थाः प्रत्येतव्याः। तीव्रवेदना इति सामान्यलक्षणम्। [illegible]व्यथामात्रवाची, तेन वातिकाभिष्यन्दाद् वातिक एवाधिमन्थो[illegible]दादिसकलवेदनः, एवं पित्तज-कफज-रक्तजाधिमन्थाः [illegible] ॥ ९ ॥

भा० टी०—अभिष्यन्द की ठीक चिकित्सा न होने से [illegible] अधिमन्थ [illegible] कर देते हैं जिससे आँख में बहुत पीड़ा होती है। अधिमन्थ भी वात–पित्त–कफ–रक्त से चार प्रकार का होता है ॥ ९ ॥

अथास्य लक्षणान्तरम् ।

अस्यापरं सामान्यलक्षणमाह—

**उत्पाट्यत इवात्यर्थं नेत्रं निर्मथ्यते तथा ।**
**शिरसोऽर्धं च तं विद्यादधिमन्थं स्वलक्षणैः ॥ १० ॥**

( सु० नि० अ० ६ )

म०—उत्पाट्यत इत्यादि । शिरसोऽर्धमित्यत्र पूर्वक्रिये सम्बध्येते, तेन शिरसोऽर्धमुत्पाट्यते तथा निर्मथ्यते चेत्यर्थः । शिरसोऽर्धे च वेदना व्याधिप्रभावात् । स्वलक्षणैरिति यथोक्तवाताद्यभिष्यन्दलक्षणैः । स चाधिमन्थस्तदात्मकः॥१०॥

भा० टी०—अधिमन्थ में आँख और आधे शिर में ऐसी पीड़ा होती है जैसे कोई आँख और शिर उखाड़े लेता है और मथता है । तथा जिस दोषका अभिष्यन्द होता है उसी दोष से अधिमन्थ होता है ॥ १० ॥

अथात्र दोषभेदेन कालावधिः ।

यावता कालेन मिथ्याचाराद् दृष्टिं हन्ति तमाह—

**हन्याद् दृष्टिं श्लैष्मिकः सप्तरात्रादधीमन्थो रक्तजः पञ्चरात्रात् ।**
**आषड्रात्राद् वातिको वै निहन्यात् मिथ्याचारात् पैत्तिकः सद्य एव११**

( सु० उ० अ० ६ )

म०—हन्यादित्यादि । सद्य एवेति श्लेष्माणि सप्तरात्रस्योक्तत्वात् सद्यः—शब्देनात्र त्रिरात्रमुक्तम्, वैद्यके हि सद्यःशब्दस्य त्रिरात्र-सप्तरात्र-वाचित्वेन दृष्टत्वात् । कालावधिरत्र व्याधिस्वभावात् ॥ ११ ॥

भा० टी०—अधिमन्थ रोग में ठीक दवा और पथ्य न होने से श्लैष्मिक सात दिन में, रक्तज पाँच दिन में, वातिक छ दिन में और पैत्तिक तीन दिन में नेत्र को नष्ट कर देता है ॥ ११ ॥

अथ सामनेत्ररोगस्य लक्षणम् ।

लङ्घनप्रलेपादिविधानार्थम्, अञ्जनादिनिषेधार्थं च, नेत्ररोगस्य सामत्व-लक्षणमाह—

**उदीर्णवेदनं नेत्रं राग-शोथ-समन्वितम् ।**
**घर्ष-निस्तोद-शूला-ऽश्रुयुक्तमामान्वितं विदुः ॥ १२ ॥**

( सु० उ० अ० ६ )

म०—उदीर्णवेदनमित्यादि । उदीर्णवेदनमुद्गतवेदनम् । [illegible]करिका । लङ्घनादिविधानार्थमञ्जनादिनिषेधार्थं च तन्त्रान्तरम्,—"[illegible] [illegible]स्तिक्तान्नं धूमो दिनचतुष्टयम् । लङ्घनं चाक्षिरोगाणामामानां पाचनानि [illegible] ॥ अञ्जनं सर्पिषः पानं कषायं गुरुभोजनम् । नेत्ररोगेषु सामेषु स्नानं चापि विवर्जयेत्"—इति ॥ १२ ॥

भा० टी०—नेत्र में पीड़ा बहुत होय, लाली और सूजन हो, [illegible] मालूम हो, कोंच-शूल हो, और आँसू निकले तो समझना चाहिए कि आँख कच्ची है ॥ १२ ॥

अथ निरामनेत्ररोगस्य लक्षणम् ।

निरामलक्षणमाह—

**मन्दवेदनता कण्डूः संरम्भाश्रुप्रशान्तता ।**
**प्रशस्तवर्णता चाक्ष्णोः संपक्वदोषमादिशेत् ॥ १३ ॥**

( सु० उ० अ० ६ )

म०—मन्देत्यादि । संरम्भाश्रुप्रशान्ततेति संरम्भः=शोथः तस्य, अश्रुणो=नेत्रजलस्य च प्रशमः ॥ १३ ॥

भा० टी०—पीड़ा कम हो, खुजलाहट हो, सूजन कम हो जाय, आँसू न बहे, आँख का रंग साफ हो जाय, तो समझना चाहिए कि दोष पक गये हैं ॥ १३ ॥

अथ सशोथाक्षिपाकस्य लक्षणम् ।

सशोथपाकलिङ्गमाह—

**कण्डूपदेहाश्रुयुतः पक्वोदुम्बरसंनिभः ।**
**संरम्भी पच्यते यस्तु नेत्रपाकः स शोथजः ।**
**शोथहीनानि लिङ्गानि नेत्रपाके त्वशोथजे ॥ १४ ॥**

( सु० उ० अ० ६ )

म०—कण्डूपदेहाश्रुयुत इत्यादि । पक्वोदुम्बरसंनिभ इति लोहितः । संरम्भीति शोथवान्; कार्तिकस्तु महारम्भवानित्याह; शोथस्त्वनुक्तोऽपि लभ्यते, तत्प्रधानत्वात् पाकस्य, उत्तरत्र शोथहीनानीत्यस्याभिधानाच्च । अयं [illegible], एवमशोथपाकश्च ॥ १४ ॥

भा० टी०—खुजली, कीचड़, आँसू आवे, पके हुए गूलर के समान आँख का रंग लाल हो, सूजन हो और पके तो सशोथ नेत्र पाक है और यदि शोथ न हो, किन्तु और सब लक्षण हों तो अशोथ नेत्र पाक है ॥ १४ ॥

### अथ हताधिमन्थस्य लक्षणम् ।

हताधिमन्थलक्षणमाह—

**उपेक्षणादक्षि यदाऽधिमन्थो वातात्मकः सादयति प्रसह्य ।**
**रुजाभिरुग्राभिरसाध्य एष हताधिमन्थः खलु नाम रोगः ॥ १५ ॥**

( सु० उ० अ० ६ )

म०—उपेक्षणादित्यादि । अयं रोगो विदेहे दृष्ट्युत्क्षेपलक्षण एकः, अन्यः सकलनयनशोपलक्षणः पठ्यते । तद्यथा,—"अन्तर्गतः सिराणां तु यदा तिष्ठति मारुतः । स तदा नयनं प्राप्य शीघ्रं दृष्टिं निरस्यति ॥ तस्यां निरस्यमानाय निर्मन्थन्निव मारुतः । नयनं निर्वमत्याशु शूलतोदाधिमन्थनैः"—इति । इदं दृष्टिनिर्गमलक्षणम् । अत एवैतस्मिन्नर्थे सुश्रुते केचित् पठन्ति, "अन्तः सिराणां श्वसनः स्थितो दृष्टिं प्रतिक्षिपन् । हताधिमन्थं जनयेत्तमसाध्यं विदुर्बुधाः"—इति । विदेह एव सकलाक्षिशोपः पठ्यते,—"अथवा शोषयेदक्षि क्षीण-तेजो-बलादयम्[1] । तत्पक्वमिव संशुष्कमवसीदति लोचनम् ॥ हताधिमन्थं तं विद्यादसाध्यं वातकोपतः"-इति । अतः शोषार्थे उपेक्षणादक्षीत्यादि श्लोकोऽवगन्तव्यः । सादयतीति शोषयाति रुजाभिरुग्राभिरितिरुजाभिस्तोदादिभिर्महतीभिरुपलक्षितः ॥ १५ ॥

भा० टी०—वातज अभिष्यन्द से उत्पन्न अधिमन्थ में यदि उपचार ठीक न किया जाय तो आँख सूख जाती है, बड़ी पीड़ा होती है और कुछ काल में नष्ट हो जाती है। इसका नाम हताधिमन्थ रोग है ॥ १५ ॥

### अथ वातपर्यायस्य लक्षणम् ।

वातपर्यायलिङ्गमाह—

**वारंवारं च पर्येति भ्रुवौ नेत्रे च मारुतः ।**
**रुजश्च विविधास्तीव्राः स ज्ञेयो वातपर्ययः ॥ १६ ॥**

( सु० उ० अ० ६ )

---

१ अयं-वातः ।

म०—वारंवारमित्यादि । पर्यायेण=क्रमेण कदाचित् भ्रुवि, कदाचिल्लोचने वायुस्तीव्रां रुजां करोतीति वातपर्यायार्थः ॥ १६ ॥

भा० टी०—वायु कुपित होकर कभी भौं में और कभी आंख में बदल बदल पीड़ा करता है। इसे वातपर्याय कहते हैं ॥ १६ ॥

### अथ शुष्काक्षिपाकस्य लक्षणम् ।

शुष्काक्षिपाकमाह—

**यत् कूणितं दारुण-रूक्ष-वर्त्म संदह्यते चाविलदर्शनं यत् ।**
**सुदारुणं यत् प्रतिबोधने च शुष्काक्षिपाकोपहतं तदक्षि ॥ १७ ॥**

( सु० उ० अ० ६ )

म०—यत्कूणितमित्यादि । कूणितमिति निमीलितम् । दारुणं=कठिनं रूक्षं च वातशोषात् वर्त्म यस्य तद्दारुणरूक्षवर्त्म । संदह्यते=सदाहं भवति । आविलदर्शनं=आकुलदर्शनम् । सुदारुणं=कृच्छ्रोन्मीलनम् । प्रतिबोधने=उन्मेषणे । सुदारुणं=सुकठिनमिति गदाधरः । शुष्काक्षिपाकोपहतं तदक्षीति शुष्काक्षिपाकेन उपहतमक्षीत्यर्थः । अयं रोगः सरक्तवातजन्यः । यथाह करालः "कूणितं [illegible] कृच्छ्रोन्मीलाविलेक्षणम् । सदाहं सास्रवाताच्छुष्कपाकाभिधं वदेत्" इति ॥ १७ ॥

भा० टी०—वात रक्त के कोप से आंख बन्द रहे, पलक कड़े और रूखे हों और जलन हो, सब चीजें मैली देख पड़ें, आंख खोलने में कष्ट हो तो इसे शुष्काक्षिपाक कहते हैं ॥ १७ ॥

### अथान्यतोवातस्य लक्षणम् ।

अन्यतोवातमाह—

**यस्यावटूकर्ण-शिरो-हनु-स्थो मन्यागतो वाऽप्यनिलोऽन्यतो वा ।**
**कुर्याद् रुजं वै भ्रुवि लोचने च तमन्यतोवातमुदाहरन्ति ॥ १८ ॥**

( सु० उ० अ० ६ )

अस्येत्यादि । अवटुर्घाटा । मन्ये=ग्रीवापार्श्वशिरे [illegible] इत्यादेशादितरत्र पृष्ठे-सार्वविभक्तिकस्तसिः । अन्यत्र [illegible]

1 [illegible] छन्दोऽनुरोधाद् दीर्घः ।

भ्रुवि च रुजां करोतीत्यन्यतोवातः । विदेहेऽप्युक्तम्,–"मन्ययोरन्तरे वायुरुत्थितः पृष्ठतोऽपि वा । करोति भेदं निस्तोदं शङ्खे चाक्ष्णोर्भ्रुवोस्तथा । तमाहुरन्यतोवातं रोगं दृष्टिविदो जनाः"–इति ॥ १८ ॥

भा० टी०—जिसके घाटी, कान, शिर, ठोडी, मन्या या पीठ में वायु स्थित होकर भौं और नेत्रों में पीड़ा करे, उसे अन्यतोवात कहते हैं। अर्थात् वायु रहे कहीं और पीड़ा कहीं दूसरी जगह करे ॥ १८ ॥

### अथाम्लाध्युषितस्य लक्षणम् ।

अम्लाध्युषितमाह—

श्यावं लोहितपर्यन्तं सर्वं चाक्षि प्रपच्यते ।
सदाहशोथं सास्रावमम्लाध्युषितमम्लतः ॥ १९ ॥

( सु० उ० अ० ६ )

म०–श्यावमित्यादि । श्यावमीषन्नीलम् । अम्लत इत्यम्लभोजनात् अम्लाध्युषितमिति पित्ताध्युषितं कारणे कार्योपचारात् ॥ १९ ॥

भा० टी०—आँख बीच में स्याह और किनारे लाल हो, पक जाय, जलन, सूजन, स्राव हो उसे अम्लाध्युषित कहते हैं। यह रोग अधिक खटाई खाने से होता है ॥१९॥

### अथ सिरोत्पातस्य लक्षणम् ।

( Pannus ) पैनस

सिरोत्पातमाह—

अवेदना वाऽपि सवेदना वा यस्याक्षिराज्यो हि भवन्ति ताम्राः ।
मुहुर्विरज्यन्ति च याः स तादृग् व्याधिः सिरोत्पात इति प्रदिष्टः २०

( सु० उ० अ० ६ )

म०–अवेदना वापीत्यादि । अक्षिराज्य इति अक्षिसिराः । विरज्यन्तीति विरक्ता भवन्ति, विशेषरक्ता भवन्तीत्यर्थः । रक्तजोऽयम् ॥ २० ॥

भा० टी०—जिसकी आँखों में नसें लाल २ होकर उभड़ आयें, और बाद अधिक लाल हो जाँय, पीड़ा हो, या न हो। उसे सिरोत्पात कहते हैं ॥ २० ॥

अथ सिराप्रहर्षस्य लक्षणम्।

सिराप्रहर्षमाह—

**मोहात् सिरोत्पात उपेक्षितस्तु जायेत रोगस्तु सिराप्रहर्षः।**
**ताम्राभमस्रं स्रवति प्रगाढं तथा न शक्नोत्यभिवीक्षितुं च ॥२१॥**

(सु० उ० अ० ६)

**म०—मोहादित्यादि** इति सर्वगताः ॥ २१ ॥

भा० टी०—यदि अज्ञानवश सिरोत्पात की ठीक चिकित्सा नहीं की जाती तो सिराप्रहर्ष रोग पैदा हो जाता है, जिससे कि आँख से लाल पानी बहता और आँख से नहीं सूझता ॥ २१ ॥

अथ सव्रणशुक्लस्य लक्षणम्।

(Corneal Ulcer) कार्नियल अल्सर

सन्धि-वर्त्म-शुक्ल-कृष्ण-दृष्टि-गतेषु मध्ये प्राधान्याद्दृष्टिगतेषु वक्तव्येषु स्वल्पवक्तव्यतया दृष्टिमण्डलमत्यासत्त्या कृष्णगतविकाराभिधानम्। तत्र सव्रण-शुक्ल-लक्षणमाह—

**निमग्नरूपं तु भवेद् हि कृष्णे सूच्येव विद्धं प्रतिभाति यद् वै।**
**स्रावं स्रवेदुष्णमतीव यच्च तत् सव्रणं शुक्लमुदाहरन्ति ॥ २२ ॥**

(सु० उ० अ० ५)

**म०—निमग्नरूपमित्यादि।** रूपग्रहणमा[1]भासनिषेधार्थं, तेन निमग्नरूपमेव। किन्तु सूच्येवेत्युपमानं वर्तुलत्वख्यापनाय सूचीव्यधनवद्वेदनादर्शनाय च। स्रावं स्रवेदुष्णमिति स्रवेदुष्णमित्येतावतैव लब्धे स्रावे पुनः स्रावग्रहणं निरन्तरस्रावं लक्षयति। अति-शब्दस्तूष्णेन संबध्यत इति कार्तिकः। उष्णस्रावता रक्तान्वयात्। सुव्रणमेतत् चात्यन्तरुक् बोद्धव्या, सव्रणत्वात्। यदाह अव्रणलक्षणे सुश्रुतः—"नातिरुगश्रुयुक्तम्" (सु. उ. त. अ. ५.)—इति। तत् सव्रणं सक्षतं, क्षतं तु सर्वत्र शुक्ले नयने तु सुकुमारे विशेषेणोदाहरन्ति विदेहप्रभृतयः। विदेहेऽप्युक्तम्—"रक्तनालीजीनिभं कृष्णे छिन्नाभं यच्च लक्ष्यते। सूक्ष्मसूचेव [illegible] सव्रणम्"—इति ॥ २२॥

[1] आभासनिषेधार्थं निमग्नाभासनिषेधार्थमित्यर्थः।

भा० टी०—शुक्ल दो प्रकार का होता है एक सव्रण और दूसरा अव्रण। सव्रण शुक्ल काले भाग में होता है गहरा होता है, ऐसा मालूम होता है कि सूई से वेधा हो, पीड़ा होती है, गर्म स्राव बहुत होता है ॥ २२ ॥

### अथ सव्रणशुक्लस्य साध्यासाध्यत्वम् ।

अस्यासाध्यतया निर्दिष्टस्यावस्थावशेन पाक्षिकीं सिद्धिमाह—

**दृष्टेः समीपे न भवेत्तु यच्च न चावगाढं न च संस्रवेद्धि ।**
**अवेदनं वा न च युग्मशुक्लं तत्सिद्धिमायाति कदाचिदेव ॥२३॥**

( सु० उ० अ० ५ )

म०—दृष्टेः समीप इत्यादि । क्षतं हि स्वभावत एव दृश्योपघातकरम्, अतो दृष्टिसमीपे न साध्यम्, उक्तविपर्ययात्तु दृष्टिसमीपेऽपि सुखसाध्यमव्रणम् । न चावगाढमेकत्वग्गतम् । विपर्ययात्त्ववगाढमप्यव्रणं सिध्यति । अत एवाव्रणे वक्ष्यति—गम्भीरजालामिति । न च संस्रवेदिति न चात्यर्थं स्रवेत्, संशब्दस्यातिशयार्थत्वात् । अवेदनं=मन्दवेदनं, रक्तस्य कफानुगमात्; वातानुगमादतिवेदनं तु न सिध्यति । युग्मं च क्षतशुक्लं कदाऽपि न सिध्यति ॥ २३ ॥

भा० टी०—जो शुक्ल दृष्टि के समीप न हो, एक परदा में हो, वहे नहीं, पीड़ा कम हो, एक साथ दो शुक्ल न हो वह शायद अच्छा हो जाता है, किन्तु यदि इससे उल्टा लक्षण होता है तो असाध्य होता है ॥ २३ ॥

### अथाव्रणशुक्लस्य लक्षणम् ।

इदानीमव्रणशुक्ललक्षणमाह—

**स्यन्दात्मकं कृष्णगतं सचोषं शङ्खेन्दुकुन्दप्रतिमावभासम् ।**
**वैहायसाभ्रप्रतनुप्रकाशमथाव्रणं साध्यतमं वदन्ति ॥ २४ ॥**

( सु० उ० अ० ५ )

म०—स्यन्दात्मकमित्यादि । स्यन्दात्मकमभिष्यन्दनिमित्तकं, सर्वेषामक्षिरोगाणामभिष्यन्दनिमित्तत्वेऽपि चास्य नियमप्रतिपादनार्थमभिधानम् । वैहायसाभ्रप्रतनुप्रकाशमिति विहायसि स्थितं वैहायसं, **"तस्य निवासः"** इत्यण्

भा० टी०—दो तीन परदे में हो, मोटा हो, और पुराना हो तो अव्रणशुक्ल कृच्छ्र साध्य होता है। मांस के गल जाने से जो शुक्ल गहिरा मालूम हो, या मांस से घिरा हो, घटता बढ़ता हो, चारो तरफ शिरा से घिर जाने से थोड़ा मालूम हो, जिसके द्वारा सूझ न पड़े, दो परदों तक उसकी जड़ हो, किनारे २ लाल हो और पुराना हो तो ऐसा अव्रण शुक्ल असाध्य होता है॥ २५॥

### अथास्य प्रकारान्तरेणासाध्यलक्षणानि ।

न केवलमेवंविधं परमसाध्यं किन्त्वन्यादृशमपीत्यत आह—

**उष्णाश्रुपातः पिडका च नेत्रे यस्मिन् भवेत् मुद्गनिभं च शुक्लम्। तदप्यसाध्यं प्रवदन्ति केचिदन्यच्च यत् तित्तिरिपक्षतुल्यम् ॥ २६ ॥**

( सु० उ० अ० ५ )

म०—उष्णाश्रुपात इत्यादि। पिडका च नेत्र इत्यन्तं द्वित्वग्गतशुक्ले तथाऽऽह विदेहः—"एकत्वग्गतमेवं स्यात् द्वित्वग्गतमिदं भवेत्। चोषोष्णस्राव दाहास्तु तृष्णा च पिडकोद्गमः"—इति। मुद्गनिभं च शुक्लमित्याकारेण, एतद् त्वग्गतम्। तथा च विदेहः,—"व्यक्तमुद्गफलाकारं शुक्लं द्वित्वग्गतं भवेत्" इति। द्वि-त्रि-त्वग्गतस्याव्रणस्य कृच्छ्रत्वे एतत् पिडकोद्गममुद्गफलाकारत्वेनैवासाध्यत्वं बोध्यम्। अन्ये पुनः सव्रणशुक्लस्य विच्छिन्नमध्यमित्यादिकमसाध्यलक्षणं वर्णयन्ति। अत्र पक्षे द्वित्वग्गतमिति केवलमेवासाध्यलक्षणम्, एतन्न चावगाढमित्यस्य विपर्ययः। लोहितमन्ततः। उष्णाश्रुपातः पिडका चेत्यादि द्वित्वग्गतशुक्ललक्षणमिति। किन्त्वियमत्रासङ्गतिः—विच्छिन्नमध्यं=सच्छिद्रमध्यं, यद्यदि सच्छिद्रत्वं सव्रणशुक्लस्याभ्युपगम्यते, तदा निमग्नरूपमित्यनेनैव सिद्धत्वात् पुनरुक्तं स्यात्, किंच सव्रणशुक्लानन्तरमस्य पाठो विफलः स्यात्। अन्ये तु सव्रणाव्रणशुक्लविषयं सामान्यमसाध्यलक्षणमेतदाहुः; यथायोग्यतया क्वचिल्लिङ्गान्तरयोगेन च व्यवस्थेति च वर्णयन्ति। असाध्यत्वं विदेहादन्येषां मतेनाह—केचिदित्यादि। तित्तिरिपक्षतुल्यामिति शबलम्, एतच्चानिषेधादनुमतम् ॥ २६ ॥

भा० टी०—जिस अव्रण शुक्ल में गर्म आँसू बहे, फुन्सियाँ पैदा हो जाँय, शुक्ल मूँग के समान हो, तो वह भी असाध्य होता है। किसी २ आचार्य का मत है कि शुक्ल से यदि आँख तीतर के पंख की तरह चितकाबर मालूम हो तो वह भी असाध्य होता है॥ २६॥

अथाक्षिपाकात्ययस्य लक्षणम् ।

इदानीमक्षिपाकात्ययमाह—

**श्वेतः समाक्रामति सर्वतो हि दोषेण यस्यासितमण्डलं च ।**
**तमक्षिपाकात्ययमक्षिरोगं सर्वात्मकं वर्जयितव्यमाहुः ॥ २७ ॥**

( सु० उ० अ० ४ )

म०—श्वेत इत्यादि । दोषेण यः कृतः श्वेतः स समाक्रामति । सर्वात्मकं= त्रिदोषजम्, अन्ये तु स्यन्दात्मकमिति पठित्वा अभिष्यन्दात्मकमाहुः । तत्र सर्वेषामभिष्यन्दमूलत्वाद्विशेषार्थमभिधानम् ॥ २७ ॥

भा० टी०—दोष से आँख के कृष्ण भाग पर सफेदी छा जाती है, उसे अक्षिपाकात्यय रोग कहते हैं । यह त्रिदोष से होता है और असाध्य होता है ॥ २७ ॥

अथाजकाजातस्य लक्षणम् ।

अजकाजातमाह—

**अजापुरीषप्रतिमो रुजावान् सलोहितो लोहितपिच्छिलास्रः ।**
**विगृह्य कृष्णं प्रचयोऽभ्युपैति तच्चाजकाजातमिति व्यवस्येत् ॥२८॥**

( सु० उ० अ० ४ )

म०—अजापुरीषप्रतिम इत्यादि । अजापुरीषप्रतिमः=छागलपुरीषतुल्यः । सलोहित=ईषल्लोहितः । विगृह्य कृष्णमिति कृष्णभागं प्रभिद्य [illegible] । प्रचय इति प्रकृष्टश्चयः उद्गम इति यावत् । अजकाया मेदोजत्वं [illegible] गतत्वेन मेदसः प्रचयो बोद्धव्यः । तथा च विदेहः—[illegible] छागलीविट्सममभम् । सान्द्र-पिच्छिल-रक्ताभं [illegible] मा—[illegible] ॥ इति कृष्णजाः ॥ २८ ॥

भा० टी०—आँख के सम्पूर्ण काले मण्डल को बकरी के लेंडी की तरह उभरी हुई सफेदी छेक लेती है । वह कुछ लाल होती है, उसमें पीड़ा होती है और लाल [illegible] आँसू बहता है, उसको अजकाजात कहते हैं ॥ २८ ॥

अथाक्ष्णः प्रथमपटलस्थितदोषाणां लक्षणानि ।

कृष्णाश्रितत्वाद् दृष्टिमण्डलस्य दृष्टिजा उच्यन्ते । दृष्टिप्रमाणं तु सुश्रुतेन उक्तम्—"मसूरदलमात्रां तु पञ्चभूतप्रसादजाम्"[1] ( सु. उ. त. अ. ७ )–इति अत्र मसूरदलमात्रामिति मसूरार्धदलमात्रां, तथा च निमिः—"पञ्चभूतात्मि दृष्टिर्मसूरार्धदलोन्मितिः"–इति । ननु, एवं तर्हि विरुध्यते, यदाह स एव पुन नेत्रायामत्रिभागं च कृष्णमण्डलमुच्यते । कृष्णात् सप्तममिच्छन्ति दृष्टिं दृष्टिवि जनाः" ( सु. उ. त. अ. १)–इति, । अत्र कृष्णसप्तमभागत्वेन दृष्टेरुक्तत्वात उच्यते, कृष्णसप्तभागत्वेनापि मसूरार्धदलप्रमाणा दृष्टिरित्येक एवार्थः । न एवमातुरोपक्रमणीयोक्तं "द्व्यङ्गुलायतं नयनं, नयनत्रिभागपरिमाणा तारक नवमस्तारकांशो॰ दृष्टिमण्डलम्" ( सु. सू. स्था. अ. ३५ ) इति विरुद्ध्यते उच्यते. तत्र मण्डलाभिधानेन मण्डलसहिताया दृष्टेरुक्तिः, अत्र तु मण्डलरहिता इति मतभेदाद् वा न विरोधः, । तारकानवमांशो दृष्टिरिति शल्यमतम्, तारक सप्तमांशो दृष्टिरिति शालाक्यसिद्धान्तेन । ननु, एवं तर्हि "दृष्टिश्च रोमकूपा न वर्धन्ते" ( सु. शा. स्था. अ. ४ ) इति शारीरोक्तं विरुध्यते, यतः कृष्णस भागत्वेन दृष्टेरुक्तत्वात् कृष्णवृद्ध्या तद्वृद्धेः संभवात् । नैवम्, अङ्गान्तरेण वर्धत इत्यभिप्रायेणोक्तम् । "दृष्टिर्न वर्धते" इति, दृष्ट्यां च चत्वारि पटलानि[2] रसरक्ताश्रयं बाह्यं, द्वितीयं मांससंश्रयं, तृतीयं मेदः संश्रयं, चतुर्थं कालकास्थि स्थितम् । तथा च सुश्रुतः—"तेजोजलाश्रितं बाह्यं तेष्वन्यत् पिशिताश्रितम् । मे स्तृतीयं पटलमाश्रितं त्वस्थि चापरम् । पञ्चमांशसमं दृष्टेस्तेषां बाहुल्यमिष्यते (सु. उ. त. अ. १ )–इति । अत्र तेजःशब्देन रक्तं, जलशब्देन च र व्याख्यातः।तेषु पटलेषु बाह्यादिभेदेनाधिष्ठानविशेषप्रभावात् दोषाणां लिङ्गविशेषमा

**प्रथमे पटले दोषा यस्य दृष्ट्यां व्यवस्थिताः ।**
**अव्यक्तानि स रूपाणि कदाचिदथ पश्यति ॥ २१ ॥**

( सु० उ० अ० ७ )

**म०–प्रथमे पटल इत्यादि** । प्रथमे पटले=सर्वाभ्यन्तरे पटले कालकास्थि संश्रये; न तु बाह्ये, तत्र प्रथमं दोषलिङ्गानुपलब्धेः, यदि तु कुष्ठादिवद् बाह्यं प्रथ

१ पञ्चेति–पञ्चानां भूतानां पृथिव्यादीनां प्रसादजां स्वच्छांशजातामित्यर्थः ।

२ पटलानि नेत्रावरकानि–"पर्दा" इति भाषा ॥

यदूष्याभ्यन्तरे दोषानुप्रवेशः स्यात्तदा प्रागेव रोगस्तत्रोपलभ्येत, न चैवं दृश्यते। तथाच विदेहः—"दृष्टेरन्तरमाद्यं तु पटलं समभिद्रुताः-" इत्यारभ्य "एकैकमनुपद्यन्ते पर्यायात् पटलान्तरम्"—इति प्रथमे पटल इत्यादिग्रन्थात्। पूर्वं केचित् "सिराभि-रभिसंप्राप्य विगुणोऽभ्यन्तरे भृशम्" (सु. उ. त. अ. १)—इति श्लोकार्धम् संप्राप्तिरूपं पठन्ति सुश्रुते, तच्च 'सिरानुसारिभिर्दोषैः (सु. उ. त. अ. )' इत्यनेनैव गतार्थमित्यनार्षं टीकाकारैर्व्याख्यातम्। रूपाणीति रूपवन्ति द्रव्याणि। कदाचिदथ पश्यतीत्यनेनात्राधिष्ठानविशेषाद् दोषस्याल्पबलता उक्ता भवति। अव्यक्तरूपाण्यपि वक्ष्यमाणभ्रमरारुणवर्णादियुक्तानि वातेन, पित्तेनादित्य-खद्यो-तादि-पीत-नील-वर्णानि, कफेन सितवर्णानि, रक्तेन रक्तवर्णानि, सन्निपातेन चित्रवर्णानि, एवं द्वितीय-तृतीय-चतुर्थपटलेष्वपि व्याख्येयम् ॥ २९ ॥

भा० टी०—जिसके नेत्रों के भीतरी हड्डीवाले परदे में दोष होता है तो वह किसी समय दोष के कम हो जाने से चीजों को देखता है नहीं तो सब चीजों को साफ नहीं देखता ॥ २९ ॥

अथ द्वितीयपटलस्थदोषस्य लक्षणम्।

द्वितीयपटलगतस्य लिङ्गमाह—

दृष्टिर्भृशं विह्वलति द्वितीयं पटलं गते।
मक्षिका मशकांश्चापि जालकानि च पश्यति ॥ ३० ॥
मण्डलानि पताकांश्च मरीचीन् कुण्डलानि च।
परिप्लवाश्च विविधान् वर्षमभ्रं तमांसि च ॥ ३१ ॥
दूरस्थानि च रूपाणि मन्यते स समीपतः।
समीपस्थानि दूरे च दृष्टेर्गोचरविभ्रमात् ॥ ३२ ॥
यत्नवानपि चात्यर्थं सूचीपाशं न पश्यति।

(सु० उ० अ० ७)

म०—दृष्टिर्भृशं विह्वलतीत्यादि। विह्वलति=पुनः पुनरसम्यग्रूपं गृह्णाति, तथा अविद्यमानान् मक्षिकादीन् पश्यति; अथवा मक्षिकेत्यादिना विह्वलत्वमेव व्याक्रियते। जालकानि जालान्येव मरीचीनिति रश्मीन्। परिप्लवानिति मण्डु-

कादीनां परिसर्वतः प्लवान्=गतीः । विविधानिति ऊर्ध्वाधस्तिर्यग्गतश्लेष्मादिदोषवर्णेन नानाविधान्, अन्ये परिप्लवान् विविधानिति नानावर्णान् जलप्लवानित्याचक्षते । गोचरविभ्रमादिति विषयभ्रान्तेः । सूचीपाशं न पश्यतीति सतोऽपि सूक्ष्मस्यानुपलम्भः; सूचीपाशं=सूचीरन्ध्रं, पाशं वा गुणम् ॥ ३०-३२ ॥—

भा० टी०—दूसरे परदे में दोष होने से दृष्टि व्याकुल हो जाती है अर्थात् कोई भी चीज भलीभाँति नहीं देख पड़ती और जो चीज सामने मौजूद न हो उसे भी देखे-जैसे—मक्खी, मच्छर, जाला, मण्डल ( गोल ) झंडा, किरण, कुण्डल, कूदती हुई चीज, वर्षा, मेघ, अँधेरा । और आँख की रोशनी ऐसी बिगड़ जाती है कि दूर की चीजें पास में और पास की चीजें दूर में मालूम होती हैं। कितनी ही कोशिश करने पर भी मनुष्य सूई में डोरा नहीं डाल सकता । उसे सूई का छेद ही नहीं देख पड़ता ॥ ३०-३२ ॥

## अथ तृतीयपटलगतदोषस्य लक्षणम् ।

तृतीयपटलगतस्य लिङ्गमाह—

**ऊर्ध्वं पश्यति नाधस्तात् तृतीयं पटलं गते ॥ ३३ ॥**
**महान्त्यपि च रूपाणि छादितानीव चाम्बरैः ।**
**कर्ण-नासाऽक्षि-हीनानि विकृतानीव पश्यति ॥ ३४ ॥**
**यथादोषं च रज्येत दृष्टिर्दोषे बलीयसि ।**

( सु० उ० अ० ७ )

म०—ऊर्ध्वं पश्यतीत्यादि । ऊर्ध्वदर्शनाभिधानादधोदर्शनस्य निषेधसिद्धौ तदभिधानं स्वरूपानुवादार्थम् । ननु, पार्श्वयोरीषद्दर्शनार्थं किमित्येतन्न भवति ? उच्यते, ऊर्ध्वाधोगतत्वेनैव पार्श्वस्य परिग्रहादिति कार्त्तिकः । यदेतद्रूपं पश्यति तत् कीदृशमित्यत आह—महान्त्यपीत्यादि । छादितानीव चाम्बरैरिति आवृतानीव वस्त्रैः । अम्बरे इति पाठान्तरे आकाशे छादितानि केनापि । विकृतानीवेति छिन्नकर-पादादीनि । अत्र रोगप्राप्तिमाह—यथादोषं च रज्येत दृष्टिर्दोषे बलीयसीति, अस्यार्थः—यथायथं दोषवर्णैररुण-पीत-सितादिभिर्युज्यते दृष्टिः, रागश्चात्र वर्णमात्रवचनः । अत एव वक्ष्यति—"कफात् सितः शोणितजः सरक्त" इति । दोषे बलीयसीति रक्त-मांस-मेदः—सहाये बलवति दोषे, अन्यथा तु तृतीयेऽपि रागो न भवतीति व्यभिचारः सूच्यते इति गदाधरः । ननु, तृतीये कथं रागवर्णनं,

तस्य सन्निपातजत्वात, न तु प्रक्लिन्नवर्त्म, तस्य कफात्मकत्वात्; यदि तु प्रक्लिन्नवर्त्मैव कफोल्बणसन्निपातजं पिल्लत्वेनाभ्युपगम्यते, एतत् ख्यापनाय च तस्य कफजसर्वगणयोर्निवेशः कृत इति स्वीक्रियते, तदा सन्निपातजगणे पित्तनाक्लिन्नवर्त्म न परिगृहीतं स्यात् ततस्तदपरिग्रहे पट्सप्ततित्वोपसंहारो नेत्ररोगाणां न घटते, पञ्चसप्ततेरभिधानात्, पिल्लस्य प्रक्लिन्नवर्त्मस्वरूपत्वेनापृथक्त्वात् । ननु, एवं तर्हि कथं "विद्यात् प्रक्लिन्नवर्त्मेति तत् पिल्लं सन्निपातजम्"—इति समर्थयितव्यम् ? उच्यते, ( अस्यायमर्थः प्रत्येतव्यः—यदा तदेव प्रक्लिन्नवर्त्म श्लेष्मात्मकमेव सत् वातपित्ताभ्यां विशेषकाभ्यामुपनिरुध्यते तदा सन्निपातजं सत् अपरिक्लिन्नवर्त्मार्थान्तरमासादयत् पिल्लमित्यभिधीयते तथा चोभयोरप्यविरोधः, उभाभ्यामेवापरिक्लिन्नवर्त्मन एव पिल्लाख्यत्ववर्णनादिति । अयं च वाग्भटे कफोत्क्लिन्नाख्यतया निरुद्धः, ) किंच यदि प्रक्लिन्नवर्त्म पिल्लं तत् पृथक्त्वेन चाक्लिन्नवर्त्म अभविष्यत्, तदास्यौपद्रविके सुश्रुतो दोषात्मकत्वेन साध्यादिभेदेन चाभिधानमकारिष्यत्, न च कृतं तस्मादक्लिन्नवर्त्मनोऽवस्थान्तरमिति ॥ ८८ ॥

भा० टी०—जिसके पलक के बाहर सूजन हो जाती है और उसके आस पास क्लेद हो तो उसे प्रक्लिन्न वर्त्म कहते हैं ॥ ८८ ॥

## अथापरिक्लिन्नवर्त्मनो लक्षणम् ।

अपरिक्लिन्नवर्त्मनो लक्षणमाह—

> यस्य धौतान्यधौतानि सम्बध्यन्ते पुनः पुनः ।
> वर्त्मान्यपरिपक्वानि विद्यादक्लिन्नवर्त्म तत् ॥ ८९ ॥
>
> (सु० उ० अ० ३)

म०—यस्य धौतानीत्यादि । एतद् वाग्भटे पिल्लाख्यम् । सम्बध्यन्ते अन्योन्यं लग्नानि भवन्तीत्यर्थः । तदिदं संबद्धत्वं किं पूयसंपर्कादेव तथा च प्रक्लिन्नत्वमेव स्यात्तदर्थमाह—अपरिपक्वानीति । एतदेव पिल्लाख्यम् । अन्यत्र क्वचिच्च पिल्लाख्यमन्यथा पठितम्—"पित्तश्लेष्मप्रकोपेण वर्त्मान्तः परिपाटितं । ताम्रं निर्लोम तच्चापि विशिष्टं पिल्ललक्षणम्"—इति । एतदनादृतम्, टीकाकृद्भिरव्याख्यातत्वात् । वाग्भटेन कुकूणकादीनामष्टादशानां पिल्लाख्या कृता । वर्त्मा-

नीति वहुवचनं नेत्रद्वये वर्त्मचतुष्टयत्वेन संगच्छते, तेन नेत्रद्वयगत एवायं व्याधि-रिति कार्तिकः ॥ ८९ ॥

भा० टी०—जिसके नेत्र के पलक विना पके और विना मवाद के आपस में एक दूसरे से चिपक जाँय, चाहे उन्हें धोया जाय या न धोया जाय, इस रोग को प्रक्लिन्न वर्त्म कहते हैं इसे ही पिल्ल भी कहते हैं ॥ ८९ ॥

## अथ वातहतवर्त्मनो लक्षणम् ।

( Ptosis ) टासिस

वातहतवर्त्मलक्षणमाह—

विमुक्तसन्धि निश्चेष्टं वर्त्म यस्य न मील्यते ।
एतद् वातहतं वर्त्म जानीयादक्षिचिन्तकः ॥ ९० ॥

( सु० उ० अ० ३ )

म०-विमुक्तसन्धीत्यादि । विमुक्तो=विश्लिष्टो वर्त्मशुक्लगतः सन्धिर्यस्मात् तत्तथा=स्थानच्युतसन्धि । निश्चेष्टं=निमेषोन्मेषरहितम् । सन्धिविश्लेषादेव तदाश्रयाणां निमेषोन्मेषकारिणीनां सिराणामपि विश्लेषेण निमेषोन्मेषरहितत्वमित्यभिप्रायः । अत एवोक्तं न मील्यते न संकुचतीत्यर्थः । "निमील्यत" इति पाठान्तरम्, तत्र निमीलितमेव तिष्ठतीत्यर्थः । इदं युक्तम्, दृष्टत्वात् । एतद् न साध्यम्, सुश्रुते असाध्यप्रकरणे पठितत्वादिति ॥ ९० ॥

भा० टी०—जिसके पलक और शुक्ल भागकी सन्धि अलग हो जातीहै, जिससे न पलक पड़ता है और न खुलता है। अथवा एकदम पलक बंद रहता है, या खुला रहता है। इसे वातहत वर्त्म कहते हैं। यह असाध्य होता है। इसमें पीड़ा होती भी है और नहीं भी होती है ॥ ९० ॥

## अथार्बुदस्य लक्षणम् ।

अर्बुदलक्षणमाह—

वर्त्मान्तरस्थं विषमं ग्रन्थिभूतमवेदनम् ।
आचक्षीतार्बुदमिति सरक्तमविलम्बितम् ॥ ९१ ॥

( सु० उ० अ० ३ )

म०—वर्त्मान्तरस्थमित्यादि । वर्त्मनोऽभ्यन्तरस्थं, बाह्येऽप्युन्नतन्यदर्शनादि·षमम्[1] । ग्रन्थिभूतं=ग्रन्थिरूपेण स्थितम् । अवेदनामिति ईषदर्थे नञ्, तेन ग्रन्थिरिवाल्पवेदनामित्यर्थः, वेदना च वातानुबन्धेनैव । सरक्तमिति किञ्चिद्रक्तम् । पित्तानुबन्धात् । अविलम्बितं शीघ्रजन्मेत्यर्थः । केचिदत्र क्रियाविशेषणं ब्रुवते, तेनायमर्थः—अविलम्बितं शीघ्रमाचक्षीतार्बुदमिति; किं त्वेतन्न सङ्गतम्, अस्य व्याख्यानस्य निष्प्रयोजनत्वात् । अन्ये तु "अवलम्बितम्" इति पठन्ति । एतत् सन्निपातजम् अपाकि च, तच्च कफेन ॥ ९१ ॥

भा० टी०—पलक के अन्दर टेढ़ी मेढ़ा-कम पीड़ा करनेवाला, कुछ लाल और शीघ्र बढ़नेवाली या लटकता हुआ गाँठ की सूरत में एक मांसांकुर हो जाता है। उसे वर्त्मार्बुद कहते हैं ॥ ९१ ॥

अथ निमेषस्य लक्षणम् ।

( Blepharospasm ) ब्लेफेरोस्पैजम,

निमेषलक्षणमाह—

निमेषिणीः सिरा वायुः प्रविष्टो सन्धिसंश्रयाः ।
प्रचालयति वर्त्मानि निमेषं नाम तद् विदुः ॥ ९२ ॥

( सु० उ० अ० ३ )

म०—निमेषिणीत्यादि । निमेषिणीः=निमेषकारिकाः सिराः । सन्धिसंश्रया इति वर्त्मशुक्लगता इत्यर्थः । अयमसाध्यो वातजः चक्षुष्येण चोन्मेषणीः सिरा इत्युक्तम्, यदाह;—"उन्मेषणीः सिरा वायुः प्रविश्य चावतिष्ठते । अन्यर्थं चालयेद् वर्त्म निमेषः स न सिध्यति"—इति ॥ ९२ ॥

भा० टी०—पलक को बंद और खोलने वाली सिरा, जो कि, पलक और शुक्ल भाग की सन्धि में मिली रहती है वायु द्वारा खराब होकर पलक को हिला कर देती है जिससे पलक बंद और खुल नहीं सकता। इसे निमेष कहते हैं। यह असाध्य होता है ॥ ९२ ॥

---

1—विषमं="अप्रतुलम्" इति भावमिश्र ।

## अथ शोणितार्शसो लक्षणम् ।

( Granular Conjunctivitis ) ग्रेनुलर कानजंकटिविस

शोणितार्शोलक्षणमाह—

यः स्थितो वर्त्ममध्ये तु लोहितो मृदुरंकुरः ।
तद् रक्तजं शोणितार्शश्छिन्नं छिन्नं प्रवर्धते ॥ ९३ ॥

( सु० उ० अ० ३ )

म०—यः स्थित इत्यादि । अंकुराकारो मांसोच्छ्रयोऽङ्कुरः । एतदसाध्यम्, तथा च विदेहः,—"वायुः शोणितमादाय सिराणां प्रमुखे स्थितः । जनयत्यङ्कुरं ताम्रं वर्त्मनि छिन्नरोहणम् ॥ तत् शोणितार्शोऽसाध्यं स्याद् रक्तस्राव्यथ नीरुजम्" =इति ॥ ९३ ॥

भा० टी०—खून की खराबी से पलक में अन्दर लाल रंग का, मुलायम, ऊँचा मांस का अँकुवा हो जाता है। जितना ही वह काटा जाता है उतना ही बढ़ता रहता है, इसे शोणितार्श कहते हैं ॥९३ ॥

## अथ लगणस्य लक्षणम् ।

लगणलक्षणमाह—

अपाकी कठिनः स्थूलो ग्रन्थिर्वर्त्मभवोऽरुजः ।
लगणो नाम स व्याधिर्लिङ्गतः परिकीर्तितः ॥ ९४ ॥

( सु० उ० अ० ३ )

म०—अपाकीत्यादि । अपाकित्वादिकं श्लेष्मारब्धत्वादेव तथा च सात्यकिः,—वर्त्मोपरिष्टाद् यो ग्रन्थिः कठिनो न विपच्यते । नीरुजो लगणो नाम रोगः श्लेष्मसमुद्भवः"—इति ॥ ९४ ॥

भा० टी०—पलक में कड़ी, मोटी, एक गाँठ होती है, जो कि पकती नहीं और थोड़ी २ पीड़ा करती है। इसका नाम लगण है। यह कफ से पैदा होती है ॥ ९४ ॥

## अथ विसवर्त्मनो लक्षणम् ।

विसवर्त्मलक्षणमाह—

**त्रयो दोषा बहिः शोथं कुर्युश्छिद्राणि वर्त्मनोः ।**
**प्रस्रवन्त्यन्तरुदकं विसवद् विसवर्त्म तत् ॥ ८५ ॥**

( सु० उ० अ० ३ )

**म०—त्रयो दोषा इत्यादि** । बहिः शोथमिति बहिरुच्छूनत्वं यथा भवति तथा वर्त्मनोश्छिद्राणि दोषास्त्रयः कुर्युरित्यर्थः । तानि छिद्राणि अन्तर्मुखान्येव यदाह—प्रस्रवन्त्यन्तरुदकमिति छिद्राणीति बहुवचननिर्देशाद् बहुमुखानि, अत्रापि दोषाः कुर्युरिति संबन्धः । अत एव विसवत्=मृणालवत्, तच्चानेकच्छिद्रयुक्तं भवति तद्वत् । अत्रैव चन्द्रिकाकारः सुश्रुते पठति—"शूनं यद् वर्त्म बहुभिः सूक्ष्मैश्छिद्रैः समन्वितम् । वर्त्मान्तरे विसमिव विसवर्त्मेति तत् स्मृतम्"—इति । सात्यकिरप्याह,—"विसस्यापाचितस्येव बहुमांससिरामुखम् । विसवर्त्मेति जानीयाद् दुश्चिकित्स्यं त्रिदोषजम्"—इति ॥ ८५ ॥

भा० टी०—तीनों दोषों के कोप से पलकों में बाहर सूजन हो जाती है और अन्दर बहुत से छेद हो जाते हैं और उन छेदों से मृणाल की भाँति भीतर की तरफ पानी बहा करता है। इसे विसवर्त्म कहते हैं। मृणाल ( कमल तन्तु ) में बहुत से सुराख होते हैं। भीतर उनमें पानी भरा रहता है और उनसे पानी बहा करता है ॥८५॥

## अथ कुञ्चनस्य लक्षणम् ।

कुञ्चनलक्षणमाह—

**वाताद्या वर्त्मसंकोचं जनयन्ति मला यदा ।**
**तदा द्रष्टुं न शक्नोति कुञ्चनं नाम तद् विदुः ॥ ८६ ॥**

( सु० उ० अ० ३ )

**म०—वाताद्या इत्यादि** । मला इत्यस्याभिधानं दुष्टत्वप्रतिपादनार्थम् यतो मलिनीकरणान्मला इत्युच्यन्ते । कुञ्चनं च कस्यापि तन्त्रस्य माधवकरेण लिखितं न सौश्रुतम्, तेन सुश्रुतोक्तपदसप्ततिसंख्या न हीयते. एवं वक्ष्यमाणेऽपि पक्ष्मशाते बोद्धव्यम् ॥ ८६ ॥

भा० टी०—वात आदि दोषों से पलक बंद हो जाते हैं. खुलते नहीं. जिससे कुछ भी नहीं देख पड़ता इसे कुञ्चन रोग कहते हैं ॥ ८६ ॥

## अथ पक्ष्मकोपस्य लक्षणम् ।

( Trichiasis ) ट्रिकिया सिस

पक्ष्मकोपलक्षणमाह—

प्रचालितानि वातेन पक्ष्माण्यक्षि विशन्ति हि ।
घृष्यन्त्यक्षि मुहुस्तानि संरम्भं जनयन्ति च ॥ ९७ ॥
असिते सितभागे च मूलकोषात् पतन्त्यपि ।
पक्ष्मकोपः स विज्ञेयो व्याधिः परमदारुणः ॥ ९८ ॥

( सु० उ० अ० ३ )

म०-प्रचालितानीत्यादि । प्रचालितानि=प्रकर्षेण चालितानि, प्रतीपीकृतानीत्यर्थः । पक्ष्माणि=वर्त्मरोमाणि वातचालितानि सन्ति नेत्रं प्रविशन्ति अन्तर्मुखानि वर्त्मन इत्यर्थः । तान्यसिते कृष्णमण्डले, सितभागे=शुक्लमण्डले वा, अक्षि घृष्यन्ति घर्षयन्तीत्यर्थः । अत एव संरम्भं=शोथं जनयन्ति । मूलकोषात्=पक्ष्मकोशात्; पतन्त्यपीति "पक्ष्माणि" इति शेषः, अपिशब्दान्न पतन्ति च । त्रिदोषजश्चायम्, प्रचालने वातमात्रकारणत्वमुक्तम्, तथा च चन्द्रिकाकारः पाठान्तरं पठति,-"पक्ष्माशयगता दोषास्तीक्ष्णाग्राणि खराणि च । निर्वर्तयन्ति पक्ष्माणि तैर्घृष्टं चाक्षि दूयते ॥ उद्धृतैरुद्धृतैः शान्तिः पक्ष्माभिश्चोपजायते"-इति । अत्र पक्ष्माशयो=वर्त्म । विदेहोऽप्याह-"अस्य वातसम्बन्धेन दोषाः प्रकुपितास्त्रयः"-इत्यादिनेति । कल्याणविनिश्चये उपपक्ष्म पठ्यते,—"पक्ष्मोपरोधो वातेन कोठोऽन्तर्मुखरोगवान् । रोमैरन्तर्मुखैरन्यैरुपपक्ष्म मलैस्त्रिभिः"—इति । उपपक्ष्मणि यादृशी पूर्वसिद्धा तादृशी अपराऽन्तर्मुखा पक्ष्मपंक्तिरिति भेदः, अस्य पक्ष्मोपरोधविशेषत्वात् समानचिकित्स्यत्वाच्च पृथगिहानभिधानम् ॥ ९७ ॥ ९८ ॥

भा० टी०—वात के कोप से पलक के वाल ( बरौनी ) ढीली होकर आँख के अन्दर घुस जाते हैं,उससे सफेद और काले भाग के पास आँख में गड़न होती है और सूजन हो जाती है। कभी २ बरौनी झड़ भी जाती हैं। इसे पक्ष्मकोप कहते हैं। यह बड़ी कड़ी बीमारी है ॥ ९७-९८ ॥

अथ पक्ष्मशातस्य लक्षणम् ।

( Tinea Tarsi ) टिनिया टार्साय,

पक्ष्मशातलक्षणमाह—

वर्त्मपक्ष्माशयगतं पित्तं रोमाणि शातयेत् ।
कण्डूं दाहं च कुरुते पक्ष्मशातं तमादिशेत् ॥ ६६ ॥
( नव सन्ध्याश्रयास्तेषु वर्त्मजास्त्वेकविंशतिः ।
शुक्लभागे दशैकश्च चत्वारः कृष्णभागजाः ॥ १ ॥
सर्वाश्रयाः सप्तदश दृष्टिजा द्वादशैव तु ।
बाह्यजौ द्वौ समाख्यातौ रोगौ परमदारुणौ ॥
भूय एतान् प्रवक्ष्यामि संख्या-रूप-चिकित्सितैः ॥ २ ॥
( सु० उ० अ० १ )

इति श्रीमाधवकरविरचिते माधवनिदाने नेत्ररोगनिदानं समाप्तम् ।

**म०**वर्त्मेत्यादि । पक्ष्मशयोऽत्र पक्ष्ममूलं, शातयेदुन्मूलयेदित्यर्थः । अयं च कफपैत्तिकः, कण्डूदाहवत्त्वात् । अत्र कृच्छ्रोन्मीलनं वाग्भटः पठति,—"रोगान् कुर्युश्चलस्तत्र प्राप्य वर्त्माश्रयाः सिराः । सुप्तोत्थितस्य कुरुते वर्त्मस्तम्भं सवेदनम् ॥ पांशुपूर्णाभनेत्रत्वं कृच्छ्रोन्मीलनमश्रु च । विमर्दनात् स्यात् शमः कृच्छ्रोन्मीलं वदन्ति तम्, ( वा. उ. स्था. अ. ८ )–इति । अस्य चकारेण संग्रहः । पक्ष्मणां वर्त्माश्रयत्वादयमपि वर्त्मरोग एव । इति वर्त्मगता एकविंशतिर्व्याधयः समाप्ताः ॥ ६६ ॥ इति वर्त्मगताः ।

इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायां नेत्ररोगनिदानं समाप्तम् ।

भा० टी०—बरौनी की जड़ पलक में पित्त कुपित होकर बरौनी को गिरा देता है । उस जगह खुजली और जलन भी होती है । बड़ा कष्ट होता है । इसे पक्ष्म-शात रोग कहते हैं ॥ नेत्र रोगों की गणना–नेत्र सन्धि में ६,वर्त्म (पलक) में २१,श्वेत-भाग में ११, कृष्णभाग में ४, सब नेत्र भर में १७, दृष्टि–आँख की पुतली में १२ और दो रोग बाहरी, इस प्रकार नेत्र में कुल ७६ रोग होते हैं ॥ ६६ ॥

इति श्रीहरिनारायणशर्मवैद्यकृतायां निदानदीपिकायां सन्धिनिरूपक भाषाटीकायां नेत्ररोगनिदानम् ।

## अथ शिरोरोगनिदानम् ।

### अथ शिरोरोगस्य भेदाः ।

### ( Headache ) हेडेक ।

अथ कर्ण-नासा-नेत्राणामधिष्ठानत्वेन शिरसः नयनरोगानन्तरं शिरोरोगनिदानारम्भः शिरोरोगाश्चैकादश, तत्र कारणभेदेन शिरोरोगभेदं दर्शयन्नाह—

**शिरोरोगास्तु जायन्ते वात-पित्तकफैस्त्रिभिः ।**
**सन्निपातेन रक्तेन क्षयेण क्रिमिभिस्तथा ॥**
**सूर्यावर्तानन्तवातार्धावभेदकशङ्खकैः ॥ १ ॥**

( सु० उ० अ० २५ )

म०-शिरोरोगास्त्वित्यादि । वातपित्तकफैरित्युक्ते गम्यत एव त्रिभिरिति तत्कथं तदुक्तिः ? उच्यते—सर्वेषां शिरोरोगाणां सन्निपातजत्वख्यापनार्थं, वातादिभेदश्चोत्कर्षात्, तदुक्तं शालाक्ये,-'सर्व एव शिरोरोगाः सन्निपातसमुत्थिताः । औत्कण्ठ्याद्दोषलिङ्गैस्ते कीर्तितास्तद्विदा दश'—इति । त्रिभिः सन्निपातेनेति पदद्वयेन प्रकृतिविकृतिसमवेतसान्निपातद्वयमाहुरन्ये । अत्र पक्षे सन्निपातजत्वादेकत्वगणनया न संख्यातिरेकः, त्रिभिरिति पदं पृथक्त्वद्योतनार्थमिति गदाधरः । क्षयेणेति असृग्वसादीनां क्षयेण, [1]क्षयजोऽयं धातुक्षयजनितवातकोपेन सहसाकृतवाततजन्यत्वेनाचयपूर्वकः, वातजस्तु संचयप्रकोपजनित इति भेदः, अत एवानुपशयोऽप्यस्य संस्वेदनादिना शुक्रक्षयकृदेवोपन्यस्तः । शिरोरोगशब्देन शिरोगतशूलरूपा रुजाऽभिधीयते, तेन सूर्यावर्तानन्तवातार्धावभेदकशङ्खकैरित्यभिधानमुपपद्यते, अन्यथा तेषामेव शिरोरोगत्वात्तैः शिरोरोगा जायन्त इत्यसंगतं स्यात् ॥ १ ॥

---

१-ननु असृगवसादीना क्षयेण वातकोपस्तथा वातजन्य एव तत्कथमयं वातजशिरोरोगादन्य.क्षयजोरोगः-इत्याशङ्क्याह-क्षयजोऽयमिति-असृगवसादिधातुक्षयेण सहसा कुपितो यो वातस्तज्जन्यत्वेन अचयपूर्वकः । वातजन्यस्तु वातस्य संचयपूर्वकप्रकोपजन्यः । अयंभावः क्षयजे वातजे च शिरोरोगे वातकोपस्तुल्य. परं क्षयजे धातूना क्षयेण सद्य एव वातकोपो भवति, वातजे तु शिरोरोगे वातस्य संचयपूर्वकः प्रकोपो भवति इत्यनयोर्भेद इति ।

भा० टी०—शिरोरोग ग्यारह तरह के होते हैं–१-वातज, २-पित्तज, ३-कफज, ४-सन्निपातज, ५-रक्तज, ६-क्षयज, ७-क्रिमिज, ८-सूर्यावर्त, ९-अनन्तवात, १०-अर्धावभेदक, ११-शङ्खक। सभी शिरोरोग तीनों दोषों-सन्निपात से होते हैं, किन्तु उनमें भी जो दोष अधिक होता है वह शिरोरोग उसी दोष से पैदा हुआ कहा जाता है, और जब तीनों दोष अधिक होते हैं तो उसे सन्निपातज कहते हैं ॥ १ ॥

### अथ वातिकशिरोरोगस्य लक्षणम् ।

वातिकशिरोरोगलक्षणमाह—

**यस्यानिमित्तं शिरसो रुजश्च भवन्ति तीव्रा निशि चातिमात्रम् ।**
**बन्धोपतापैः प्रशमश्च यत्र शिरोऽभितापः स समीरणेन ॥ २ ॥**

(सु० उ० अ० २५)

म०—यस्यानिमित्तमित्यादि । अनिमित्तम्=अनभिव्यक्तनिमित्तं, वायोरनियमक्रियत्वात्; तेन निमित्तानुपलब्धिरा क्रमादित्यर्थः । निशि चातिमात्रमिति रात्रौ शीतेन वायोराधिक्यात् महती रुजा भवति, शीतयोनित्वाद् वायोः । बन्धोपतापैरिति बन्धो=बन्धनं वस्त्रादिभिः, उपतापः स्वेदादिभिः, व्यक्तत्यपेक्षया द्वन्द्वनम्, एतेनोपशयो दर्शितः । शिरोऽभितापः=शिरोरुजा ॥ २ ॥

भा० टी०—जिसके शिर में अकस्मात् पीड़ा होने लगे, कभी कम हो जाय, कभी मंद हो जाय, कभी तेज हो जाय, किसी खास एक समय पीड़ा न हो। रात ठण्डी होती है और वायु भी ठंडा होता है, इसलिए रात में ठण्डक पाकर वायु बहुत तेज हो जाता है जिससे रात में पीड़ा अधिक होती है. शिर को कपड़ा से बांधने पर या सेंकने से कुछ आराम मिलता है. ये सब लक्षण वातज शिरोरोग में होते हैं ॥ २ ॥

### अथ पैत्तिकशिरोरोगस्य लक्षणम् ।

पित्तजलक्षणमाह—

**यस्योष्णमङ्गारचितं यथैव भवेत् शिरो धूप्यति चाक्षिनासम् ।**
**शीतेन रात्रौ च भवेत् शमश्च शिरोऽभितापः स तु पित्तकोपात् ॥ ३ ॥**

(सु० उ० अ० २५)

म०—यस्योष्णमङ्गारचितमित्यादि । अङ्गारचितं पच्यतेति अङ्गारव्याप्तमिवेत्यर्थः । धूप्यति=धूमपूर्णमिव भवतीत्यर्थः धूप्यतीति द्विवचनम्, नेत्र-

त्वात् । अक्षि च नासा च इत्यक्षिनासम्, प्राण्यङ्गत्वादेकवद्भावः । उपशयं दर्शयति-शीतेन रात्रौ चेत्यादि ॥ ३ ॥

भा० टी०—जिसके शिर में पीड़ा हो और ऐसी जलन मालूम हो जैसे किसी ने अंगारा लाकर शिर पर रख दिया हो, आँख नाक में ऐसा जान पड़े कि जैसे धूवाँ घुस गया है । ठंडी चीजों से और खासकर रात में शान्त हो जाय,ऐसे शिरोरोग को पित्तज समझना चाहिए ॥ ३ ॥

### अथ श्लैष्मिकशिरोरोगस्य लक्षणम् ।

श्लेष्मजलक्षणमाह—

**शिरो भवेद् यस्य कफोपदिग्धं गुरु प्रतिष्टब्धमतो हिमं च ।**
**शूनाक्षिकूटं वदनं च यस्य शिरोऽभितापः स कफप्रकोपात् ॥ ४ ॥**

( सु० उ० अ० २५ )

म०-शिरो भवेदित्यादि । कफोपदिग्धमिति कफलिप्तम् । गुरु=गौरवयुतम् । प्रतिष्टब्धं=बद्धमिव । हिमं=हिमस्पर्शम् शूनाक्षिकूटमिति वदनविशेषणम् । तथा हि चरकः,-"शिरो मन्दरुजं तेन गुरु स्तिमितभारिकम्' ( च. सू. स्था. अ, १७ )-इति । अत्रापि स्वेदादिनोपशयो ज्ञेयः ॥ ४ ॥

भा० टी०—जिसके शिर में पीड़ा हो, शिर कफ से भरा, बोझदार, जकड़ा हुआ और ठण्डा हो । आंख और मुँह में सूजन आ जाय वह कफज शिरोरोग कहलाता है॥४॥

### अथ सान्निपातिकशिरोरोगस्य लक्षणम् ।

सान्निपातिकलक्षणमाह—

**शिरोऽभितापे त्रितयप्रवृत्ते सर्वाणि लिङ्गानि समुद्भवन्ति ।**

( सु० उ० अ० २५ )

म०-शिरोऽभिताप इत्यादि । सर्वाणि लिङ्गानि अनन्तरोक्तानि वातादिलिङ्गानि । ( अयं च सन्निपातो विकृतिविषमसमवेतो ज्ञेयः, अन्यथा सर्वेषामेव शिरोरोगाणां त्रिदोषजत्वात् पृथगभिधानं व्यर्थं स्यात्, अस्य च विकृतिविषमसमवेतत्वं कारणभेदात् ज्ञेयं,न तु विरुद्धलक्षणतया; स चायं कारणभेद उत्कटसर्वदोषजत्वादेव विज्ञेयः । यथा त्रिदोषजे राजयक्ष्मणि स्वरभेदादिजनकानां वातादि

नाप्युत्कटत्वमिति । उक्तं हि चरके,—"वाताच्छूलं भ्रमः कम्पः पित्ताद्दाहो मदस्तृषा । कफाद्गुरुत्वं तन्द्रा च शिरोरोगे त्रिदोषजे" ( च. सू. स्था. अ. १७ )-इति ॥

भा०टी०—तीनों दोषों से उत्पन्न शिरोरोग में तीनों दोषों के पूरे२ लक्षण होते हैं ।

## अथ रक्तजशिरोरोगस्य लक्षणम् ।

रक्तजलक्षणमाह—

**रक्तात्मकः पित्तसमानलिङ्गः स्पर्शासहत्वं शिरसो भवेच्च ॥ ५ ॥**

( सु० उ० अ० २५ )

म०-रक्तात्मक इत्यादि । पित्तसमानलिङ्ग इति पित्तजशिरोरोगतुल्यलक्षणः । पैत्तिकलिङ्गाधिकमिह स्पर्शासहत्वम् ॥ ५ ॥

भा० टी०—रक्तज शिरोरोग का लक्षण वही सब होता है जो कि पित्तज शिरोरोग का सिर्फ फर्क इतना ही है कि रक्तज शिरोरोग में छुआ नहीं जा सकता, छूनेपर बड़ी तकलीफ होती है, यह बात पित्तज शिरोरोग में नहीं होती है ॥ ५ ॥

## अथ क्षयजशिरोरोगस्य लक्षणम् ।

क्षयजलक्षणमाह—

**असृग्-वसा-श्लेष्म-समीरणानां शिरोगतानामिह संक्षयेण ।**
**क्षयप्रवृत्तः शिरसोऽभितापः कष्टो भवेदुग्ररुजोऽतिमात्रम् ।**
**संस्वेदन-च्छर्दन-धूम-नस्यैरसृग्विमोक्षैश्च विवृद्धिमेति ॥ ६ ॥**

( सु० उ० अ० २५ )

म०-असृगित्यादि । वसासृजोः सर्वदेहस्थितत्वाच्छिरसि स्थितिः, श्लेष्मणश्च स्थानमेव शिरः, उदानवायोरूर्ध्वगतित्वाच्छिरस्तत्स्थानं, तेषां क्षयेण उग्ररुजत्वं व्याधिप्रभावात्, यतो वृद्धे वायावुग्ररुजा युज्यते न तु क्षीणे. तदुक्तम्,—"वाते पित्ते कफे चैव क्षीणे लक्षणमुच्यते । कर्मणः प्रकृतात् हानिः" ( च. सू. स्था. अ. १८ )-इति । अन्यैः पुनरयं पाठः सुश्रुते स्वीकृतः, यथा-'रसायसानाम्-सक्षयसंभवानाम्' इति । युक्तश्चायं पाठः, वातक्षये हि कफवृद्धौ कफजः शिरोरोगः स्य, "वृद्धिर्वापि विरोधिनाम्" ( च. सू. स्था. अ. १८ ) इति वचनात् ।

किं चैतस्य चिकित्सायामुक्तम्, पाने नस्ये च सर्पिः स्याद्वातघ्नमधुरैः शृतम्–इति। ततश्च समीरणपाठो न सङ्गतः, न हि क्षीणे वायौ शमनमुक्तम्, अपि तर्हि वर्धनविधिः, यदुक्तम्,–'क्षीणा वर्धयितव्याः" ( सु. चि. स्था. अ. ३२ )—इति। वसा देहस्नेहस्योपलक्षणम्, तेन मेदा–मज्ज–शुक्र–मस्तिष्काण्यप्यवरुध्यन्ते, तेषां देहस्नेहत्वात्। पित्तमांसादिक्षयजस्तु चयादिक्रमजक्षगकृतवातशिरोरोग एवावरुध्यते, इति गदाधरः। शिरोऽभितापः=शिरोरुजा। संस्वेदन-च्छर्दन-धूम-नस्यैः कफक्षयः, नागरादितीव्रधूमेन वसामस्तिष्कादिक्षयः, सिरामोक्षादिभिरसृक्क्षयः, अत एवैनैः संस्वेदनादिभिः क्षयजस्य वृद्धिः। अयं विदेहेऽपि पठ्यते–"शून्यं भ्रमति रुज्येत शिरो विभ्रान्तनेत्रता। मूर्च्छा गात्रावसादश्च शिरोरोगे क्षयात्मके"–इति। चक्षुष्योऽप्याह,—"स्त्रीप्रसंगादभीघातादथवा देहकर्मणा। क्षिप्रं संजायते कृच्छ्रः शिरोरोगः क्षयात्मकः॥ वातपित्तात्मकं लिङ्गं व्यामिश्रं तत्र लक्षयेत्"–इति॥ ६॥

भा० टी०—जब कि शिर-खून, वसा, कफ, मेद, मज्जा, शुक्र, और वायु से खाली हो जाता है, उस समय शिर में बड़ी तेज़ पीड़ा होती है इसमें स्वेदन,कय, धूम, नस्य, रक्तमोक्ष कराने से पीड़ा पहिले से अधिक हो जाती है। क्योंकि स्वेदन,कय,धूम और नस्य से वचा खुचा हुआ भी कफ और क्षीण हो जाता है, तीव्र धूम सेवन से वसा मस्तिष्क आदि क्षीण होते और रक्तमोक्ष से रक्त क्षीण होता है। यह क्षयज शिरोरोग कृच्छ्रसाध्य होता है॥ ६॥

## अथ क्रिमिजशिरोरोगस्य लक्षणम्।

क्रिमिजमाह–

**निस्तुद्यते यस्य शिरोऽतिमात्रं संभक्ष्यमाणं स्फुरतीव चान्तः।**
**घ्राणाच्च गच्छेत् सलिलं सपूयं शिरोऽभितापः क्रिमिभिः स घोरः ७**

( सु० उ० अ० २५ )

म०–निस्तुद्यत इत्यादि। निस्तुद्यते सूचीभिरिव तुद्यते। संभक्ष्यमाणमित्यत्र "क्रिमिभिः" इति शेषः, प्रकरणात्। स्फुरतीव=मनाक् चलतीव। घ्राणाच्चेति चकारो भिन्नक्रमेण सलिलमित्यत्र संबध्यते, तेन सलिलं पूयं च गच्छेत् तथा क्रिमयश्च कदाचिद् गच्छन्तीति, तथाच चरकः,–"क्रिमीणां दर्शनेन च" ( च. सू. स्था. अ १७ ) इति॥ ७॥

जिसके शिर में कीड़े पड़ जाते हैं और शिर के कफ रक्त आदि धातुओं को काट लेते हैं तो शिर में सुई कोचने की तरह पीड़ा होती है और शिर में भीतर से फड़कन होती है, नाक से पीप और पानी निकलता रहता है और कीड़े भी निकलते हैं यह क्रिमिज शिरोरोग बड़ा ही कड़ा होता है ॥ ७ ॥

## अथ सूर्यावर्तरोगस्य लक्षणम्।

सूर्यावर्तलक्षणमाह–

**सूर्योदयं या प्रति मन्दमन्दमक्षिभ्रुवं रुक् समुपैति गाढा।**
**विवर्धते चांशुमता सहैव सूर्यापवृत्तौ विनिवर्तते च।**
**सर्वात्मकं कष्टतमं विकारं सूर्यापवर्तं तमुदाहरन्ति ॥ ८ ॥**

( सु० उ० अ० २५ )

म०–सूर्योदयमित्यादि–सूर्योदये प्रति लक्षीकृत्य या रुगक्षिभ्रुवं समुपैतीति संबन्धः। अक्षिभ्रुवाविति पाठान्तरे प्राण्यङ्गत्वेन प्राप्तैकवद्भावस्याभावः, नासिका-स्तनयोरितिवत् लक्षणव्यभिचारात्। सूर्योदये=प्रातर्मन्दं मन्दं यथा स्यात्तथा रुजा समुपैति, अंशुमता च सूर्येण सह गाढा यथा भवति तथा वर्धते। अयमर्थः—यथा सूर्यो वर्धते तथा वेदना प्रवृद्धा भवति, सूर्यस्यापवृत्तौ=सायाह्ने विनिवर्तते=शाम्य-तीत्यर्थः; "गाढा" इत्यत्र "गूढा" इति पाठान्तरं, तदा सूर्यापगमे गूढा रात्रौ लीनेत्यर्थः। सर्वात्मकमिति सन्निपातजम्। व्याधिस्वभावाच्च कालविशेषानियमः। कष्टतमं=कृच्छ्र-साध्यम्। ननु, अयं सुश्रुते वातपित्ताभ्यां पठ्यते, तद्यथा–"आवर्तनं न तु सूर्यपूर्वो व्याधिर्मतः पित्तसमीरणाभ्याम्। शीतेन शान्तिं लभते कदाचिदुष्णेन जन्तुः सुखमा-प्नुयाच्च" ( सु. उ. त अ. २५ )–इति। तत्कथं सर्वजत्वम्? उच्यते–द्वयो-रौत्कर्षेण व्यपदेश इति न विरोधः। ननु, एवं कथं रात्रौ वायुसमानगुणश्लेष्म-प्रादुर्भावे वेदनालीनता, दिवसस्याद्यन्तयोर्मन्दरुक्त्वं च? उच्यते–तत्रापि पित्तस्य प्रबलतमत्वात्। यत्तु चिकित्सायां शिरीषमूल-पिप्पलीमूल-वचानस्यादाभिहितं तद् व्याधिप्रत्यनीकत्वात्। अथ वातपित्तजत्ववर्णनेन विशिष्टकालभवने हेतुर्दर्शितो भवति। यतो वातपित्तयोः शीतोष्णात्मकत्वात् पूर्वाह्णे सूर्यवृद्धिक्रमेण स्रोतसां संकोचक्रमादवरुद्धमार्गयोर्वेदनाकरत्वम्, पराह्णे निवर्तमाने सूर्ये तु स्रोतसां विवृत-त्वात् स्वमार्गव्याघातविरहेण वेदनाया अजनकत्वमिति युक्तः कालविशेषनियमः।

तथाचाह निमिः;-"सूर्यसोमात्मकौ नित्यं स्वहेतू पित्तमारुतौ । कुर्वाते वेदनां तीव्रां दिनात् पूर्वाह्ण एव तु ॥ आदित्यतेजसा युक्ते निवृत्तेऽपि च भास्करे । स्रोतसां विवृतत्वाच्च ततः श्लेष्माऽधिगच्छति । उद्गतो मातरिश्वा च स्वमार्गं प्रतिपद्यते । तस्मान्मध्यदिनादूर्ध्वं वेदनाऽत्र प्रशाम्यति"-इति । वातपित्तजत्वमस्याधिकत्वेन व्यपदेश इति न्यायात् तेन पूर्वेण समं न विरोधः । विदेहे सूर्यावर्तविपर्ययोऽपि पठ्यते,—"तत्र वातानुगं पित्तं चितं शिरसि तिष्ठति । मध्याह्ने तेजसाऽर्कस्य तद् विवृद्धं शिरोरुजम् ॥ करोति पैत्तिकीं घोरां संशाम्यति दिनक्षये । अस्तंगते प्रभाहीने सूर्ये वायुर्विवर्धते ॥ पित्तं शान्तिमवाप्नोति ततः शाम्यति वेदना । एष पित्तानिलकृतः सूर्यावर्तविपर्ययः"—इति । अयमत्र सूर्यावर्त एवान्तर्भावनीयः चातुर्थिके चातुर्थिकविपर्ययवत् ॥ ८ ॥

भा० टी०—जैसे २ सूर्य निकल कर ऊपर चढ़ते जाते हैं वैसे वैसे शिर, आँख और भौं में पीड़ा बढ़ती जाती है, ठीक दोपहर के वक्त पीड़ा बहुत तेज हो जाती है। बाद ज्यों २ सूर्य नीचे की तरफ ढ़लते हैं त्यों त्यों पीड़ा भी कम होती जाती है, और शाम को बिल्कुल शान्त रहती है। रात में तो पीड़ा रहती ही नहीं। यह सन्निपात से होता है। परन्तु सुश्रुत में वातपित्तज माना गया है। यह रोग कभी तो ठंडी दवा से शान्त होता है और कभी गर्म दवा से ॥ ८ ॥

## अथानन्तवातरोगस्य लक्षणम् ।

अनन्तवातलक्षणमाह-

**दोषास्तु दुष्टास्त्रय एव मन्यां संपीड्य घाटासु रुजां सुतीव्राम् ।**
**कुर्वन्ति योऽक्षिभ्रुवि शंखदेशे स्थितिं करोत्याशु विशेषतस्तु ॥ ९ ॥**
**गण्डस्य पार्श्वे तु करोति कम्पं हनुग्रहं लोचनजांश्च रोगान् ।**
**अनन्तवातं तमुदाहरन्ति दोषत्रयोत्थं शिरसो विकारम् ॥ १० ॥**

(सु० उ० अ० २५)

म०—दोषा इत्यादि । मन्या=ग्रीवासिराद्वयं, तां सम्पीड्य; घाटासु=ग्रीवापश्चाद्भागेषु, दोषास्त्रय एव रुजां=वेदनां सुतीव्रां कुर्वन्ति, तथा आक्षिभ्रुवि शङ्खदेशे च स्थितिमारब्धत्वं यो विशेषतः करोति, तथा गण्डपार्श्वे कम्पं हनुग्रहादिकां

च यः करोति, तमनन्तवातमुदाहरन्तीति योज्यम् । गण्डस्य=कपोलस्य, पार्श्वे=एकदेशे । हनुग्रहो=वातव्याधिविशेषः । अमुं च सुश्रुते अन्यतोवातेनैव तुल्यत्वादनन्तवातं परित्यज्य दश शिरोरोगा अभिहिताः, एवं तन्त्रान्तरेऽपि "कीर्तितास्त्विह दश"—इत्यभिधानम्, माधवकरेण तु त्रिदोषजन्यत्वेन गण्डकम्प हनुग्रहलिङ्गयोगाच्च केवलवातजादन्यतोवाताद् विलक्षण एवायमिति अनन्तवातोऽधिकः पठितः, भेदो हि भेदवतां कारणभेदाद् विरुद्धधर्माध्यासाच्च भवतीति ॥ ९-१० ॥

भा० टी०—तीनों दोष कुपित होकर मन्या ( गले के इधर उधर रहनेवाली दो शिरा ) घाट, ( गरदन का पिछला हिस्सा ) घाई, आँख और भौं में बड़ी तेज पीड़ा पैदा कर देते हैं, शङ्ख ( कनपटी ) में खास कर हर वक्त पीड़ा हुआ करती है। कपोल में एक जगह कम्प होता है, जबड़ा बैठ जाता है और आँख में रोग हो जाते हैं। इसका नाम अनन्तवात है। हिन्दी में इसे समल वायु कहते हैं ॥ ९-१० ॥

## अथार्धावभेदकस्य लक्षणानि ।

( Hemicrania. ) हेमिक्रेनिआ

अथार्धावभेदलक्षणमाह—

रूक्षाशनात्यध्यशनप्राग्वातावश्यमैथुनैः ।
वेगसन्धारणायासव्यायामैः कुपितोऽनिलः ॥ ११ ॥
केवलः सकफो वाऽर्धं गृहीत्वा शिरसो बली ।
मन्याभ्रूशङ्खकर्णाक्षिललाटार्धेऽतिवेदनाम् ॥ १२ ॥
शस्त्रारणिनिभां[1] कुर्यात् तीव्रां सोऽर्धावभेदकः ।
नयनं वाऽथवा श्रोत्रमतिवृद्धो विनाशयेत् ॥ १३ ॥

म०—रूक्षाशनेत्यादि । अध्यशनमजीर्णे भोजनम् । अवश्यायेति पद-श्यायो हिममुच्यते, छन्दोऽनुरोधेन यकारलोपो ह्रस्वत्वं चेति व्याख्याने । कदाचित् सश्लेष्मवातजत्वमिति विकल्पं दर्शयति-केवल इत्यादि । शस्त्रारणिनिभां शस्त्रच्छेदनिभां अरणिनिभां च, अरणिरग्न्युत्पादनकाष्ठयन्त्रं, तस्य मन्थनवत्

[1] "शस्त्रारणिनिभाम्" इति पाठान्तरम् ।

पीडा; किंवा अरणिना कारणेन अग्निरेवोच्यते, तेनाग्निनिभां वेदनाम्। सुश्रुते त्वयं त्रिदोषजः पठितः । तद्यथा–"यस्योत्तमाङ्गं रुजतेऽर्धमात्रं सतोद-भेद-भ्रम-मोह-शूलैः । पक्षाद् दशाहादथवाऽप्यकस्मात् तमर्धभेदं त्रितयाद् व्यवस्येत्" (सु. उ. त. अ. २५ )—इति । अत्र तु केवलोऽनिलः सकफो वेत्यौत्कृष्ट्यादभिधानं, "सोऽर्धभेदः कफानिलात्" इति विदेहेऽप्येवं बोद्धव्यम् । अयमुपेक्ष्यमाणो नयनादिकं हन्यादित्याह—नयनमित्यादि । अत्रैव विदेहः–"शिरसोऽन्यतरे पार्श्वे कुपितो मारुतो यदा । श्लेष्मणा रुध्यते जन्तोस्तोद-स्फुटन-दालनैः ॥ शूलावदारणैर्गाढमर्धं तदवरुध्यते । नयनं चावदीर्येत सोऽर्धभेदः कफानिलात् ॥ तथा त्र्यहात् स पञ्चाहात् पक्षात् मासाच्च देहिनाम्"—इति । सुश्रुते "पवनात् सपित्तात्" इति केचित् पठन्ति । तेन वातपित्तजत्वमस्य । सात्यकिना–"वायुः शिरः-शङ्ख-भ्रूनेत्रमवगृह्य" इत्यादिना वातजत्वमस्य दर्शितम् । अन्ये तु सन्निपाताधिकारात् सन्निपातजं पठन्ति, तथा च सुश्रुतः—"त्रितयाद् व्यवस्येत्" ( सु. उ. त. अ. २५ ) इति । व्याधिस्वभावादाचिरानुबन्धकत्वं सान्निपातिकत्वेऽपि ॥ ११—१३ ॥

भा० टी०—रूक्ष भोजन, अति भोजन, खाने पर खाना, पुरवैया हवा में देर तक रहना, ओस में रहना, अधिक मैथुन, मल मूत्र का वेग रोकना, अधिक परिश्रम (अधिक चलना अधिक बोझा ढोना, अधिक कसरत करना ) इन कारणों से वायु कुपित होकर कफ के साथ या अकेले आधा मस्तक, एक तरफकी मन्या, कनपटी, आंख और ललाट ( माथा ) में शस्त्र से काटने और आग से जलने या मथने-घिसने जैसी बड़ी तेज पीड़ा पदा कर देता है। यदि इस रोगमें लापरवाहीसे ठीक दवा न की जाय तो यह बहुत बढ़ कर एक आंख या कान को खराब कर देता है अर्थात् आंखसे सूझता नहीं और कान से सुन नहीं पड़ता । इसे अर्धावभेदक कहते हैं। हिन्दी में इसका नाम आधा शीशी या अधकपारी—है ॥ ११—१३ ॥

### अथ शङ्खकस्य लक्षणानि ।

शङ्खकलक्षणमाह—

रक्तपित्तानिला दुष्टाः शङ्खदेशे विमूर्च्छिताः ।
तीव्ररुग्-दाह-रागं हि शोथं कुर्वन्ति दारुणम् ॥ १४ ॥

स शिरो विषवद् वेगी निरुध्याशु गलं तथा।
त्रिरात्राज्जीवितं हन्ति शङ्खको नामतः परम्।
त्र्यहाज्जीवति भैषज्यं प्रत्याख्याय समाचरेत्॥ १५॥

इति श्रीमाधवकरविरचिते माधवनिदाने शिरोरोगनिदानं समाप्तम्।

**म०रक्तपित्तानिला इत्यादि**। दुष्टाश्चयादिमन्तः। मूर्च्छिताः अन्योन्यमेकीभूताः कफोऽप्यत्र बोद्धव्यः, तथा च सुश्रुतः—"शङ्खाश्रितो वायुरुदीर्णवेगः कृतानुतापः कफ-पित्त-रक्तैः" (सु. उ. त. अ. २५)—इति (मारकत्वमाह त्रिरात्राज्जीवितं हन्तीति। कुशलेनोपक्रमे क्रियमाणे त्रिरात्रात् परतो जीवत्येवेत्यत आह—परंत्र्यहाज्जीवतीति। अत्र अहःसम्बन्धिनी रात्रिरुपलक्ष्यते, तेन त्रिरात्रात् परं जीवतीत्यर्थः। ननु किमस्य त्रिरात्राभ्यन्तरे साध्यत्वमसाध्यत्वं वेत्यत आह—भैषज्यमित्यादि। तदनेन त्रिरात्राभ्यन्तरे विकल्पितासाध्यत्वम्, त्रिरात्रात् परमसाध्यत्वं दर्शितम् तत्रैव विदेहः—"चीयते तु यदा पित्तं शङ्खयोरनिलं श्रितम्। निरुणद्धि ततो मर्म परिपूरितमुल्वणम्॥ ततः शङ्खौ प्ररुज्येते दह्येते इव वह्निना। सूचिभिरिव तुद्येते निकृत्येते इवासिना॥ शङ्खको नाम शिरसि व्याधिरेष सुदारुणः। तृष्णा-मूर्च्छा-ज्वर-करस्त्रिरात्रात् परमन्तकृत्॥ कुशलेन तूपक्रान्तस्त्रिरात्रादेव जीवति"—इति)॥ १४॥ १५॥

इति श्रीकण्ठदत्तकृतायां शिरोरोगनिदानं समाप्तम्।

कुपित वात-पित्त-कफ तथा रक्त शङ्ख देश में इकट्ठे होकर एक बड़ी भारी शोथ उत्पन्न कर देते हैं जो कि लाल होता है और जिसमें बड़ी तेज पीड़ा और जलन होती है। यह शोथ विष के समान बड़ी तेजी से सिर और गला को रोक देता है। यह तीन दिनों के अन्दर ही मार डालता है। यदि बहुत सावधानी के साथ होशियार चिकित्सक इसकी चिकित्सा करे तो शायद तीन दिनों के अन्दर नहीं भी मरता। तीन दिन तक रोगी के जीवित रहने पर जवाब देकर कि यह रोग असाध्य है शायद ही अच्छा हो, कहो तो दवा करें, दवा करना मुनासिब है॥ १४-१५॥

इति श्री हरिनारायण शर्मवैद्यकृतायां निदानदीपिकायां हरिनिदान-
भाषाटीकायां शिरोरोगनिदानम्।

## अथ [1]सृग्दरनिदानम् ।

### अथ प्रदररोगस्य सहेतुका संख्यारूपा सम्प्राप्तिः ।

स्त्रीपुंसां साधारणान् विकारानभिधाय पुंमतिनियतस्योपदंशादेरुक्तत्वात् स्त्रीनियतरोगाभिधानम् । तत्र च योनिव्यापत्तिविशेषेऽप्यार्तवप्रवृत्तिसद्भावात् प्रथमं दुष्टार्तवप्रवृत्तिस्वरूपं प्रदरमाह—

**विरुद्धमद्याध्यशनादजीर्णाद् गर्भप्रपातादतिमैथुनाच्च ।**
**यानाध्वशोकादतिकर्षणाच्च भाराभिघातात् शयनाद्दिवा च ।**
**तं श्लेष्मपित्तानिलसंनिपातैश्चतुष्प्रकारं प्रदरं वदन्ति ॥ १ ॥**

म०-विरुद्धेत्यादि । विरुद्धमद्यं=दुष्टमद्यम्, अथवा विरुद्धं=संयोगादिविरुद्धं, मद्यं च स्वरूपतः । अजीर्णादपक्वभोजनात् अतिकर्षणात् लङ्घनाद्यतियोगेन क्षीणधातुत्वात् । तं श्लेष्मपित्तानिलसन्निपातैरित्यत्र श्लेष्मणोऽभिधानं श्लेष्मजेऽपि वेदनासूचनार्थम् ॥ १ ॥

विरुद्ध भोजन, मद्यपान, अजीर्ण में भोजन, गर्भपात, अति मैथुन, तेज सवारी पर अधिक चलना । ज्यादा रास्ता चलना, शोक ( रंज ) अधिक परिश्रम करना, जिससे शरीर क्षीण हो । बोझा उठाना, चोट लगना, दिन में सोना, इन सब कारणों से स्त्रियों को प्रदर रोग हो जाता है । यह चार प्रकार का होता है । १ वातज, २ पित्तज, ३ कफज, ४ सन्निपातज । आर्तव ( रज ) खराब होकर मासिक धर्म के समय के अलावा भी बीच २ में योनिमार्गसे अधिक गिरता है । इसे ही प्रदर कहते हैं ॥ १ ॥

### अथ प्रदररोगस्य सामान्यलक्षणम् ।

तस्य सामान्यरूपमाह—

**असृग्दरं भवेत् सर्वं साङ्गमर्दं सवेदनम् ।**

म०-असृग्दरमित्यादि । सवेदनं=सशूलं, असृग् दीर्यते=च्यवते यस्मिन्नित्यसृग्दरं, तन्त्रान्तरमत्र-"तदेवातिप्रसङ्गेन प्रवृत्तमनृतावपि । असृग्दरं विजानीयात् पुरस्तादुक्तलक्षणम्" ( सु. शा. स्था. अ, २ )—इति । तदेवेति आर्तवम् ॥—

भा० टी०—सभी प्रदर में अङ्गमर्द ( अँगड़ाई ) और योनिमें पीड़ा होती है ।

---

1 रक्तप्रदर= Menorrhagia मनोरेजिआ २ श्वेतप्रदर= Leucorrhea लिकोरिआ

अथातिप्रवृत्तस्यार्तवस्योपद्रवाः ।

आर्तवातिप्रवृत्तौ उपद्रवानाह—

तस्यातिवृत्तौ दौर्बल्यं भ्रमो मूर्च्छा मदस्तृषा ।
दाहः प्रलापः पाण्डुत्वं तन्द्रा रोगाश्च वातजाः ॥ २ ॥

म०—तस्यातिवृत्तौ दौर्बल्यमित्यादि । रोगाश्च वातजा इति आक्षेपककम्पादयः ॥ २ ॥

भा०टी०—यदि प्रदर अधिक बढ़जाता है-अर्थात् अधिक खून गिरता है तो उससे दुर्बलता, चक्कर, बेहोशी, नसा सा मालूम होना, प्यास, दाह, प्रलाप, शरीरका पाण्डु वर्ण हो जाना तन्द्रा, और वातज-आक्षेपक कम्प आदि रोग पैदा होकर अत्यन्त तकलीफ देते हैं ॥ २॥

अथ श्लैष्मिकादिभेदेन प्रदरस्य विशेषलक्षणानि ।

श्लैष्मिकादिभेदेन विशेषलक्षणान्याह—

आमं सपिच्छाप्रतिमं सपाण्डु पुलाकतोयप्रतिमं कफात्तु ।
सपीत-नीलासित-रक्तमुष्णं पित्तार्तियुक्तं भृशवेगि पित्तात् ॥ ३ ॥
रूक्षारुणं फेनिलमल्पमल्पं वातार्ति वातात् पिशितोदकाभम् ।
सक्षौद्र-सर्पिर्हरिताल-वर्णं मज्जप्रकाशं कुणपं त्रिदोषात् ॥ ४ ॥
तं चाप्यसाध्यं प्रवदन्ति तज्ज्ञा न तत्र कुर्वीत भिषक् चिकित्साम् ।
शश्वत् स्रवन्तीमास्रावं तृष्णा-दाह-ज्वरान्विताम् ॥ ५ ॥
क्षीणरक्तां दुर्बलां च तामसाध्यां विनिर्दिशेत् ।

म०आममित्यादि । आमम्=आमरसानुविद्धम् । सपिच्छाप्रतिमामिति पिच्छा=शाल्मल्यादिनिर्यासः, तत्सदृशं पिच्छिलमित्यर्थः, समान्ध इत्यर्थे । पुलाकतोयप्रतिमं=प्रक्षालितपललतोयसदृशम्, अन्ये पुलाकं गवेधुकमाहुः । पित्तार्तियुक्तं=दाहचिमिचिमादियुक्तम् । भृशवेगि=बहुवेगि । वातार्ति=तोदादिलक्षणम् । पिशितोदकाभं=मांसप्रक्षालनजलसदृशम् । सक्षौद्रसर्पिर्हरितालवर्णाभमिति नानावर्ण-

त्वं त्रिदोषकोपादेव । क्षौद्रवर्णं=मनाक्कपिलं, सर्पिर्वर्णं=विलीनघृतवत् किञ्चिदरुणं च, मज्जप्रकाशं=मज्जा=अस्थिस्नेहः तत्समं, कुणपं=शवगन्धि । तच्चाप्यसाध्य मिति चिकित्सानिवृत्त्यर्थम् ॥ ३—५ ॥—

भा० टी०—कफके प्रदर में खून, लासादार, आम-कच्चा भोजन रस से मिला हुआ,कुछ पीला, और मासके धोवनके रंग का गिरता है। पित्तजप्रदरमें पीला, नीला, काला, या लाल, गर्म, दाह के साथ बहुत तेजी से गिरता है। वातजप्रदर में खून, रूखा, लाल, झागदार, मासके धोवन के रंगका, वातकी पीड़ा के साथ थोड़ा थोड़ा गिरता है। सन्निपातज प्रदर में खून का रंग शहद, घी, हरिताल और मज्जा (चरबी) के समान तथा मुर्दा के समान बदबूदार होता है। यह सन्निपातज प्रदर असाध्य कहा गया है। इसकी दवा वैद्य को न करनी चाहिए ॥ ३-५ ॥

### अथ विशुद्धार्तवस्य लक्षणम् ।

विशुद्धार्तवलक्षणमाह—

मासाद् निष्पिच्छदाहार्ति पञ्चरात्रानुबन्धि च ॥ ६ ॥
नैवातिबहुलात्यल्पमार्तवं शुद्धमादिशेत् ।
शशासृक्प्रतिमं यच्च यद् वा लाक्षारसोपमम् ।
तदार्तवं प्रशंसन्ति यच्चाप्सु न विरज्यते ॥ ७ ॥

( सु० उ० अ० २ )

इति श्रीमाधवकरविरचिते माधवनिदाने असृग्दरनिदानं समाप्तम् ।

म०—मासादित्यादि । निष्पिच्छदाहार्तीति अपिच्छिलमदाहमशूलादिवेदनम्, एतेन विकृतवातादिलिङ्गरहितमित्यर्थः पञ्चरात्रानुबन्धीति पञ्चरात्रं प्रभूत-प्रवृत्त्या अनुबध्नातीत्यर्थः । अल्पप्रवृत्त्या पञ्चरात्रात् परतोऽप्यनुबध्नाति । तदुक्तं हारीते—"षोडशदिवसान्यृतुकालः"—इति । विदेहेऽप्युक्तम्—"स्त्रीणामृतुर्भवति षोडशवासराणि"—इति । शशासृगित्यादिना वर्णद्वयं वातादिप्रकृतिभेदात् । यच्चाप्सु न विरज्यते इति येनार्तवेन रञ्जितं वस्त्रम् अप्सु प्रक्षालितं सल्लोहितं न भवति तद् विशुद्धम् । तथा च हिरण्याक्षः,—"सुरेन्द्रगोपसंकाशं स्निग्धं च मधुगन्धि च । अपिच्छिलमशीतं च यद् वासो न विरञ्जयेत्"—इति ॥ ६-७ ॥

इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायामसृग्दरनिदानं समाप्तम् ।

भा० टी०—जिस स्त्री को प्रदर में हर वक्त खून गिरता हो, प्यास भी ज्यादा अधिक हो, शरीर में खून बहुत कम रह गया हो। ताकत घट गई हो तो इस हालत में प्रदर असाध्य होता है। यदि महीने २ पर अर्थात् २८ दिन के अन्तर पर मासिक धर्म हुआ करे, खून लासादार न हो, न जलन हो और किसी तरह की पीडा न हो, अधिक खून गिरे तो पांच दिन तक गिरे। न बहुत अधिक निकले और न बहुत ज्यादा तो आर्तव शुद्ध समझना चाहिए। मासिक के खून का रंग यदि खरगोश के खून की तरह या लाख के रस या काढ़ा की तरह हो, और खून का भींगा कपड़ा पानी से धोने पर साफ हो जाय, उसमें खून का दाग न लगा रहे तो समझना चाहिए कि मासिक का खून बिल्कुल शुद्ध है ॥ ६-७ ॥

इति श्रीहरिनारायणशर्म्मवैद्यकृतायां निदानदीपिकायां कल्पितनिदानक-
भाषाटीकायामसृग्दरनिदानम्।

## अथ योनिव्यापन्निदानम्।

( Diseases of Vagina. ) डिजीजेज़ आफ वेजिना

### अथ योनिव्यापद्रोगस्य हेतवः।

स्त्र्यधिकारानुवृत्तेः प्रदुष्टार्तवकार्यत्वाच्च योनिव्यापन्निदानमाह—

विंशतिर्व्यापदो योनौ निर्दिष्टा रोगसंग्रहे।
मिथ्याचारेण ताः स्त्रीणां प्रदुष्टेनार्तवेन च ॥ १ ॥
जायन्ते बीजदोषाच्च दैवाच्च शृणु ताः पृथक्।

(च० चि० अ० ३०)

म०—विंशतिरित्यादि। रोगसंग्रहे इति अष्टोदरीये, चरकोक्तस्याऽस्य वाक्यस्य मिथ्याचारेण=असम्यगाहाराचारेण, चरकेणैतिभक्त्यार्थत्वात्। प्रदुष्ट-नार्तवेनेति वातादिदुष्टरजसेत्यर्थः। तेन वन्ध्यादिष्वार्तवदुष्टिरपि कारणं भवति। बीजदोषात्=मातापित्रोरारम्भकबीजदोषात्। दैवात्=कालनाशकारणात्, दैवस्य सर्वत्र कारणत्वे सिद्धेऽत्र विशेषेण कारणत्वमुक्तम् ॥ १ ॥

भा० टी०—( चरक में ) रोग गणना में जो बीस प्रकार के योनिरोग गिनाये गये हैं वे ठीक तरह से आहार विहार न करने से कुपित दोषों के द्वारा आर्तव के विगड़ जाने से या माता पिता के रज वीर्य के दोष से और पूर्व जन्म के असत्कर्मों से होते हैं। उनके अलग २ लक्षण सुनो ॥ १ ॥

**अथ वातिकानामुदावर्तादियोनिव्यापत्तीनां लक्षणानि ।**

वातिका आह—

> सा फेनिलमुदावर्ता रजः कृच्छ्रेण मुञ्चति ॥ २ ॥
> वन्ध्यां नष्टार्तवां विद्याद् विप्लुतां नित्यवेदनाम् ।
> परिप्लुतायां भवति ग्राम्यधर्मेण रुग् भृशम् ॥ ३ ॥
> वातला कर्कशा स्तब्धा शूल-निस्तोद-पीडिता ।
> चतसृष्वपि चाद्यासु भवन्त्यनिलवेदनाः ॥ ४ ॥

( सु० उ० अ० ३८ )

म०—सा फेनिलमित्यादि । सा=योनिः फेनवदार्तवं मुञ्चति । उदावर्तेति उर्ध्वमावृतः समन्ताद्वर्तनं वायोर्यत्र सा तथेति, अर्श आदित्वादच् । विप्लुतामिति विप्लुतां वातवेदनया विप्लुतत्वात् । नित्यवेदनां अतिकुपितेनैव वातेनेति । परिप्लुतायामिति परि=सर्वतो वातविकारेण प्लुतत्वात् परिप्लुता संज्ञा । परिप्लुतायां= वाह्याभ्यन्तरवातवेदनाभियुक्तायाम् । "ग्राम्यधर्मेण रुग्भृशम्" इत्यत्र "ग्राम्यधर्मे रुचिर्भृशम्" इति पाठान्तरं, तत्र रुचिरभिलाषः; ग्राम्यधर्मे मैथुने । वातलेत्यादि योनिविशेषणम्, वातलया सह पञ्च योनिव्यापदः । वातलायाः पृथगभिधानं वातलायां विशेषेण वातवेदनाप्रादुर्भावार्थम् । एवं पित्तलादिष्वपि वोद्धव्यम् । चतसृष्विति उदावर्ता-वन्ध्या-विप्लुता-परिप्लुतासु ॥ २–४ ॥

भा० टी०—यदि रज फेनदार और कष्ट के साथ गिरे तो उसे **उदावर्ता** कहते हैं। रजोधर्म न होने से **वन्ध्या** कहते हैं। हर वक्त पीड़ा होने से **विप्लुता** कहते हैं। मैथुन के समय अधिक पीड़ा होने से **परिप्लुता** कहते हैं । रूखी, जकड़ी शूल, तोद से युक्त योनि वात दूषित कहलाती है। ऊपर के चारो योनिरोग में वात का प्राबल्य रहता है ॥ २-४ ॥

## अथ रक्तक्षयादीनां पैत्तिकव्यापत्तीनां लक्षणानि ।

पैत्तिका आह—

सदाहं क्षीयते रक्तं यस्यां सा लोहितक्षया ।
सवातमुद्गिरेद् बीजं वामिनी रजसा युतम् ॥ ५ ॥
प्रस्रंसिनी स्रंसते च क्षोभिता दुष्प्रजायिनी ।
स्थितं स्थितं हन्ति गर्भं पुत्रघ्नी रक्तसंक्षयात् ॥ ६ ॥
अत्यथ पित्तला योनिर्दाह-पाक-ज्वरान्विता ।
चतसृष्वपि चाद्यासु पित्तलिङ्गोच्छ्रयो भवेत् ॥ ७ ॥

(सु० उ० अ० ३८)

म०—सदाहमित्यादि । क्षीयते रक्तमिति अतिप्रवृत्त्या रक्तस्य क्षयः । वामिन्युद्गिरेद्बीजमिति शुक्रं शुद्धमपि वमतीत्यर्थः । प्रस्रंसिनी स्रंसते इति स्वस्थानाच्च्यवते निःसरतीति यावत् । अत एव "क्षीरस्विन्नां प्रवेशयेत् ( सु. उ. अ. ३८ )"—इति चिकित्सितम् । क्षोभिता=विमर्दिता । दुष्प्रजायिनी=दुःखप्रसवा । रक्तसंक्षयादार्तवस्य वायुना क्षयात् । यद्यपि सर्वस्यैवापत्यस्य नाशस्तथापि पुत्रस्य प्राधान्यात् पुत्रघ्नीति व्यपदेशः । पित्तलया सह पञ्च पित्तजाः । दाहादिरन्यासामुपलक्षणं, तेन नीलपीतासितार्तवा च भवतीत्यर्थः । यदुक्तमन्यत्र,—"व्यापल्लवणकट्वम्लक्षाराद्यैः पित्तजा भवेत् । दाहपाकज्वरोष्णार्ता नीलपीतासितार्तवा"—इति आद्यास्विति रक्तक्षया-वामिनी-प्रस्रंसिनी-पुत्रघ्नीषु ॥ ५–७ ॥

भा० टी०—जिस योनि से दाह के साथ अधिक रक्त निकलता है उसे लोहितक्षया कहते हैं । जिस योनि से मैथुन में रज, वीर्य और वात साथ निकलता है उसे वामिनी कहते हैं । मर्दित होने से योनि बाहर निकल जाती है और बच्चा पैदा होते समय तकलीफ होती है ऐसे योनि को प्रस्रंसिनी कहते हैं । रक्त के क्षीण होने से गर्भ स्थिर हो २ कर गिर जाय तो उसे पुत्रघ्नी कहते हैं । योनि में दाह पाक हो, ज्वर आ जाय तो यह पित्तदूषित समझी जाती है । ऊपर के चारों प्रकार के योनि रोग में पित्त अधिक होने से पित्त के लक्षण अधिक होते हैं ॥ ५–७ ॥

अथात्यानन्दादिश्लैष्मिकयोनिव्यापदां लक्षणानि ।

श्लैष्मिका आह—

अत्यानन्दा न सन्तोषं ग्राम्यधर्मेण गच्छति ।
कर्णिन्यां कर्णिका योनौ श्लेष्मासृग्भ्यां प्रजायते ॥ ८ ॥
मैथुनेऽचरणा पूर्व पुरुषादतिरिच्यते ।
बहुशश्चातिचरणा तयोर्बीजं न विन्दति ॥ ९ ॥
श्लेष्मला पिच्छिला योनिः कण्डूग्रस्ताऽतिशीतला ।
चतसृष्वपि चाद्यासु श्लेष्मलिङ्गोच्छ्रयो भवेत् ॥ १० ॥

( सु० उ० अ० ३८ )

म०—अत्यानन्देत्यादि । ग्राम्यधर्मेण=मैथुनेन । कर्णिन्यां कर्णिकेति कर्णिका=मांसकन्दाकारग्रन्थिः । मैथुनेऽचरणा पूर्वं पुरुषादतिरिच्यते इति अचरणा सम्यङ्मैथुनाचरणात् पूर्वं=प्रथमं,पुरुषादतिरिच्यते=विरमाति, तेन बीजं न गृह्णाति । अत्र अचरणाशब्देनोपचारात् तद्वती स्त्री भण्यते । बहुशश्चातिचरणेति बहुशो मैथुनाचरणादतिचरणा सा च श्लेष्मजनितकण्डूभिराजगेव ( ? ) बहुमैथुनाचरणाद्बीजं न धत्ते । अत उक्तम्—तयोर्बीजं न विन्दतीति।—तयोरिति अचरणातिचरणयोः श्लेष्मलायातिशीतलेत्युपलक्षणम्, न वेदनादिकमपि ज्ञेयम् । तथाच तन्त्रान्तरे,—"कफोऽभिष्यन्दिभिर्वृद्धो योनिं चेद् दूषयेत् स्त्रियाः । स कुर्यात् पिच्छिलां शीतां कण्डूग्रस्तां सवेदनाम्"—इति ॥ ८-१० ॥

भा० टी०—कितना ही अधिक मैथुन किया जाय स्त्री को सन्तोष न हो तो वह योनि अत्यानन्दा कहलाती है। कफ और रक्त से योनि में एक गाँठ हो जाती है उसे कर्णिनी कहते हैं। मैथुन के समय स्त्री यदि पुरुष से पहिले स्खलित हो जाय तो उसे अचरणा योनि कहते हैं। यदि मैथुन में स्त्री बार२ स्खलित हो तो उसे अतिचरणा कहते हैं। जो योनि पिच्छिल, ( गीली ) ठंडी हो और उसमें खुजली उठे तो उसे कफदूषित समझना चाहिए। ऊपर के चारो योनि रोग में कफ के लक्षण होते हैं ॥ ८-१० ॥

---

१ तयोर्बीजं न विन्दतीत्यनेन दम्पत्योर्यदा रतिसम्भोगसुखं समकालं स्यात्तदा बीजं गृह्णाति नान्यथा इति सूच्यते।

अथ सान्निपातिकानां योनिव्यापत्तीनां लक्षणानि ।

सान्निपातिका आह—

अनार्तवाऽस्तनी षण्डी खरस्पर्शा च मैथुने ।
अतिकायगृहीतायास्तरुण्यास्त्वण्डली भवेत् ॥ ११ ॥
विवृता च महायोनिः सूचीवक्त्राऽतिसंवृता ।
सर्वलिङ्गसमुत्थाना सर्वदोषप्रकोपजा ॥ १२ ॥
चतसृष्वपि चाद्यासु सर्वलिङ्गोच्छ्रयो भवेत् ।
पञ्चासाध्या भवन्तीह योनयः सर्वदोषजाः ॥ १३ ॥
(सु० उ० अ० ३८)

इति श्रीमाधवकरविरचिते माधवनिदाने योनिव्यापन्निदानं समाप्तम् ॥

म०—अनार्तवेत्यादि । अनार्तवा=रजःशून्या । अस्तनी=[illegible] । अति-कायगृहीतायाः=महामेहनेन गृहीतायाः । अण्डली=अण्डवन्निःसृता योनिः [illegible]-महायोनिः अतिविवृतमुखी । सूचीवक्त्रा=अतिसंवृता [illegible] । सर्वलिङ्गसमुत्थानेति सर्वदोषलिङ्गानां समुत्थानं यत्र सा तथा अन्ये [illegible]-पसमुत्थाना सर्वदोषहेतुजेत्यर्थः । चरकोक्ता अधिका रक्तयोन्यादयः [illegible]-नामदूरान्तरत्वेनावबोद्धव्याः ॥ ११-१३ ॥

इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायां योनिव्यापन्निदानं [illegible] ॥

भा० टी०—योनि से रज न निकले मैथुन के समय [illegible] और स्त्री का स्तन बहुत छोटा हो तो उसे षण्ढी कहते हैं। छोटे [illegible] में बहुत बड़ा इन्द्रिय वाला पुरुष मैथुन करे तो योनि [illegible] जाती है उसे अण्डली कहते हैं। जिस योनि का छिद्र बड़ा होता है उसे महायोनि कहते हैं। जिस योनि का छिद्र बहुत छोटा होता है उसे सूचीवक्त्रा कहते हैं। जिसमें त्रिदोष के सब लक्षण हों उसे त्रिदोषकृत समझना चाहिए। [illegible] प्रकार के योनि रोग में त्रिदोष का लक्षण होता है। ये पांचों योनि रोग [illegible] दोषों के कोप से होते हैं, असाध्य हैं ॥ ११-१३ ॥

इति श्रीहरिनारायणशर्म्मवैद्यकृतायां [illegible]-
भाषाटीकायां योनिरोगनिदानम् ।

## अथ योनिकन्दनिदानम् ।

(Vaginal Polypus ) वेजाइनल पालिप्स

### अथ योनिकन्दाख्यरोगस्य सम्प्राप्तिः ।

योन्याश्रयत्वात् योनिकन्दानिदानमाह—

दिवास्वप्नादतिक्रोधाद् व्यायामादतिमैथुनात् ।
क्षताच्च नखदन्ताद्यैर्वाताद्याः कुपिता यदा ॥ १ ॥
पूय-शोणित-संकाशं निकुचाकृतिसंनिभम् ।
जनयन्ति यदा योनौ नाम्ना कन्दः स योनिजः ॥ २ ॥

( सु० उ० अ० ८ )

म०—दिवास्वप्नादित्यादि । नखदन्ताद्यैरित्यत्रादिशब्दात् कण्टकादिपरिग्रहः । वाताद्याः कुपिता इति यथानिदानं प्रत्येकं वातादयः कुपिताः । निकुचाकृतिसंनिभमिति वर्तुलमित्यर्थः, अस्यानन्तरं गुडकमिति द्रष्टव्यम्, तेन नपुंसकलिङ्गता सङ्गता भवति । कन्दः प्रायेण जरन्नारीयोनिगतो निकुचाकारो रोगः१ ॥२॥

भा० टी०—दिन में सोना, बहुत क्रोध करना, व्यायाम, अति मैथुन, नाखून, दाँत, काँटा वगैरह से घाव हो जाना, इन सब कारणों से वात आदि तीनों दोष कुपित होकर पीप, और खून के रंग की, वड़हर की सूरत से मिलती जुलती योनि के अन्दर एक गाँठ पैदा कर देते हैं, उसे योनिकन्द कहते हैं ॥ १-२ ॥

### अथ रक्तवातजादिभेदेन लक्षणानि ।

वातजादिभेदेन रूपमाह—

रूक्षं विवर्णं स्फुटितं वातिकं तं विनिर्दिशेत् ।
दाह-राग-ज्वर-युतं विद्यात् पित्तात्मकं तु तम् ॥ ३ ॥
नीलपुष्पप्रतीकाशं कण्डूमन्तं कफात्मकम् ।
सर्वलिङ्गसमायुक्तं सान्निपातात्मकं विदुः ॥ ४ ॥

इति श्रीमाधवकरविरचिते माधवनिदाने योनिकन्दनिदानं समाप्तम् ।

म०—रूक्षमित्यादि । नीलपुष्पप्रतीकाशानि अतसीकुसुमवर्णम् । कफजेऽपि नीलता व्याधिप्रभावादेव, अन्ये तु पैत्तिकलक्षण एव पठन्ति, योग्यत्वात् ॥ ३ ॥ ४ ॥

इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायां योनिकन्दनिदानं समाप्तम् ।

भा० टी०—यदि वह गाँठ रूखी, बदरंग और फटी हो तो उसे वातज समझना चाहिए । दाह, लाल, ज्वर हो तो पित्तज, अतसी के फूल के समान नीला और खुजलीदार हो तो कफज और तीनों दोषों के लक्षण मिलें तो सन्निपातज समझना चाहिए ॥ ३-४ ॥

इति श्रीहरिनारायणशर्म्मवैद्यकृतायां निदानदीपिकायां रुग्विनिश्चय-भाषाटीकायां योनिकन्दनिदानम् ।

## अथ मूढगर्भ निदानम् ।

( Difficult Labour ) डिफिकल्टलेबर

## अथ गर्भपातस्य निदानपूर्विका सम्प्राप्तिः ।

( Abortion ) अबार्शन

योनिस्थानविकारानुवृत्तेः स्त्रीरोगनिदानारम्भः । तत्र गर्भपातनिदानमाह—

**भयाभिघातात् तीक्ष्णोष्णपानशननिषेवणात् ।**
**गर्भे पतति रक्तस्य सशूलं दर्शनं भवेत् ॥ १ ॥**

म०—भयाभिघातादित्यादि । एतच्चोपलक्षणं, तेनान्येऽपि स्त्रूक्ष्णतीक्ष्ण ग्राम्यधर्म-यान-वाहन पतन-स्खलनादयो बोद्धव्याः । पततीति संस्रमाने, तेन स्राव-पातयोरपि सशूलं रक्तदर्शनं भवति, एतत्तु पूर्वरूपमिति दर्शयति ॥ १ ॥

भा० टी०—डर जाना, चोट लगना, तेज गर्म चीजें खाना पीना, मैथुन, दौड़ना, तेज सवारी पर चढ़ना. इन सब कारणों से गर्भपात होता है । गर्भपात होने के पहले दर्द के साथ योनि से खून बहता है ॥ १ ॥

### अथ गर्भ-विद्रव-पातयोः कालभेदाद् भेदः ।

एतयोः कालभेदमाह—

**आचतुर्थाव ततो मासात् प्रस्रवेद् गर्भविद्रवः ।**
**ततः स्थिरशरीरस्य पातः पञ्चमषष्ठयोः ॥ २ ॥**

म०-आचतुर्थादित्यादि । गर्भविद्रव इति अततिघनावयवत्वेन विशेषण, द्रवरूपतया गर्भविद्रवो भण्यते; स्रावो नातिघनत्वात्, पातस्तु घनत्वात् । यत्तु भोजेऽभिहितम्,-"आतृतीयात्ततो मासाद् गर्भः स्रवति शोणितम् । ऊर्ध्वं संघातभूतस्तु गर्भः पतति योषिताम्"-इति । संघातभूतः कोमलाङ्गः, पिण्डितावस्थ इत्यर्थः । अतः सुश्रुते चतुर्थमासेऽप्यदृढत्वात् स्रावः कथितः । स्थिरशरीरस्येति कठिनशरीरावयवस्य । पञ्चमषष्ठयोरिति सप्तमे अनुगुणजनने जीवदर्शनायोक्तम्, विगुणजननं तु सप्तमादिमासेष्वपि गर्भपातः । अन्ये तु पञ्चमषष्ठयोरेव पातः सप्तमादिषु दोषवैगुण्याद् विप्रसव इति आचार्यप्रामाण्याद् व्यवहाराच्च मन्यन्ते ॥ २ ॥

भा० टी०—चार मास तक गर्भ वहुत कड़ा नहीं रहता इससे चार महीना तक गर्भ द्रव-खून की सूरत में वहता है । और वाद चार महीने के गर्भ कुछ कड़ा हो जाता है इससे पाँचवें और छठवें महीने में गर्भ लोथड़ा की सूरत में गिरता है इस लिए चार महीना तक गर्भस्राव होता है और वाद गर्भपात होता है । सातवें महीने में पैदा हुआ गर्भ जी जाता है और आठवें का प्राय: नहीं जीता ॥२॥

### अथ गर्भस्याकालपाते सहेतुकं निदर्शनम् ।

गर्भस्याकालपाते निदानपूर्वकं दृष्टान्तमाह—

**गर्भोऽभिघातविषमाशनपीडनाद्यैः ।**
**पक्वं द्रुमादिव फलं पतति क्षणेन ।**

म०-गर्भोऽभिघातेत्यादि । पक्वं द्रुमादिवेति दृष्टान्तेनैव दर्शयति, तथा वृन्तलग्नं पक्वफलमभिघातेनाकाल एव पतति, तथोक्तहेतुभिरकाले गर्भपातः ॥—

भा० टी०—जैसे पका फल ढेला लगने से या हवा से पेड़ से टपक पड़ता है उसी प्रकार गर्भ भी चोट लगने से अंडवंड खाने पीने से या किसी प्रकार दवाव पड़ने से वे वख्त तुरन्त गिर पड़ता है ।

### अथ मूढगर्भस्य निदानानि ।

( Difficult Labour ) डिफिकल्टलेवर

उचितप्रसवकाले यथा मूढो गर्भः स्यात्तदाह—

**मूढः करोति पवनः खलु मूढगर्भं**
**शूलं च योनिजठराब्दिद मूत्रसङ्गम् ॥ ३ ॥**

म०—मूढः करोतीत्यादि । मूढो=व्यासक्तगतिः, शूलं च योनिजठरादिषु "करोति" इति शेषः; मूत्रसंगमित्यत्र करोतीति संबध्यते ॥ ३ ॥

भा० टी०—प्रसव के समय वायु के प्रकोप से गर्भ योनि में अटक जाता है, पेट, योनि और कमर में दर्द होता है, पेशाब रुक जाता है । इसे मूढगर्भ कहते हैं ॥ ३ ॥

अथ मूढगर्भस्याष्टौ गतयः ।

( Presentations )

त्रिगुणानिलत्वादसंख्येयत्वेऽपि विशिष्टा अष्टौ गतीराह—

> भुग्नोऽनिलेन विगुणेन ततः स गर्भः
> संख्यामतीत्य वहुधा समुपैति योनिम् ।
> द्वारं निरुध्य शिरसा जठरेण कश्चित्
> कश्चिच्छरीरपरिवर्तितकुब्जदेहः ॥ ४ ॥
> एकेन कश्चिदपरस्तु भुजद्वयेन
> तिर्यग्गतो भवति कश्चिदवाङ्मुखोऽन्यः ।
> पार्श्वापवृत्तगतिरेति तथैव कश्चि-
> दित्यष्टधा गतिरियं ह्यपरा चतुर्धा ॥ ५ ॥

भुग्नोऽनिलेनेत्यादि । भुग्नो=विगुणीकृतः । बहुधेति कथितप्रकारादप्यधिकं दर्शयति । द्वारं निरुध्य शिरसेत्येकः प्रकारः, शिरसा विपुलेन द्वारं=योनिमुखं पिधाय लग्नो भवतीत्यर्थः । जठरेण कश्चिदित्यपरः, जठरेणोदरेण योनिद्वारं पिधाय सक्तो भवतीत्यर्थः । कश्चित् शरीरपरिवर्तितकुब्जदेह इति शरीरपरिवर्तनेन कुब्जदेहः कश्चित् सक्तो भवति, अनेनानातुग्नस्य ग्रहणम्, ग्रहणको परिग्रहः । एकेनेति वाहुना, अयं चतुर्थः । तिर्यग्गत इति वर्तमानः । कश्चिदवाङ्मुखोऽन्य इति ग्रीवाभङ्गादधः संलग्नः । पार्श्वापवृत्तगतिरिति पार्श्वभङ्गेन विगुणीकृतः पार्श्वेनस इति यावत् । एतीति स्वस्थानादपैति, तथैवेति कुब्जावनतः सन् । सुश्रुतेऽप्यष्टधा गतिरेव पठ्यते । यथा—"कश्चिद्द्वाभ्यां सक्थिभ्यां योनि-

मुखं प्रपद्यते, कश्चिदाभुग्नैकसक्थिरेकेन सक्थ्ना, कश्चिदाभुग्नसक्थिशरीरः स्फिग्देशेन तिर्यगागतः,कश्चिदुदर-पृष्ठपार्श्वानामन्यतमेन योनिद्वारं पिधायावतिष्ठते, अन्तः पार्श्वापवृत्तशिराः कश्चिदेकेन बाहुना, कश्चिदाभुग्नशिरा बाहुद्वयेन, कश्चिदाभुग्नमध्यो हस्त-पाद-शिरोभिः,कश्चिदेकेन सक्थ्ना योनिमुखमभिपद्यते अपरेण पायुम्" ( सु. नि. स्था. अ. ८ )-इति ॥ ४-५ ॥

भा० टी०—बाद कुपित-बिगड़े हुए वायु के द्वारा गर्भ बिगड़ कर अनगिनती तरह से योनि द्वार में अटक जाता है उनमें ८ प्रकार मुख्य है। किसी का शिर, किसी का पेट, किसी का शरीर उलटा होकर कूबड़ की सूरत में अटक जाता है। किसी की एक बाहु, किसी का दोनों बाहु अटक जाता है। कोई २ गर्भ नीचे मुह कर तिरछे अटका रहता है और किसी का पसवाड़ा अटक जाता है। इस प्रकार आठ तरह से गर्भ का अटकना देखा जाता है ॥ ५ ॥

अथापरासु चतुर्विधगतिषु संकीलकादीनां लक्षणानि ।

इत्यष्टविधा गतीः प्रदर्श्य चतुःप्रकारेण ये गतिविशेषाः कथितास्तानाह—

संकीलकः[1] प्रतिखुरः परिघोऽथ बीज-
स्तेषूर्ध्व-बाहु-चरणैः शिरसा च योनिम् ।
सङ्गी च यो भवति कीलकवत् स कीलो
दृश्यैः खुरैः प्रतिखुरं[1] स हि कायसङ्गी ।
गच्छेद् भुजद्वयशिराः स च बीजकाख्यो[2]
योनौ स्थितः स परिघः[3] परिघेण तुल्यः ॥ ६ ॥

म० संकीलक इत्यादि । सम्यक् कीलवत् संकीलकः, स्वार्थे कन् । तेनोर्ध्व-बाहु-चरण-शिरोभिः कीलकवल्लग्नो योन्यां संकीलकः । पृष्ठेन योन्यां तथैतद्विपरीतेन दृश्यैः हस्त-पाद-शिरोभिः प्रतिखुरः, खुरसाधर्म्यात्; खुरशब्देन हस्तपादावुच्येते । गच्छेद् भुजद्वयशिरा इति भुजद्वयोपहितं शिरो यस्य स तथाभूतः सन् यो गच्छेत् स बीजकः कायसङ्गी । भोजेऽप्येता गतयः पठ्यन्ते ।

---

१ संकीलक=Vertex वरटेक्स

२प्रतिखुरक=Hands,३बीजक=Head Willothlaw,हेडविलोथ्ला४परिघ=Transverse,ट्रान्सवर्स

तथाहि,—"ऊर्ध्व-बाहु-शिरः-पादो रुन्ध्याद् योनिमुखं तु यः । कीलवत्प्र-स्थितया स च कीलकसंज्ञितः ॥ अधस्तात् पार्श्वतो वापि नैवाकुञ्चितोऽपि वा । यो निःसृत्य मुखं योनेर्ज्ञेयः प्रतिखुरस्तु सः । योनिद्वारमनु निर्गच्छेद् यः स्वकः सशिरोभुजः । तमाहुर्बीजकं नाम मूढगर्भचिकित्सकाः । योनिमावृत्य यस्तिष्ठेत् । परिघो गोपुरं यथा । तथाऽन्तर्गर्भमायान्तं विद्यात् परिघसंज्ञितम्"—इति ॥ ६ ॥

भा० टी०—गर्भ के अटकने का चार प्रकार और भी होता है—१ कीलक, २ प्रति खुर, ३ बीजक, ४ परिघ। इनमें जो गर्भ हाथ पैर और शिर ऊपर करके कील की तरह अटकता है उसे कीलक कहते हैं। जिस गर्भ का हाथ पैर योनि के बाहर निकला हुआ देख पड़ता है और सब अङ्ग भीतर अटका रहता है उसे प्रतिखुर कहते है। जो गर्भ दोनों हाथों को शिर पर रखे हुए निकलता है उसे बीजक कहते हैं। जो गर्भ परिघ-बेड़ा की तरह योनिद्वार को घेरे रहता है उसे परिघ कहते हैं ॥ ६ ॥

## अथासाध्यमूढ-गर्भ-गर्भिण्योर्लक्षणम् ।

असाध्यमूढगर्भगर्भिण्योर्लक्षणमाह—

**अपविद्धशिरा या तु शीतांगी निरपत्रपा ।**
**नीलोद्गतासिरा हन्ति सा गर्भं स च तां तथा ॥ ७ ॥**

( सु० नि० अ० ८ )

म०-अपविद्धशिरा या त्वित्यादि । अपविद्धशिरा शिरो धारयितुमशक्तेत्यर्थः, अवनतशिरा इति गदाधरः । निरपत्रपा=लज्जाशून्या । नीलोद्गतसिरा इति नीलवर्णा उद्गता सिरा कुक्षौ यस्याः सा तथा । स इति गर्भः ॥ ७ ॥

भा० टी०—जिस मूढगर्भ वाली स्त्री का शिर लटक जाता है—थमता नहीं। शरीर ठंडा हो जाता है। लज्जा बिलकुल नहीं रहती चाहे देह से कपड़ा भी अलग हो जाय अर्थात् बेहोशी रहे, कोख पर नीली २ नसें उभर आवें तो गर्भ और गर्भिणी दोनों नहीं बचते ॥ ७ ॥

## अथ मृतगर्भस्य लक्षणम् ।

मृतगर्भलक्षणमाह—

**गर्भास्पन्दनमावीनां प्रणाशः श्यावपाण्डुता ।**
**भवेदुच्छ्वासपूतित्वं शूनताऽन्तर्मृते शिशौ ॥ ८ ॥**

[ सु० नि० अ० ८ ]

म०—गर्भोऽस्पन्दनमित्यादि । अस्पन्दनं=निश्चलत्वं, जीवतो गर्भस्यावयवचलनं भवति । आवीनां प्रणाशः=प्रसववेदनानामभावः, अथवा आवीशब्देन प्रसवलिङ्गान्युच्यन्ते, तानि च मूत्रकफप्रसेकादीनि, तेषां नाशः । शूनतेति उच्छूनता, अन्तर्गतस्य मूढगर्भस्याध्मापनेन ॥ ८ ॥

भा० टी०—गर्भ न फड़के, प्रसव की पीर बिल्कुल बन्द हो जाय, शरीर और चेहरा स्याह या पीला हो जाय, साँस बदबूदार हो, पेट फूल जाय तो समझना चाहिए कि गर्भ भीतर मर गया है ॥ ८ ॥

अथ गर्भस्य मरणकारणानि ।

तस्यान्तर्गतस्य मानसागन्तुदुःखव्याधिभेदेन द्विविधं मरणहेतुमाह—

**मानसागन्तुभिर्मातुरुपतापैः प्रपीडितः ।**
**गर्भो व्यापद्यते कुक्षौ व्याधिभिश्च निपीडितः ॥ ९ ॥**

म०—मानसागन्तुभिरित्यादि । उपतापैः=दुःखैः ॥ ९ ॥

भा० टी०—माता के मानसिक या आगन्तुक (ऊपरी) दुःख से अथवा स्वयं किसी रोग से पीड़ित होकर गर्भ अन्दर नष्ट होता है ॥ ९ ॥

अथ गर्भिण्या अपराण्यप्यसाध्यलक्षणानि ।

अपरमसाध्यगर्भिणीलक्षणमाह—

**योनिसंवरणं सङ्गः कुक्षौ मक्कल्ल एव च ।**
**हन्युः स्त्रियं मूढगर्भा यथोक्ताश्चाप्युपद्रवाः ॥ १० ॥**

( सु० नि० अ० ८ )

अथ मक्कल्लरोगस्य लक्षणम् ।

( Puerperal Diseases ) प्यूरपेलडिजीज़ेज

**( वायुः प्रकुपितः कुर्यात् संरुध्य रुधिरं स्रुतम् ।**
**सूतायां हृत्-शिरो-बस्ति-शूलं मक्कल्लसंज्ञकम् ॥ ११ ॥ )**

इति माधवकरविरचिते माधवनिदाने मूढगर्भनिदानं समाप्तम् ॥

म०—योनिसंवरणमित्यादि । योनिसंवरणम्, तन्त्रान्तरपठितो रोगः । तथाहि,—"वातलान्यन्नपानानि ग्राम्यधर्मं प्रजागरम् । अत्यर्थं सेवमानाया गर्भिण्या योनिमार्गगः ॥ मातरिश्वा प्रकुपितो योनिद्वारस्य संवृतिम् । कुरुते रुद्धमार्गत्वात् पुनरन्तर्गतोऽनिलः ॥ निरुणद्ध्याशयद्वारं पीडयन् गर्भसंस्थितिम् । निरुद्धवदनोच्छ्वासो गर्भश्चाशु विपद्यते ॥ पश्चात् संवृतद्वारां नाशयत्याशु गर्भिणीम् । योनिसंवरणं विद्याद् व्याधिमेनं सुदारुणम् ॥ अन्तकप्रतिमं घोरं नारभेत चिकित्सितम्" इति । सङ्गः कुक्षाविति योनिसंवरणे प्रतिनिवृत्तो वायुर्गर्भाशयं यदा निरुणद्धि तदा गर्भः कुक्षौ सक्तो भवति स उच्यते सङ्गः कुक्षाविति । मक्कल्लो=रक्तमारुतजः शूलविशेषः । यद्यपि प्रसूतायाः शूलं मक्कल्लमुक्तं सुश्रुते,—"प्रजातायाश्चोत्तरकालं तीक्ष्णैरविशोधितं रक्तं मक्कल्लं करोति" ( सु. शा. अ. १० )-इति, तथाऽपि प्रजातायामेवेति न नियमोऽप्रजातायाः अपि शूलं मक्कल्लमिति । यथोक्ताश्चाप्युद्रवा इति यथोक्ता ये ये उक्तास्ते पुनराक्षेपकश्वासादयः ॥ १० ॥ ११ ॥

इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायां मूढगर्भनिदानं समाप्तम् ।

भा० टी०—यदि गर्भिणी स्त्री का योनिद्वार एकदम बन्द हो जाय, गर्भ भीतर अटक जाय, योनि, पेड़ू और पेट में रक्त वायु के कोप से मक्कल्ल नामक शूल हो, आक्षेपक, श्वास, ज्वर आदि उपद्रव खड़े हो जायँ तो समझना चाहिए कि गर्भिणी नहीं बचेगी ॥ प्रसव होने के बाद यदि भीतर का मवाद खून नहीं निकलता तो वायु उसे रोक कर हृदय, शिर और पेड़ू में दर्द पैदा कर देता है उसे मक्कल्ल शूल कहते हैं ॥ १० ॥ ११ ॥

इति श्रीहरिनारायणशर्मवैद्यकृतायां रत्ननिरूपणभाषाटीकायां
मूढगर्भनिदानम् ।

## अथ सूतिकारोगनिदानम् ।

( After-Pains ) आफ्टर पेन्स

### अथ सूतिकारोगस्य लक्षणम् ।

क्रमप्राप्तत्वात् सूतिकारोगनिदानारम्भः—

अङ्गमर्दो ज्वरः कम्पः पिपासा गुरुगात्रता ।
शोथः शूलातिसारौ च सूतिकारोगलक्षणम् ॥ १ ॥

म०—अङ्गमद इत्यादि । सूतिकारोगलक्षणमिति सूतिकारोग एव लक्षणम्, अङ्गमर्दादिव्यतिरिक्तस्य रोगस्यानभिधानात् । एतेऽङ्गमर्दादयः प्रायेण सूतिकाया भवन्तः सूतिकारोगत्वेन लक्ष्यन्ते इत्यर्थः ॥ १ ॥

भा० टी०—अङ्गमर्द, ज्वर, प्यास, शरीर का काँपना, शरीर भारी मालूम होना, शरीर में शोथ होना, अतिसार, ये सब रोग प्रायः बच्चा होने के बाद-प्रसूता स्त्रीको पैदा होते हैं इसलिए इनका नाम सूतिका रोग होता है ॥ १ ॥

### अथ सूतिकारोगस्य हेतवः ।

सूतिकारोगनिदानमाह—

मिथ्योपचारात् संक्लेशाद् विषमाजीर्णभोजनात् ।
सूतिकायाश्च ये रोगा जायन्ते दारुणास्तु ते ॥ २ ॥
ज्वरातीसारशोथाश्च शूलानाहबलक्षयाः ।
तन्द्राऽरुचि-प्रसेकाद्याः कफवातामयोद्भवाः ॥ ३ ॥
कृच्छ्रसाध्या हि ते रोगाः क्षीण-मांस-बलाग्नितः ।
ते सर्वे सूतिकानाम्ना रोगास्ते चाप्युपद्रवाः ॥ ४ ॥

इति श्रीमाधवकरविरचिते माधवनिदाने सूतिकारोगनिदानं समाप्तम् ।

म०—मिथ्येत्यादि-संक्लेशादिति संक्लिश्यते उत्क्लिश्यते दोषोऽनेनेति संक्लेशो=दोषजनकमन्नम् । विषमाजीर्णभोजनादिति विषमभोजनादजीर्णभोजनाच्च। ज्वरातीसारादीनामङ्गमर्दादिभ्यः पृथक् पुनरुपादानं रोगाधिक्यं कृच्छ्रत्वमुपद्रवत्वं च ख्यापयितुम् । कफवातमयोद्भवा इति तन्द्रारुचिप्रसेकाद्या इत्यस्य विशेषणं मन्यन्ते केचित् अन्ये सर्वस्य ज्वरातिसारादेः । कफवातजे विकारे सति येषामुद्भवस्ते कफवातामयोद्भवाः ज्वरातीसारादयः कृच्छ्रसाध्या इत्यर्थः । ते सर्वे सूतिकानाम्नेति ते ज्वरातीसारादयः सर्वे सूतिकाभवत्वेनाश्रयाश्रितयोरभेदोपचारात् सूतिकानाम्नोच्यन्ते; ते चाप्युपद्रवा ते उपद्रवाश्च भवन्ति उक्तानां रोगाणामन्यतमं प्रधानीकृत्य ॥ २-४ ॥

इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायां सूतिकारोगनिदानं समाप्तम् ।

भा० टी०—प्रसव होने पर जिस नियम से प्रसूता को रहना चाहिए उस नियम से न रहे, दोष कारक आहार विहार करना: विषम भोजन, अजीर्णावस्था की हालत में भोजन करना, इन सब कारणों से ज्वर, अतिसार, शोथ, शूल, आनाह, बलनाश, तन्द्रा, अरुचि, प्रसेक आदि कफवातज रोग पैदा हो जाते हैं, जो कि बहुत कष्टदायी होते हैं क्योंकि प्रसूता स्त्री का अग्नि, बल, मांस क्षीण रहता है, इसलिए ऐसी हालत में इन रोगों का प्रकट होना कृच्छ्रसाध्य होता है, और इन्हें सूतिका रोग कहते हैं, इन्हीं रोगों में जो अधिक प्रबल हो जाता है वह उपद्रव होता है ॥ २-४ ॥

## अथ स्तनरोगनिदानम् ।

( Mammary Inflamation ) मेमरी इन्फ्लेमेशन

### अथ स्तनरोगस्य सम्प्राप्तिः ।

सूतिकारोगाधिकारात् स्तनरोगा उच्यन्ते । पारिभाषिकस्तनरोगसम्प्राप्तिमाह-

**सक्षीरौ वाऽप्यदुग्धौ वा प्राप्य दोषः स्तनौ स्त्रियाः ।**
**प्रदूष्य मांसरुधिरं स्तनरोगाय कल्पते ॥ १ ॥**

म०-सक्षीरौवाऽपीत्यादि । सक्षीरौ गर्भवत्याः, अदुग्धौ वेति दोषदायोगेन प्रसूतायाः, स्तनौ प्राप्येति विवृतधमनीमुखेनाविश्य. स्तनरोगशब्देन स्तनरोग इति प्रसिद्धो रोग उच्यते ॥ १ ॥

भा० टी०—गर्भवती स्त्री के स्तनों में दोष कुपित होकर वहां के मांस और रुधिर को खराब कर स्तनरोग पैदा कर देते हैं ॥ १ ॥

### अथास्यातिदेशिकं लक्षणम् ।

तेषां वातपित्तकफसन्निपातागन्तुजानामतिदेशेन लक्षणमाह—

**पञ्चानामपि तेषां हि रक्तजं विद्रधिं विना ।**
**लक्षणानि समानानि बाह्यविद्रधिलक्षणैः ॥ २ ॥**

इति श्रीमाधवकरविरचिते माधवनिदाने स्तनरोगनिदानं समाप्तम् ।

म०-पञ्चानामपीत्यादि । एतत् सुबोधम् । आगन्तुस्तनरोगोऽभिघातेन शल्येन च । रक्तजस्यासंभवो व्याधिस्वभावात् ॥ २ ॥

इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायां स्तनरोगनिदानं समाप्तम् ।

भा० टी०—स्तन रोग पाँच प्रकार का होता है-१ वातज, २ पित्तज, ३ कफज, ४ सन्निपातज, ५ आगन्तुज । इनके वे ही लक्षण होते हैं जो कि वाह्य विद्रधि के रक्तज स्तनरोग स्वभावतः नहीं होता ॥ २ ॥

इति श्रीहरिनारायणशर्म्मवैद्यकृतायां निदानदीपिकायां रुग्विनिश्चय-भापाटीकायां स्तनरोगनिदानम् ।

## अथ स्तन्यदुष्टिनिदानम् ।

( Diseased Milk ) डिजीज्ड मिल्क

अदृश्यस्यापि स्तन्यस्य प्रसिद्धोपमानेन प्रवर्तने हेतुं दर्शयन्नाह—

**विशंस्तेष्वपि गात्रेषु यथा शुक्रं न दृश्यते ॥**
**सर्वदेहाश्रितत्वाच्च शुक्रलक्षणमुच्यते ॥ १ ॥**

भा० टी०—जिस प्रकार सब शरीर काट डालने पर भी वीर्य किसी एक खास जगह नहीं देख पड़ता, क्योंकि वह सब शरीर भर में व्याप्त रहता है उसी प्रकार स्तन को भी काट डाला जाय तो उसमें दूध नहीं दिखलाई पड़ता क्योंकि दूध सब स्तन भर में व्याप्त रहता है ॥ १ ॥

शुक्रदृष्टान्तेन स्तन्यस्याभ्यन्तरदर्शनं प्रतिपाद्य तेनैव दृष्टान्तेन वहिः प्रवर्तनं प्रतिपादयन्नाह—

**तदेव चेष्टयुवतेर्दर्शनात् स्मरणादपि ॥**
**शब्दसंश्रवणात् स्पर्शात् संहर्षाच्च प्रवर्तते ॥ २ ॥**
**सुप्रसन्नं मनस्तत्र हर्षणे हेतुरुच्यते ॥**
**आहाररसयोनित्वादेवं स्तन्यमपि स्त्रियाः ॥ ३ ॥**

भा० टी०—वही वीर्य मनचाही प्यारी स्त्री के देखने पर, या स्मरण करने पर अथवा उसकी आवाज सुन पड़ने पर या उसके साथ स्पर्श होने पर, मैथुन की इच्छा होने पर निकल पड़ता है। जितना ही मन भीतर से प्रसन्न-(खुश) होता है उतना ही मनुष्य को मैथुन में जोश होता है और जोश होने से ही वीर्यपात अधिक होता है वीर्य और दूध, दोनों ही भोजन के रस से तयार होते हैं और बाहर निकलते हैं ॥३॥

तदेवापत्यसंस्पर्शाद् दर्शनात् स्मरणादपि ॥
ग्रहणाच्च शरीरस्य शुक्रवत् संप्रवर्तते ॥
स्नेहो निरंतरस्तत्र प्रसवे हेतुरुच्यते ॥ ४ ॥

भा० टी०—वीर्य तो हर्ष ( मैथुन की प्रबल इच्छा ) से निकलता है इस भांति सन्तान के देखने, स्पर्श होने, स्मरण होने और सन्तान द्वारा स्तन पकड़ने से बाहर निकलता है, परन्तु स्त्री के हृदय में शुद्ध स्नेह का होना दूध के निकलने में खास कारण है ॥ ४ ॥

अथ स्तन्यदुष्टेःसम्प्राप्तिः ।

स्तनाश्रितत्वेन स्तन्यदुष्टिमाह—

गुरुभिर्विविधैरन्नैर्दुष्टैर्दोषैः प्रदूषितम् ।
क्षीरं मातुः कुमारस्य नानारोगाय कल्पते ॥ ५ ॥

म०—गुरुभिर्विविधैरित्यादि । गुरुभिरन्नैर्हेतुभूतैर्ये दुष्टा दोषास्तैःप्रदूषितम्॥५॥

भा० टी०—अनेक प्रकार के गुरुपाकी अन्नों के सेवन से दोष कुपित होकर स्त्री का दूध बिगाड़ देते हैं, उस बिगड़े दूध के पीने से लड़कों को अनेक रोग पैदा हो जाते हैं ॥ ५ ॥

अथ स्तन्यदुष्टेर्लक्षणानि ।

स्तन्यदुष्टिलक्षणमाह—

कषायं सलिलप्लावि स्तन्यं मारुतदूषितम् ।
कट्वम्ललवणं पीतराजीमत् पित्तसंज्ञितम् ॥ ६ ॥
कफदुष्टं घनं तोये निमज्जति सपिच्छलम् ।
द्विलिङ्गं द्वन्द्वजं विद्यात् सर्वलिङ्गं त्रिदोषजम् ॥ ७ ॥

म०—कषायमित्यादि । सलिलप्लावीति सलिले मधुत्वात् प्लवनशीलत्वात् सलिलप्लावि । एतदुपलक्षणं, तेन तनुत्वाद्यपि बोद्धव्यम् । कट्वम्ललवणमिति, कटु=तिक्तं तिक्तेऽपि कटुशब्दप्रवृत्तेरिति वदन्ति । पीतराजीमदिति पीतरेखायु-क्तम्, तत्रापि नीललोहिताश्च राज्यो ज्ञेयाः । निमज्जति पिच्छलमिति । संहि-तमित्यत्र संयुतमिति पाठान्तरम् । तोये निमज्जति गुरुत्वात् । अतिमात्रं यदि

बोध्यम् । प्रसन्नस्य तु साधारणं मधुरपाण्डुत्वम् । अभिघातेनापि स्तन्यं दुष्टं सम्भवत्येव, किन्तु तस्य वातिकस्तन्यलक्षणैरेव संग्रहणं कर्तव्यम् । स्तन्यस्वरूपं च सुश्रुतेनोक्तम् । तद्यथा,—"रसप्रसादो मधुरः पक्वाहारनिमित्तजः । कृत्स्नदेहात् स्तनौ प्राप्तः स्तन्यमित्यभिधीयते" । ( सु. नि. स्था. अ. १० ) इति ॥ ६–७ ॥

भा० टी०—वायुदूषित दूध पतला, कसैला और पानी पर तैरता है। पित्तदूषित दूध कडुवा, खट्टा, नमकीन और पीली, नीली, लाल रेखायुक्त होता है। कफदूषित दूध गाढ़ा, अधिक मीठा, लबाबदार और पानी में डूब जाता है। दो दोषों के लक्षणों से द्वन्द्वज और तीन दोषों के लक्षणों से त्रिदोषज समझना चाहिए ॥ ६–७ ॥

## अथ विशुद्धस्तन्यस्य लक्षणानि ।

अविकृतस्तन्यमाह—

**अदुष्टं चाम्बुनिक्षिप्तमेकीभवति पाण्डुरम् ।**
**मधुरं चाविवर्णं च प्रसन्नं तत् प्रशस्यते ॥ ८ ॥**

इति श्रीमाधवकरविरचिते माधवनिदाने स्तन्यदुष्टिनिदानं समाप्तम् ॥

म०—अदुष्टमित्यादि । अम्बुनिक्षिप्तमेकीभवति सर्वात्मना जलेन सहैकीभवतीति बोध्यम्, वातादिदुष्टस्याप्येकदेशेनैकीभावोपलम्भात् । अविवर्णमिति अविद्यमानवातादिदुष्टवर्णम् । एतत् समदोषप्रकृतिक्षीरस्य प्रसन्नस्य लक्षणम् । अन्ये त्वविवर्णमित्यत्र नञ् ईषदर्थे, तेन यद् वातादिप्रकृतिवर्णानुविद्धमपि पाण्डुरमल्पदुष्टत्वात् तद् गृह्णन्ति । केचित्तु पाण्डुस्थाने "सर्वशः" इति पठन्ति, तदा सर्वात्मना जलेन सहैकीभवतीति व्यक्तोऽर्थः । अत्र पक्षे अविवर्णमित्यनेनैवादुष्टशुक्लवर्णता ज्ञेया । प्रसन्नं=प्रकृतिस्थम् ॥ ८ ॥

इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायां स्तन्यदुष्टिनिदानं समाप्तम् ॥

भा० टी०—जो दूध पानी में डालने पर पानी के साथ एक होकर मिल जाय, रंग में सफेद हो, स्वाद में मीठा हो, किसी दोष का स्याह, पीला रंग न हो तो वह दूध शुद्ध समझा जाता है ॥ ८ ॥

इति श्रीहरिनारायणशर्मवैद्यकृतायां निदानदीपिकायां रुग्विनिश्चय-भाषाटीकायां स्तन्यदुष्टिनिदानम् ॥

## अथ बालरोगनिदानम् ।

### ( Diseases of Children ) डिजीजेज आफ चिल्ड्रेन

#### अथ वातादिदुष्टस्तन्यपानजातानां बालरोगाणां लक्षणानि ।

बालरोगाणां दुष्टस्तन्येन संभवात् तदनन्तरं नानाह--

वातदुष्टं शिशुः स्तन्यं पिबन् वातगदातुरः ।
क्षामस्वरः कृशाङ्गः स्याद् बद्ध-विड्-मूत्र-मारुतः ॥ १ ॥
स्विन्नो भिन्नमलो बालः कामला-पित्त-रोगवान् ।
तृष्णालुरुष्णसर्वाङ्गः पित्तदुष्टं पयः पिबन् ॥ २ ॥
कफदुष्टं पिबन् क्षीरं लालालुः श्लेष्मरोगवान् ।
निद्रान्वितो जडः शूनवक्त्राक्षश्छर्दनः शिशुः ॥ ३ ॥
द्वन्द्वजे द्वन्द्वजं रूपं सर्वजे सर्वलक्षणम् ।

म०—वातदुष्टमित्यादि । वातगदातुर इति वक्ष्यमाणक्षामस्वरादियुक्तः । तृष्णालुरिति तृष्णावान् । लालालुरिति लालास्रावयुक्तः । छर्दन इति स्तन्यवा न्तिकरः ॥ १—३ ॥—

भा० टी०—वात दूषित दूध पीने से बालक को वात रोग हो जाता है। आवाज मन्द हो जाती है, शरीर कृश हो जाता है। पाखाना पेशाब ठीक तरह से नहीं होता और न हवा ही खुलती है। पित्त दूषित दूध पीने से पसीना ज्यादा निकलता है, दस्त पतले होते हैं। कमल रोग हो जाता है। प्यास लगती है। सब शरीर गर्म रहता है। कफ दूषित दूध पीने से मुह से लार गिरती है कफ के रोग हो जाते हैं— नींद अधिक आती है, शरीर जकड़ा रहता है। मुह और आंख पर सूजन रहती है। वमन होता है। दो दोषों के लक्षणों से द्वन्द्वज और तीनों दोषों के लक्षणों से सर्व दोषज समझना चाहिए ॥ १—३ ॥

#### अथ वक्तुमशक्तस्य बालस्याभ्यन्तरिकदुःखविज्ञानम् ।

शिशोर्वक्तुमक्षमस्यान्तर्गतवेदनाज्ञानोपायमाह—

शिशोस्तीव्रामतीव्रां च रोदनाद् लक्षयेद् रुजम् ॥ ४ ॥
स यं स्पृशेद् भृशं देशं यत्र च स्पर्शनाक्षमः ।

तत्र विद्याद् रुजं, मूर्ध्नि रुजं चाक्षिनिमीलनात् ॥ ५ ॥
कोष्ठे विबन्ध-वमथु-स्तनदंशान्त्रकूजनैः ।
आध्मान-पृष्ठनमन-जठरोन्नमनैरपि ॥ ६ ॥
बस्तौ गुह्ये च विड्-मूत्र-संग-त्रास-दिगीक्षणैः ।
स्रोतांस्यङ्गानि सन्धींश्च पश्येद् यत्नाद् मुहुर्मुहुः ॥ ७ ॥

म०—शिशोरित्यादि । तीव्रां रुजं वहुरोदनात्, अतीव्रामल्परोदनाल्लक्षयेत् ॥ ४–७ ॥

भा० टी०—वालक वतला नहीं सकता कि उसे कहाँ पीड़ा है और वैद्य को पीड़ा की जगह जानना जरूरी है इसलिए ऐसा उपाय वतलाया जाता है जिससे यह मालूम हो कि अमुक स्थान में पीड़ा है । वालक को पीड़ा तेज है या कम, यह वात वालक के रोने से जानी जाती है । अधिक पीड़ा में वालक अधिक रोता है और कम पीड़ा में कम । शरीर में जिस स्थान को वालक अधिक छूता रहे और जहाँ स्पर्श करने से तकलाफ हो उसी जगह पीड़ा समझनी चाहिए । वार२आँख मीचने से मस्तक में, कब्ज, कय, स्तन काटने और आँत में गुड़गुड़ाहट होने से, आध्मान, पीठ के नीचा होने और पेट के फूलने से कोष्ठ ( पेट ) में । पाखाना पेशाव रुक जाने, चिहुँकने और इधर उधर देखने से वस्ति ( पेडू ) और गुदा में पीड़ा का होना समझना चाहिए । वैद्य को चाहिए वालक के स्रोतों अङ्गों और सन्धियों को वारम्वार कोशिश के साथ देखे ॥ ४—७ ॥

### अथ कुकूणकरोगस्य लक्षणम् ।

( Oph thalunda in children ) आफथेलेन्डा इन् चिल्ड्रेन

बालानामेव दुष्टस्तन्यपानाद् वर्त्मरोगमाह—

कुकूणकः क्षीरदोषात् शिशूनामेव वर्त्मनि ।
जायते तेन तन्नेत्रं कण्डूरं च स्रवेन्मुहुः ॥ ८ ॥
शिशुः कुर्याद् ललाटाक्षिकूट-नासा-ऽवघर्षणम् ।
शक्तो नार्कप्रभां द्रष्टुं न वर्त्मोन्मीलनक्षमः ॥ ९ ॥

म०—कुकूणक इत्यादि । कुकूणकः "कोथ" इति ख्यातः । स्रवेन्मुहुरिति पिच्चिटस्रातियुक्तं भवतीत्यर्थः । न वर्त्मोन्मीलनक्षम इति न वर्त्मचालनेपटुः ॥८ ९॥

भा० टी०—दूध की खराबी से बालकों के पलकों में कुकूणक नामक रोग हो जाता है, जिससे आँख में भीतर से खुजली उठती है और लगातार आँसू बहा करता है। बालक अपने हाथ से ललाट, अक्षिकूट और नाक घिसता रहता है। सूरज के घाम की तरफ जरा सा भी नहीं देख सकता। हर दम आँखें बन्द रहती हैं। यह विशेष कर बालकों के ही होता है। हिन्दी में इसे खुथुरू कहते हैं॥ ८—६॥

## अथ पारिगर्भिकस्य लक्षणानि।

( Pining ) पाइनिंग

पारिगर्भिकमाह—

मातुः कुमारो गर्भिण्याः स्तन्यं प्रायः पिबन्नपि।
कासाग्निसाद-वमथु-तन्द्रा-कार्श्यारुचि-भ्रमैः॥ १०॥
युज्यते कोष्ठवृद्ध्या च तमाहुः पारिगर्भिकम्।
रोगं परिभवाख्यं च युञ्ज्यात् तत्राग्निदीपनम्॥ ११॥

म०—मातुरित्यादि। पिबन्नपीति अपिशब्दादपिबन्नपि। तमाहुः पारिगर्भिकमिति पारिगर्भिकोऽहिण्डीति ख्यातः; तस्यैव परिभवाख्य इति नामान्तरम्, बालं परिभवतीति परिभवः, स एव आख्या यस्य तम्। उपशयेनापि तल्लक्षणमाह—युञ्ज्यादित्यादि॥ १०॥ ११॥

भा० टी०—गर्भिणी माता के दूध पीने से बालकों को खांसी, अग्निमान्द्य, वमन, तन्द्रा, कृशता, अरुचि, भ्रम, पेट का फूलना, ये सब रोग पैदा हो जाते हैं, इसे पारिगर्भिक और परिभव भी कहते हैं इस रोग में प्रायः अग्निदीपन औषध देनी चाहिए। विना दूध पीये भी यह रोग हो जाया करता है॥ १०—११॥

## अथ तालुकण्टकस्य लक्षणानि।

( Cellulitus ) सेल्यूलाइटस

तालुकण्टकमाह—

तालुमांसे कफः क्रुद्धः कुरुते तालुकण्टकम्।
तेन तालुप्रदेशस्य निम्नता मूर्ध्नि जायते॥ १२॥

तालुपातः स्तनद्वेषः कृच्छ्रात् पानं शकृद्द्रवम् ।
तृडक्षि-कण्ठा-ऽऽस्य-रुजा ग्रीवादुर्धरता वमिः ॥ १३ ॥

म०—तालुमांस इत्यादि । अस्यैव लक्षणं तालुपात इत्यादि । तालुपात इत्यभ्यन्तरे तालुनोऽधः पातः । कृच्छ्रात् पानमित्यत्र "स्तन्यस्य" इति शेषः । शकृद्द्रवं=भिन्नपुरीषता । ग्रीवादुर्धरता=ग्रीवाया दुःखेन धारणम् । वमिः= स्तन्यस्य वान्तिः ॥ १२ ॥ १३ ॥

भा० टी०—कफ प्रकोप से बालकों को तालुकण्टक रोग हो जाता है। उससे मस्तक में रहनेवाला तालु प्रदेश बैठ जाता है बालक दूध नहीं पीता, पीता है तो बड़ी मुश्किल से, और पतले दस्त आते हैं । प्यास अधिक लगती है। आँख, गला और मुँह में पीड़ा होती है, कय होती है और गर्दन लटकी जाती है ॥ १२—१३ ॥

### अथ महापद्मविसर्पस्य लक्षणानि ।

( Eltretas ) एलट्रटास्

महापद्मनामानं विसर्पमाह—

विसर्पस्तु शिशोः प्राणनाशनो बस्तिशीर्षजः।
पद्मवर्णो महापद्मनामा दोषत्रयोद्भवः ॥ १४ ॥
शङ्खाभ्यां हृदयं याति हृदयाद्वा गुदं व्रजेत् ।

म०—विसर्पस्त्वित्यादि । बस्तिशीर्षज इति बस्तिजः शीर्षजश्च, शीर्षं= शिरः । पद्मवर्णम् इति लोहितपद्मवर्णः । शङ्खाभ्यां हृदयं यातीति शीर्षजः । पद्मपत्रतुल्यवर्णतां मुखतालुनि बहिर्देशे वेति वदन्ति । हृदयाद् गुदं यातीति बस्तिजः, ऊर्ध्वं हृदयं गत्वा गुदं यातीत्यर्थः । अत्र पद्मसवर्णता बस्तिदेशे गुदे च । वाशब्दश्चात्र व्यवस्थितविकल्पवचनः ॥ १४ ॥—

भा० टी०—बालक के बस्ति और शिर में कमल के फूल की पखुड़ी के रंग का लाल महापद्म नामक विसर्प रोग हो जाता है, शीर्षज विसर्प कनपटी से हृदय तक और बस्तिज विसर्प ऊपर हृदय तक जाकर गुदातक फैलता है । यह त्रिदोष के कोप से होता है और प्राणनाशक है ॥ १४ ॥

अथ क्षुद्ररोगोक्ताजगल्ल्यहिपूतनयोर्बालकेषु प्रभाववचनम् ।

अन्यौ द्वौ विकारौ बालानां भवतस्तावाह—

क्षुद्ररोगे च कथिते त्वजगल्ल्यहिपूतने ॥ १५ ॥

म०–क्षुद्रेत्यादि । स्निग्धा सवर्णेत्यादिनाऽजगल्लिका । कण्डूयनाद्व्रिणा-दिनाऽहिपूतना ॥ १५ ॥

भा० टी०—बालकों को अजगली और अहिपूतन रोगभी होते हैं जिनका लक्षण क्षुद्र रोगमें लिख दिया गया है ॥ १५ ॥

अथान्येषामपि रोगाणां बालकेष्वतिदेशः ।

अन्येऽपि विकारा बालानां संभवन्तीत्यतिदेशेन तानाह—

ज्वराद्या व्याधयः सर्वे महतां ये पुरेरिताः ।
बालदेहेऽपि ते तद्वद् विज्ञेयाः कुशलैः सदा ॥१६॥

म०–ज्वराद्या इत्यादि । पुरेरिता इति पूर्वोक्ताः । ते तद्वदिति ते [illegible]-स्तादृशा ज्ञेयाः । कुशलैरिति विज्ञैः ॥ १६ ॥

भा० टी०—बडों को जो ज्वर, अतिसार आदि रोग होते हैं वे रोग बालकों को भी होते हैं । लक्षणों से उन रोगों को विद्वान् वैद्यों को जानना चाहिए ॥ १६ ॥

अथ स्कन्दादिबालग्रहगृहीतानां शिशूनां सामान्यलक्षणानि ।

प्रायेण शौचभ्रंशादिना स्कन्दग्रहादयो नव बालेष्वावेशं कुर्वन्त्यतस्तत्परि-ज्ञानाय सामान्यलक्षणमाह—

क्षणादुद्विजते बालः क्षणात् त्रस्यति रोदिति ।
नखैर्दन्तैर्दारयति धात्रीमात्मानमेव वा ॥ १७ ॥
ऊर्ध्वं निरीक्षते दन्तान् खादेत् कूजति जृम्भते ।
भ्रुवौ क्षिपति दन्तौष्ठं फेनं वमति चासकृत् ॥ १८ ॥
क्षामोऽति निशि जागर्ति शूनाक्षो भिन्न-विट्-स्वरः ।
मांस-शोणित-गन्धिश्च न चाश्नाति यथा पुरा ॥ १९ ॥
सामान्यं ग्रहजुष्टानां लक्षणं समुदाहृतम् ।

म०—त्रासादुद्विजते बाल इत्यादि । एते ग्रहाः पूजार्थं बालान् हिंसन्ति । यदुक्तं सुश्रुते,—"धात्रीमात्रोः प्राक् प्रदिष्टापचारात् शौचभ्रष्टान् मङ्गलाचारहीनान् । त्रस्तान् हृष्टांस्तर्जितान् क्रन्दितान् वा पूजाहेतोर्हिंस्युरेते कुमारान्" ( सु. उ. त. अ. २७ )-इति । उद्विजत इत्युद्विग्नो भवति; उद्विग्नो=विह्वलः,न तु बिभेतीत्यर्थः, त्रस्यतीत्यनेन पौनरुक्त्यप्रसंगात् । कूजत्यार्तनादं करोति । भ्रुवौ क्षिपतीति भ्रूभङ्गं रचयति । दन्तौष्ठमित्यत्र क्षिपतीति संवध्यते । क्षिपति=खादति, धातूनामनेकार्थत्वात् । भिन्नविट्स्वर इति भिन्नविट्=भिन्नशकृत्, भिन्नस्वरः=स्वरभेदवान् । मांसशोणितगन्धिरिति विस्रगन्धिः । न चाश्नाति यथा पुरेति पूर्ववन्न भक्षयतीत्यर्थः ॥ १७-१९ ॥

भा० टी०—गन्दगी से वालकों के शरीर में स्कन्द आदि नव ग्रह प्रवेश करते हैं। पहले ग्रह प्रवेशका सामान्य लक्षण वतलाया जाता है-रहरकर वालक चिहुँक उठताहै, रोने लगता है, डरता है, अपने को और माता को नाखूनों से नोचता है और दाँत काटता है। ऊपर की तरफ देखता रहता है। दाँत कटकटाता है। कँहरता है। जँभाता है। भौं चलाता है। दाँत और ओठ चवाता है। वार२ मुह से फेन निकालता है। दुर्वल हो जाता है। रात में नींद नहीं आती। आँखें सूज जाती हैं। दस्त होते हैं। आवाज वैठ जाती है। मांस और खून की वदवू आती है। जैसे तन्दुरुस्ती की हालत में खाता पीता है वैसे खाना पीता नहीं। इन लक्षणों को देख कर समझना चाहिए कि वालक को ग्रह लगा है ॥१७—१९॥

### अथैषां विशेषलक्षणानि ।

सामान्यलिङ्गमभिधाय विशेषग्रहलिङ्गमाह—

**एकनेत्रस्य गात्रस्य स्रावः स्पन्दनकम्पनम् ॥ २० ॥**
**ऊर्ध्वं दृष्ट्या निरीक्षेत वक्रास्यो रक्तगन्धिकः ।**
**दन्तान् खादति वित्रस्तः स्तन्यं नैवाभिनन्दति ॥ २१ ॥**
**स्कन्दग्रहगृहीतानां रोदनं चाल्पमेव च ।**

म०—एकनेत्रस्येत्यादि । एकनेत्रस्य वामस्य दक्षिणस्य वा स्रावोऽश्रुस्रुतिः प्रभावात्, गात्रस्य स्रावोघर्मयुक्तगात्रतेत्यर्थः। स्पन्दनकम्पनमिति स्पन्दनं= मनाक् चलनम्, कम्पनम्=महता वेगेन वेपनम्, स्पन्दनम्, कम्पनं वा भवतीत्यर्थः। वक्रास्यो=वक्रमुखः। रक्तगन्धिक इत्येतत् सामान्यलक्षणलब्धमप्यतिशयार्थमुक्तम्, एवमन्यत्रापि सामान्यलक्षणे पुनरुक्ते व्याख्येयम् ॥ २० ॥ २१ ॥—

भा० टी०—बाँई या दहिनी एक आँख से आँसू बहा करे, शरीर से पसीना निकले, शरीर थोड़ा या अधिक काँपे, ऊपर की तरफ देखे, मुख टेढ़ा हो जाय, शरीर में रक्त की बदबू आवे, दाँत कटकटाये, चिहुँके, स्तन का दूध न पीवे और थोड़ा २ रोना रहे तो समझना चाहिए कि बालक को स्कन्द ग्रह लगा है ॥ २०—२१ ॥

अथ स्कन्दापस्मारस्य लक्षणानि ।

स्कन्दापस्मारलक्षणमाह—

नष्टसंज्ञो वमेत् फेनं संज्ञावानतिरोदिति ।
पूय-शोणित-गन्धित्वं स्कन्दापस्मारलक्षणम् ॥ २२ ॥

म०—नष्टेत्यादि । नष्टसंज्ञो=मूर्च्छितः सन् फेनं वमति, तथा संज्ञावान् सन्नतिरोदिति ॥ २२ ॥

भा० टी०—बेहोशी हो, फेन निकले और होश होने पर रोवे, शरीर में पीब और खून की बदबू आवे तो स्कन्दापस्मार ग्रह का लक्षण समझना चाहिए ॥ २२ ॥

अथ शकुनीग्रहगृहीतस्य शिशोर्लक्षणानि ।

शकुनीलक्षणमाह—

स्रस्ताङ्गो भयचकितो विहङ्गगन्धिः
सास्रावव्रणपरिपीडितः समन्तात् ।
स्फोटैश्च प्रचिततनुः सदाहपाकै-
र्विज्ञेयो भवति शिशुः क्षतः शकुन्या ॥ २३ ॥

म०—स्रस्ताङ्ग इत्यादि । स्रस्ताङ्ग इति स्रस्तसन्धिबन्ध इत्यर्थः । भयचकित इति भयहेतुर्भयं भयानकमुच्यते, ततश्चकितः, अन्ये भयचकितो [illegible] । विहङ्गगन्धिरिति विहङ्गस्येव गन्धो यस्य स तथा, उपमानाद्धेति [illegible] इत्यः । विहङ्गशब्देन जलचरा मांसादाश्च पक्षिणो गृह्यन्ते [illegible] । हिरण्याक्षेऽप्युक्तम्,—"संस्राव-दाह-पाकार्तश्चित्र स्फोटैर्भयान्वितः । स्रस्ताङ्गो विस्रगन्धिः स्याच्छकुन्या पीडितः शिशुः"—इति । सास्रावव्रणपरिपीडित इति स्फोटैरेव विदीर्णैर्व्रणरूपमापन्नैः परिपीडितः । स्फोटैश्च प्रचिततनुरिति [illegible] स्फोटैर्व्याप्ततनुः । क्षत इत्यभिभूतः ॥ २३ ॥

भा० टी०—शकुनी ग्रह के लगने से सब शरीर ढीला हो जाता और पीड़ा होती है। विना किसी कारण के चिहुँकता है। शरीर में पक्षियों की महक आती है। शरीर भर में नये २ फोड़े निकला करते हैं, वे पकते और बहा करते हैं और उनमें जलन रहा करती है॥ २३॥

## अथ रेवत्यादिबालग्रहगृहीतानां शिशूनां लक्षणानि ।

रेवत्यादिबालग्रहगृहीतस्य लक्षणान्याह—

व्रणैः स्फोटैश्चितं गात्रं पङ्कगन्धं स्रवेदसृक् ।
भिन्नवर्चा ज्वरी दाही रेवतीग्रहलक्षणम् ॥ २४ ॥
अतीसारो ज्वरस्तृष्णा तिर्यक्प्रेक्षणरोदनम् ।
नष्टनिद्रस्तथोद्विग्नो ग्रस्तः पूतनया शिशुः ॥ २५ ॥
छर्दिः कासो ज्वरस्तृष्णा वसागन्धोऽतिरोदनम् ।
स्तन्यद्वेषोऽतिसारश्च अन्धपूतनया भवेत् ॥ २६ ॥
वेपते कासते क्षीणो नेत्ररोगो विगन्धिता ।
छर्द्यतीसारयुक्तश्च शीतपूतनया शिशुः ॥ २७ ॥
प्रसन्न-वर्ण-वदनः सिराभिरभिसंवृतः ।
मूत्रगन्धी च बह्वाशी मुखमण्डिकया भवेत् ॥ २८ ॥
छर्दि-स्पन्दन-कण्ठा-ऽऽस्य-शोष-मूर्च्छा-विगन्धिताः ।
ऊर्ध्वं पश्येद् दशेद्दन्तान् नैगमेयग्रहं वदेत् ॥ २९ ॥
प्रस्तब्धाक्षः स्तनद्वेषी मुह्यते चानिशं मुहुः ।
तं बालमचिराद् हन्ति ग्रहः संपूर्णलक्षणः ॥ ३० ॥

इति श्रीमाधवकरविरचिते माधवनिदाने बालरोगनिदानं समाप्तम् ।

म०—रेवतीग्रहलक्षणमाह—व्रणैरित्यादि । व्रणैः=पुराणैः, स्फोटैरविदीर्णैर्नूतनैः, चितं=व्याप्तम् । गात्रं पङ्कगन्धं स्रवेदसृगिति गात्रमिति कर्तृपदम्, पङ्कगन्धं=शटितकर्दमगन्धम् समासविधेरनित्यत्वादिप्रत्ययो न भवति पूतनालक्षणमाह—अतीसार इत्यादि । ग्रस्त इति गृहीत इत्यर्थः ॥ २४–३० ॥

इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायां बालरोगनिदानं समाप्तम् ।

भा०टी०—रेवती ग्रहके लगने से शरीरभरमें फोड़े निकलते हैं और उनमें कीच-की तरह बू वाला खून बहता है, पतले दस्त होते हैं, ज्वर आता है और मुखमें दाह होता है। पूतना के लगने से अतिसार ज्वर, तृष्णा, निद्रा न [illegible], [illegible] न लगना और चिहुकना, ये लक्षण होते हैं। अन्धपूतना के लगने से [illegible], [illegible], ज्वर, तृष्णा, शरीर में चर्बीली बू आना, अधिक रोना, स्तन न पीना, [illegible], ये लक्षण होते हैं। कांपना, खांसी, कमजोरी, नेत्ररोग, शरीर में बदबू आना, [illegible], [illegible] दस्त, ये सब लक्षण शीतपूतना के लगने से होते हैं। शरीर वर्ण उत्तम और मुख (चेहरा) प्रसन्न, शरीर में नसों का उभड़ आना, शरीर में पेशाब जैसी बू आना, भोजन बहुत करना, ये सब लक्षण मुखमण्डिका के लगने से होते हैं। कंप होना, शरीर काँपना, गला और मुंह सूखना, मूर्च्छा, [illegible], ऊपर की तरफ देखना, दाँत कटकटाना, ये सब लक्षण नैगमेय ग्रह के लगने से होते हैं। बालक को कोई ग्रह लगा हो, यदि आँखें जकड़ी सी रहें, स्तन न पीवे, [illegible] कर बेहोश हो जाय, ग्रह का पूरा २ लक्षण हो तो बालक नहीं बचता॥ २४—३०॥

इति श्रीहरिनारायणशर्म्मवैद्यकृतायां निदानदीपिकायां [illegible] भाषाटीकायां बालरोगनिदानम्।

## अथ विषरोगनिदानम्।

### अथ विषस्य द्वैविध्यम्।

पारिशेष्याद्विषरोगनिदानमुच्यते—

> स्थावरं जङ्गमं चैव द्विविधं विषमुच्यते।
> मूलाद्यात्मकमाद्यं स्यात् परं सर्पादिसंभवम्॥ १॥

म०—स्थावरमित्यादि। विषादजनकत्वाद्विषं, तच्च द्विविधं स्थावरं जङ्गमं च। मूलाद्यात्मकमिति आद्यं=स्थावरं मूलादिरूपं दशविधं, यदुक्तं सुश्रुते "मूलं पत्रं फलं पुष्पं त्वक् क्षीरं सार एव च। निर्यासो धातवश्चैव कन्दश्च दशमः स्मृतः" (सु. क. स्था. अ.)—इति। तत्र क्लीतका-ऽश्वमारक-गुञ्जा-सुगन्ध-गर्गरक-करघाट-विद्युच्छिखा-ऽनन्ता-विजयानीत्यष्टौ मूलविषाणि, विषपत्रिका-लम्बा-सुरदारु-करम्भ=महाकरम्भाणि पञ्चपत्रविषाणि, कुमुद्वती-वेणुका-करम्भ-महाकरम्भ-कर्कोटक-रेणुक-खद्योतक-चर्मरी-भगन्धा-सर्पघाति-नन्दन-सारपाकानि द्वादश फल-विषाणि, वेत्र-कादम्ब-वल्लीज-करम्भ-महाकरम्भाणि पञ्च पुष्पविषाणि, अन्त्र-पाचक-कर्तरीय-शैलेय-करम्भ-नन्दन-करघाटवराटकानि सप्त त्वक्सारनिर्यासविषाणि

विषाणि, कुमुदघ्नी-स्नुही-जालक्षीरीणि त्रीणि क्षीरविषाणि, फेना श्मभस्म-हरितालं[1] च द्वे धातुविषे, कालकूट-वत्सनाभ-सर्षप-कपाल=कर्दमक-वैराटक-मुस्तक-महाविष-प्रपौण्डरीक- मूलक-हलाहल-शृङ्गि-मर्कटकानि त्रयोदश कन्दविषाणि, एतानि प्राण-हराणि, एवं पञ्चपञ्चाशत् स्थावराणि विषाणि भवन्ति । एषां च व्याध-पुलिन्दादि-भ्यो व्यक्तिज्ञानं कर्तव्यम् । परं सर्पादिसंभवमिति परं जङ्गमं, तच्च षोडशाभिधा-नम्-दृष्टि-निःश्वास-दंष्ट्रा-नख-मूत्र-पुरीष-शुक्र-लाला-ऽऽर्तव-मुख-संदंश-पर्दित-गुदा-ऽस्थिपित्त-शूक-शव-भेदात् । पर्दितं=पायुकृतः कुत्सितशब्दः, "पर्द" कुत्सिते शब्दे इत्यस्य प्रयोगात् । तत्र दृष्टिनिःश्वासविषा दिव्याःसर्पाः, भौमाः सर्पा दंष्ट्राविषाः, मार्जार-मकर-व्याघ्रादयो दंष्ट्रा-नख-विषाः, पिच्चिट-कौण्डिन्यादयो मूत्र- पुरीष-विषाः, मूषिकाः=शुक्रविषाः, वृश्चिक-वरटचुचिङ्गटादयो आराविषाः[2], लूता=लालार्तवविण्मूत्र-शुक्र मुख-संदंशविषाः, चित्रशीर्षक-शतदारुक-शारिकादयो मुखः सन्दंश-दंष्ट्रा-पर्दित-गुदपुरीष-विषाः, विषहतास्थि-मत्स्यास्थि-प्रभृतयोऽस्थिविषाः, शकुली-मत्स्यादयः पित्तविषाः, सूक्ष्म-तुण्ड-भ्रमरादयः शूकविषाः, कीट-सर्प देहा गतासवः शवविषाः । एषां च सुश्रुतस्य कल्पस्थाने विस्तरो द्रष्टव्यः ॥ १ ॥

भा० टी०—विष दो प्रकार का होता है, स्थावर और जङ्गम । इनमें पहला—(स्थावर) जड़, पत्ता, फल-फूल, छाल,दूध, सार,गोंद-धातु और कन्द, इन दश स्थानों में रहता है । और दूसरा-जङ्गम विष साँप आदि विषैले जन्तुओं में रहता है ॥ १ ॥

### अथ जङ्गमविषस्य सामान्यलक्षणानि ।

तत्र जङ्गमविषस्य बह्वधिष्ठानत्वेन प्राधान्यात् सर्ववेगानुगतं सामान्यलिङ्ग-माह—

**निद्रां तन्द्रां क्लमं दाहमपाकं लोमहर्षणम् ।**
**शोथं चैवातिसारं च जङ्गमं कुरुते विषम् ॥ २ ॥**

म०—निद्रामित्यादि । एतत् सुबोध्यम् ॥ २ ॥

भा० टी०—निद्रा, तन्द्रा, क्लम ( विना परिश्रम किये थकाहट मालूम होना ) दाह, विषपाक न होना, रोमाञ्च, शोथ-और अतिसार, ये सब रोग जङ्गम विष से होते हैं ॥ २ ॥

---

[1] इदंद्रव्यं सम्प्रति "संखिया" सोमल ( शतमल्ल ) इत्यादि नाम्ना भण्यते लोके ।

[2] "आराशब्देनात्र वृश्चिकादिलाङ्गूलस्थितः कण्टको भण्यते, तस्य च स्थूलशूकरूपत्वाच्छूकग्रहणे-नैव ग्रहणम्, अतएव दृष्टिनि.श्वासेत्यादिसूत्रे पृथङ्नोदाहृतमारग्रहणम्" इति डल्हणः । हिन्दीभाषायां "डंक" इति कथ्यते ।

### अथ स्थावरविषस्य सामान्यलक्षणानि ।

स्थावरस्य सामान्यलिङ्गमाह—

स्थावरं च ज्वरं हिक्कां दन्तहर्षं गलग्रहम् ।
फेनच्छर्द्यरुचिश्वासं मूर्च्छां च कुरुते भृशम् ॥ ३ ॥

म०—स्थावरं चेत्यादि । फेनच्छर्दिरिति फेनस्य छर्दिः ॥ ३ ॥

भा० टी०—ज्वर, हिचकी, दाँत फूट होना, गला बन्द हो जाना, मुँह से फेन निकलना, कय, अरुचि श्वास और मूर्च्छा, ये सब रोग सामान्य स्थावर विष से होते हैं ॥ ३ ॥

### अथ विषदातुः पुरुषस्य लक्षणम् ।

विषदातृलक्षणमाह—

इङ्गितज्ञो मनुष्याणां वाक्-चेष्टा-मुख-वैकृतैः ।
जानीयाद् विषदातारमेभिर्लिङ्गैश्च बुद्धिमान् ॥ ४ ॥
न ददात्युत्तरं पृष्टो विवक्षुर्मोहमेति च ।
अपार्थं बहु संकीर्णं भाषते चापि मूढवत् ॥ ५ ॥
हसत्यकस्मात् स्फोटयेदङ्गुलीर्विलिखेद् महीम् ।
वेपथुश्चास्य भवति त्रस्तश्चान्योऽन्यमीक्षते ॥ ६ ॥
विवर्णवक्त्रो ध्यामश्च नखैः किंचिच्छिनत्त्यपि ।
आलभेतासनं दीनः करेण च शिरोरुहम् ॥ ७ ॥
वर्तते विपरीतं च विषदाता विचेतनः ।

(सु० क० अ० १)

म०—इङ्गितज्ञ इत्यादि । अभिप्रायसूचकं इङ्गितमिङ्गितं [illegible] [illegible] [illegible] क्रियया मुखवैकृत्यादिना च विषदातारं जानीयात् । [illegible] । न ददात्युत्तरं पृष्ट इति स्वीयासत्कर्मजनित[illegible]त् । अपार्थमित्यनर्थकम् । संकीर्णमित्यस्फुटम् । हसत्यकस्मादिति अहेतोरपि हसति । [illegible]ऽव्यथापनोदनायाङ्गुलीः स्फोटयति । क्रियान्तर[illegible] महीं विलिखति । भीतः सन् प्रत्येकं वीक्षते, ध्याम इति दग्धसमवर्णः, किञ्चित्तृणादिकं, [illegible] विपरीत इति बारं बारं परिवर्त्य तिष्ठति ॥ ४—७ ॥

भा० टी०—दूसरे के मतलब को ताड़ जाने वाले बुद्धिमान् वैद्य को विष देनेवाले को बात चीत चेहरा और कामों से तथा निम्न लिखित निशानों से पहचान लेना चाहिए। विषदाता आदमी कुछ पूछने पर जवाब नहीं देता। कुछ बोलना भी चाहता है तो रुक जाता है। अगर बोलता भी है तो व्यर्थ की बातें, बनावटी, इधर उधर की मिली जुली और बेवकूफी से भरी हुई। विना कारण ही हँसता है। अँगुलियों को फोड़ने लगता है, जमीन खुरचता है, काँपने लगता है। डर के मारे एक दूसरे की तरफ देखता है। चेहरा फीका और स्याह हो जाता है। नाखून से कुछ तोड़ने लगता है। बैठ जाता है। मन उदास हो जाता है। हाथ से शिर के बालों को छूता रहता है। बार २ मुँह फेर लेता है। और होश से बातें नहीं करता ॥ ४—७ ॥

## अथ मूलादिविषाणां लक्षणानि।

मूलादिविषाणां प्रमादादुपयुक्तानां प्रत्येकं लक्षणमाह—

उद्वेष्टनं मूलविषैः प्रलापो मोह एव च ॥ ८ ॥
जृम्भणं वेपनं श्वासो मोहः पत्रविषेण तु।
मुष्कशोथः फलविषैर्दाहोऽन्नद्वेष एव च ॥ ९ ॥
भवेत् पुष्पविषैश्छर्दिराध्मानं श्वास एव च।
त्वक्सार-निर्यास-विषैरुपयुक्तैर्भवन्ति हि ॥ १० ॥
आस्यदौर्गन्ध-पारुष्य-शिरोरुक्कफसंस्रवाः।
फेनागमः क्षीरविषैर्विड्भेदो गुरुगात्रता ॥ ११ ॥
हृत्पीडनं धातुविषैर्मूर्च्छा दाहश्च तालुनि।
प्रायेण कालघातीनि विषाण्येतानि निर्दिशेत् ॥ १२ ॥

( सु० क० अ० २ )

म०—उद्वेष्टनमित्यादि। उद्वेष्टनं=दण्डविमर्दनवद् व्यथा। मूलविषैरपि, एवं पत्रादीनामुक्तानां यावत्संख्याकानामेकं सामान्यलक्षणमवगन्तव्यम्। प्रायेण कालघातीनीति एतानि नवमूलादिविषाणि कालान्तरेण मारकाणि भवन्तीत्यर्थः। कन्दविषं तु त्रयोदशविधमतितीक्ष्णत्वाद् व्यवायिविकाश्यादिगुणयोगात् तदात्वेन मारकम् ॥ ८-१२ ॥

भा० टी०—मूलविष से शरीर में ऐंठन, प्रलाप, मोह। पत्रविष से जँभाई, कम्प, श्वास, मोह। फलविष से अण्डकोश में सूजन, दाह और अन्नद्वेष। पुष्पविष से कय, आध्मान, श्वास। त्वक्विष, सारविष, और निर्यासविष से मुख में बदबू, खरखराहट, शिर में पीड़ा, कफ निकलना, दस्त आना, शरीर भारी मालूम होना, धातुविष से हृदय में पीड़ा, मूर्च्छा, तालु में दाह होता है। इन सबों विष से मनुष्य तुरन्त नहीं मरता, कालान्तर में इससे मृत्यु होती है। कन्दविष तुरन्त ही मार डालता है ॥ ८—१२ ॥

अथ विषाक्तशस्त्राघातस्य विषपीतस्य च लक्षणानि ।

विषलिप्तशस्त्रहतस्य लिङ्गमाह—

**सद्यः क्षतं पच्यते यस्य जन्तोः स्रवेद्रक्तं पच्यते चाप्यभीक्ष्णम् ।**
**कृष्णीभूतं क्लिन्नमत्यर्थपूति क्षताद् मांसं शीर्यते चापि यस्य ॥ १३ ॥**
**तृष्णा मूर्च्छा ज्वरदाहौ च यस्य दिग्धाहतं तं पुरुषं व्यवस्येत् ।**
**लिङ्गान्येतान्येव कुर्यादमित्रैर्व्रणे विषं यस्य दत्तं प्रमादात् ॥ १४ ॥**
**सपीतं गृहधूमाभं पुरीषं योऽतिसार्यते ।**
**फेनमुद्वमते चापि विषपीतं तमादिशेत् ॥ १५ ॥**

म०—सद्य इत्यादि । पच्यते चाप्यभीक्ष्णमिति सद्यस्तावत् पच्यते पश्चादपि पुनः पुनः पाकमेति ॥ १३–१५ ॥

भा० टी०—अक्सर लड़ाई में दुश्मन लोग हथियारों में विष लगा कर मारते हैं। विषलगे हथियार से घाव होने पर वह तुरन्त पकने लगता है और पीछे भी बराबर पकता रहता है। घाव से खून बार २ और बहुत बहता है, मांस सड़ जाता, काला हो जाता, और वह बदबूदार हो जाता है और गल २ कर गिरता है। प्यास, मूर्च्छा, ज्वर, दाह होता है। यदि दुश्मन किसी के घाव में भी रोगी और उसके परिचारकों की असावधानी में विषप्रयोग कर देता है तो उसमें भी यही लक्षण होते हैं ॥ १३–१४ ॥

भा० टी०—जिसके दस्त घर के धूंआ के रंग का हो और मुंह से फेन गिरे तो समझना चाहिए कि इसने विषपान किया है ॥ १५ ॥

## अथ सर्पाणां कतिचिद् भेदाः ।

स्थावरमभिधाय जङ्गमेष्वतितीक्ष्णत्वेन सर्पविषे वाच्ये तदाश्रयान् सर्पानाह—

वात-पित्त-कफात्मानो भोगि-मण्डलि-राजिलाः ।
यथाक्रमं समाख्याता; द्व्यन्तरा द्वन्द्वरूपिणः ॥ १६ ॥

म०—वातपित्तकफात्मान इत्यादि । भोगी=फणी, मण्डली=मण्डलवद्रथाङ्गलाङ्गलादिरूपमण्डलयुक्तः, राजिलश्चित्रदीर्घरेखावान्, एते यथा क्रमं वाताद्यात्मान वातादिप्रकृतयः । व्यतिकरजान् सर्पान् दर्शयति–द्व्यन्तरा द्वन्द्वरूपाणि इति । द्वयोरन्तरं विशेषो येषु ते तथा । यथा—फणिना मण्डलिन्यां गोनसा जाताः, मण्डलिना गोनसेन च फणिन्यां कृष्णसर्पाः, एवमन्येऽपि जातिसंकरा ऊह्याः । व्यन्तरा इति पाठे स एवार्थः, विशब्दस्य द्व्यर्थत्वात्;तथा "विभवान्महानाकाशः" इत्यत्र व्याख्यातं, विभवादिति द्विभावात्, द्विभावश्च सर्वमूर्तद्रव्यैः संयोगः सर्वत्र सर्वोपलम्भश्चेति । द्वन्द्वरूपिण इति द्वयोः फणिमण्डलिनोर्वातपित्तप्रकृतयो यत् प्रकृतित्वं तन्मिलितप्रकृतित्वमेषामित्यर्थः, वातपित्तप्रकृतयोरथवा द्वयोर्यद्दोषयो रूपं तद्रूपमित्यर्थः ॥ १६ ॥

भा० टी०—भोगी, मण्डली, राजिल, तीन प्रकार के जो सर्प होते हैं, इनमें भोगी वातात्मक, मण्डली पित्तात्मक और राजिल कफात्मक होते हैं। द्व्यन्तर अर्थात् दोगले-जैसे फणी सर्प से मण्डलिनी सर्पिणी में पैदा हुआ सर्प दो प्रकृति का अर्थात् वात पित्त प्रकृति का सर्प होता है। इसी प्रकार और भी समझना चाहिए ॥ १६ ॥

## अथ सर्पदंशेषु वातादीनां लक्षणानि ।

भोगिप्रभृतिकृतदंशेषु वातादीनां लिङ्गमाह—

दंशो भोगिकृतः कृष्णः सर्ववातविकारकृत ।
पीतो मण्डलिजः शोथो मृदुः पित्तविकारवान् ॥ १७ ॥
राजिलोत्थो भवेद् दंशः स्थिरशोथश्च पिच्छिलः ।
पाण्डुः स्निग्धोऽतिसान्द्रासृक् सर्वश्लेष्मविकारकृत् ॥ १८ ॥

म०—दंशो भोगिकृत इत्यादि । सर्ववातविकारकृदित्यनेनैव कृष्णत्वे सिद्धे तदुक्तिरवश्यंभावित्वख्यापनार्थम्, एवमुत्तरत्रापि पीताद्यभिधानम् ॥ १७–१८ ॥

भा० टी०—भोगीसर्पका दंश-काटा हुआ स्थान काला होता है और सम्पूर्ण वातविकार पैदा करनेवाला है। मण्डली का दंश पीला और पित्तविकार वाला होता है। राजिल का दंश कड़ी सूजनवाला, गीला, पाण्डुवर्णका, चिकना होता है, उससे गाढ़ा खून बहता है और सम्पूर्ण कफविकार पैदा करनेवाला होता है॥१७—१८

अथ विशिष्टदेशादिषु दष्टस्यासाध्यलक्षणानि ।

विशिष्टदेशादिदष्टस्यासाध्यत्वमाह—

**अश्वत्थ-देवतायतन-श्मशान-वल्मीक-सन्ध्यासु चतुष्पथेषु ।**
**याम्ये च दष्टाः परिवर्जनीया ऋक्षे सिरामर्मसु ये च दष्टाः ॥१९॥**

म०—अश्वत्थेत्यादि । याम्ये चेति भरण्याम् । ऋक्षे=नक्षत्रे । मर्माणि आशुघातिषु । याम्ये चेति चकारेणार्द्रा-ऽऽश्लेषा-मघा-मूल-कृत्तिकानां ग्रहणम् । यदुक्तमन्यत्र—"चैत्यायतन-वल्मीक-श्मशानेषु चतुष्पथे । आर्द्रा-ऽऽश्लेषा-मघा-मूल कृत्तिका-भरणीषु च ॥ पञ्चम्यां सन्ध्ययोर्देशे मर्मस्वाशुहरेषु च । दष्टाः कष्टेन जीवन्ति यदि दूतादिसंपदः"-इति ॥ १९ ॥

भा० टी०—पीपल के पेड़ के नीचे, देवमन्दिर, श्मशान, बाम्बी के पास तथा प्रातःकाल और सायङ्काल, चौराहा, भरणी, आर्द्रा आश्लेषा, मघा मूल, कृत्तिका नक्षत्र के दिन और सिरा और मर्मस्थानों में सर्प के काटने पर आदमी नहीं बचता।१९

अथ फणिविषस्य कालवशादाशुघातित्वम् ।

**दर्वीकराणां विषमाशुघाति सर्वाणि चोष्णे द्विगुणीभवन्ति ।**

म०—दर्वीत्यादि।दर्वीकराणां विषमाशु हन्ति अश्वत्थादौ विशेषेण दर्वीकराणामाशुमारकम्,दर्वीकराः=फणिनः।सर्वाणि चोष्णे द्विगुणीभवन्तीति उष्णसंयोगे सति सर्वाणि विषाणि स्वरूपतो द्वैगुण्यं भजन्ते; सर्वाणि चोक्तानि। "यथाक्रमेण" इति पाठान्तरे अयमर्थः-सर्वाणि=भोगि-मण्डलि-राजिल-विषाणि यथाक्रमेण=यथोदितक्रमेण उक्तान्यश्वत्थादिष्वाशुघातीनि। दर्वीकरविषस्य पृथगुपादानं विशेषार्थम्॥२०॥

भा० टी०—दर्वीकर-फणी साँप का विष शीघ्र ही मारने वाला होता है। और सब साँप के विष गर्मी पाकर दूने तेज हो जाते हैं।

अथापराण्यप्यसाध्यलक्षणानि ।

एवमपरेष्वपि आशुघातित्वं संभवति, तानाह—

**अजीर्ण-ऽऽपित्तातप-पीडितेषु बालेषु वृद्धेषु बुभुक्षितेषु ॥ २० ॥**
**क्षीणक्षते मेहिनि कुष्ठयुक्ते रूक्षेऽबले गर्भवतीषु चापि ।**

म०-अजीर्णेत्यादि । अजीर्णपित्तातपपीडितेष्विति अजीर्णिनि दोषत्रयप्रकोपात्, पित्तातपपीडितयो रौक्ष्यात्, बालवृद्धयोरसंपूर्णक्षीणधातुत्वेन विषवेगासहत्वात्, बुभुक्षितेष्विति पित्तवृद्ध्या उष्णदेहत्वात्, क्षीणक्षत इति क्षतक्षीणे बहुलवातदुष्टेः, मेहिनि दोषत्रयप्रकोपात्, कुष्ठयुक्ते रक्तादिदोषात्, रूक्षे वातकोपात्, अबले क्लेशासहत्वात्, गर्भवतीषु गर्भेणोत्क्षिप्तदोषत्वात्, एषु विषमाशुघातीति ॥ २० ॥—

भा० टी०—अजीर्ण, घाम, पित्त से पीड़ित, बालक, वृद्ध, भूखा, क्षतक्षीण, प्रमेह रोगी, कोढ़ी, रूखा, निर्बल और गर्भवती स्त्री; ये साँप के काटने पर नहीं बचते-बहुत जल्दी मर जाते हैं, क्योंकि अजीर्ण में त्रिदोष का कोप रहता है। पित्त आतप पीड़ित के शरीर में रूक्षता अधिक होती है। बालक का सब धातु पूरा २ नहीं बना रहता इसलिए वे विष वेग को सह नहीं सकते। भूख में पित्त बढ़े रहने से शरीर में गरमी रहती है। क्षतक्षीण में वात का कोप रहता है। प्रमेह में त्रिदोष कुपित रहता है। कोढ़ में रक्त और त्रिदोष का कोप रहता है। रूक्ष में वातकोप रहता है। निर्बलता में विष का वेग नहीं सहा जाता। गर्भ से सब दोष अस्थिर रहते हैं ॥ २० ॥

### अथ सर्पदष्टस्य सर्वथा वर्ज्जनीयलक्षणानि ।

इदानीं सर्वथा वर्ज्जनीयमाह—

**शस्त्रक्षते यस्य न रक्तमेति राज्यो लताभिश्च न संभवन्ति ॥२१॥**
**शीताभिरद्भिश्च न रोमहर्षो विषाभिभूतं परिवर्जयेत्तम् ।**
**जिह्मं मुखं यस्य च केशशातो नासावसादश्च सकण्ठभङ्गः ॥२२॥**
**कृष्णः सरक्तः श्वयथुश्च दंशे हन्वोः स्थिरत्वं च विवर्जनीयः ।**
**वर्तिर्घना यस्य निरेति वक्त्राद् रक्तं स्रवेदूर्ध्वमधश्च यस्य ॥२३॥**
**दंष्ट्रानिपाताश्चतुरश्च यस्य तं चापि वैद्यः परिवर्जयेच्च ।**
**उन्मत्तमत्यर्थमुपद्रुतं वा हीनस्वरं वाऽप्यथवा विवर्णम् ॥ २४ ॥**
**सारिष्टमत्यर्थमवेगिनं च ज्ञात्वा नरं कर्म न तत्र कुर्यात् ।**

म०-शस्त्रक्षत इत्यादि । राज्यो लताभिश्चेति राज्यो=लेखाः लताभिस्ताडनान्न भवन्ति । तदुक्तमालम्बायने,-"नैति रक्तं क्षताद् यस्य लताघातैर्न राजिकाः । न लोमहर्षः शीताद्भिर्वर्जयेत्तं विषार्दितम्"-इति । जिह्मं=वक्रं- स्तब्धमिति

कार्तिकः। केशशान इति कर्षणात् केशोत्पाटः। [illegible] हन्वोः स्थिरत्वं=हनुद्वयस्य लग्नत्वम्। [illegible] मधश्च यस्येति मुख–नासा–गुदादिभ्यः शोणितस्रावः [illegible] चत्वार इति प्राप्ते चतुर इति निर्देश आगमविधेरनित्यत्वात्, यथा–"[illegible] वेदा" इत्यादि। उन्मत्तमत्यर्थमुपद्रुतमिति उन्मत्तमत्यर्थमुन्मादयुक्तम्, [illegible] ज्वरातिसारादिभिरत्यर्थमुपद्रुतम्। हीनस्वरं=[illegible]। [illegible] सारिष्टं=नासाभङ्गादियुक्तम्। अवेगिनं=गमनादिवेगरहितं, विण्मूत्रादिवेगरहितमिति कार्तिकः॥ २१–२४॥–

भा० टी०—साँप के काटने पर दंश से रक्त न बहे, लता या [illegible] से मारने पर लाट न उपड़े। ठंडा पानी डालने पर रोंगटा खड़ा न हो, तो रोगी नहीं बचता। जिसका मुँह टेढ़ा हो जाय, हाथ से खींचने पर बाल भड़ से उखड़ जाय, [illegible] जाय, गर्दन झुकी पड़े, काटने की जगह काला या लाल शोथ हो जाय, [illegible] तो उसकी चिकित्सा करना व्यर्थ है, अर्थात् वह मर जाता है। [illegible] के काटने पर जिसके मुँह से वत्ती की सूरत में गाढ़ी २ लार बहे, मुख, नाक, गुदा और [illegible] आदि से खून बहे और जिसके साँप का चार दाँत लगा हो तो वह रोगी नहीं बचता। पागल हो जाने से, ज्वर अतिसार आदि उपद्रव हो जाने से, बोली बन्द होने, [illegible] स्याह हो जाने, नाक बैठ जाने से और अवेगी–[illegible] न आने या हाथ न पैर [illegible] अथवा पाखाना पेशाब न होने से रोगी नहीं बचता। ऐसी हालत में [illegible] चिकित्सा न करनी चाहिए॥ २१—२४॥

## अथ किंचिदवस्थान्तरगतस्यास्यैव विषस्य दूषीविषसंज्ञा।

स्थावरजङ्गमविषमेव जीर्णत्वादिभिर्विशेषैर्दूषीविषसंज्ञां लभते, तद्यथा—

**जीर्णं विषघ्नौषधिभिर्हतं वा दावाग्निवातातपशोषितं वा॥ २५॥**
**स्वभावतो वा गुणविप्रहीनं विषं हि दूषीविषतामुपैति।**
(सु० क० अ० २)

म०–जीर्णमित्यादि। विषघ्नौषधिभिरिति अगदादिभिः। दावाग्निवातातपशोषितं वेति दावाग्निर्वनाग्निः। स्वभावतो वा गुणविप्रहीनमिति स्वभावादेव किमपि विषं व्यवायिविकाशिप्रभृतिषु दशसु गुणेषु मध्ये एकद्व्यादिगुणहीनं यदि भवति तदा दूषीविषतामुपैति॥ २५॥

भा०टी०—पुराना,विषनाशक औषध-अगद से हीनवीर्य, वनाग्नि, हवा, घाम से हीन-वीर्य,स्वभाव से ही दश गुणों में बहुत गुणोंसे हीन,विष दूषीविष कहलाता है॥२५॥

### अथ दूषीविषस्य लक्षणानि ।

गुणहीनतामेव कार्येण दर्शयति—

**वीर्याल्पभावाद् न निपातयेत् तत् कफान्वितं वर्षगणानुबन्धि ॥२६॥**
**तेनार्दितो भिन्न-पुरीष-वर्णो वैगन्ध्य-वैरस्ययुतः पिपासी ।**
**मूर्च्छां भ्रमं गद्गदवाग् वमिं च विचेष्टमानोऽरतिमाप्नुयाद् वा॥२७॥**

( सु० क० अ० २ )

म०-वीर्याल्पभावादित्यादि । न निपातयेदिति न मारयति सद्यश्चिरेण वा । कफान्वितमिति कफान्वितं सत् मन्दीभूतौष्ण्यादिगुणं न मारयति । वर्षगणानुबन्धीति अपाकाच्चिरस्थायि । तेनार्दितो भिन्नपुरीषवर्ण इति तेन दूषीविषेणार्दितो, भिन्नशब्दोऽत्र पुरीषवर्णाभ्यां प्रत्येकमभिसंबध्यते, भिन्नवर्णो=विवर्णः । वैगन्ध्य-वैरस्य-युत इति विरुद्धगन्ध-मुखवैरस्ययुक्तः । विचेष्टमानो=विरुद्धां चेष्टां कुर्वन्; अरतिमसुखं लभते ॥२६-२७॥

भा० टी०—वह दूषीविष निर्वल होने से तुरन्त नहीं मारता किन्तु कफ से घिर कर उष्णता आदि गुणों से हीन होकर वर्षों पेट में पड़ा रहता है-पकता नहीं। उससे मनुष्य को पतले दस्त आते हैं। शरीर और चेहरा का रंग विगड़ जाता है । दुर्गन्ध आती है और मुँह का जायका फीका रहता है। प्यास अधिक लगती है। मूर्च्छा भ्रम होता है। आवाज साफ नहीं निकलती। कय होती है। विरुद्ध चेष्टा—हाथ पैर पटकता और कँहरता है। और कहीं भी किसी प्रकार उसे चैन नहीं पड़ती ॥ २६—२७ ॥

### अथैतस्य स्थानविशेषस्थित्या विशिष्टलक्षणानि ।

स्थानविशेषेण विशिष्टलिङ्गमाह—

**आमाशयस्थे कफवातरोगी पक्वाशयस्थेऽनिलपित्तरोगी ।**
**भवेत् समुद्ध्वस्तशिरोरुहाङ्गो विलूनपक्षस्तु यथा विहङ्गः ॥ २८ ॥**

( सु० क० अ० २ )

म०—आमाशयस्थ इत्यादि । कफाद्युतत्वेन वातकोप आमाशये, तेन कफवातरोगीत्युक्तम् । अनिलपित्तरोगीति पक्वाशये दूषीविषसम्बन्धेन पक्वाशय-स्याशयस्थस्य पित्तस्य कोपः । भवेत् समुद्ध्वस्तशिरोरुहाङ्ग इति अत्राङ्गशब्दात् परं रुहशब्दो द्रष्टव्यः, तेनायमर्थः—समुद्ध्वस्तशिरोरुहाङ्गरुहः, शिरोरुहाः=केशाः, अङ्गरुहं=लोम, तदुक्तमालम्बायने,—"सीदन्ति केशलोमानि तस्मिन् पक्वाशयं गते"—इत्यादि । विलूनपक्षस्तु यथा विहङ्ग इति लुलितपक्षशकुनिसदृशः, एतत् पक्वाशयगतस्यैव लिङ्गम् ॥ २८ ॥

भा० टी०—दूषीविष आमाशय में रहता है तो कफ वात के रोग होते हैं, पक्वाशय में रहने से वात पित्त के रोग होते हैं और उस मनुष्य के सारे शरीर और शिर के सब बाल गिर जाने से वह ऐसा मालूम होता है जैसे पंख उखाड़ लेने पर पक्षी ॥ २८ ॥

अथ रसादिधातुगतदूषीविषस्य लक्षणानि ।

तस्य रसादिधातुगतस्य लिङ्गमाह—

स्थितं रसादिष्वथवा यथोक्तान् करोति धातुप्रभवान् विकारान् ।
कोपं च शीतानिलदुर्दिनेषु यात्याशु पूर्वं शृणु तस्य रूपम् ॥२९॥

( सु० क० अ० २ )

म०—स्थितं रसादिष्वित्यादि । यथोक्तान् करोति धातुप्रभवान् विकारा-निति सुश्रुते व्याधिसमुद्देशीयाध्यायोक्तानश्रद्धादीन् करोति कोपं च शृणु तस्य रूपमिति पूर्वरूपं शृण्वित्यर्थः ॥ २९ ॥

भा० टी०—दूषीविष के रस आदि धातु तक पहुंच जाने पर रस आदि के बिगड़ने पर जो रोग पैदा होते हैं वे सब होते हैं । पाला के गिरने के समय, ठंढी तेज हवा के चलने पर और मेघ से आकाशके घिरे रहने पर कुपित होकर अनेक रोगों को पैदा करता है । पहले उसका पूर्वरूप बतलाया जाता है । २९ ।

तदेवाह—

निद्रागुरुत्वं च विजृम्भणं च विश्लेषहर्षावथवाङ्गमर्दम् ।
ततः करोत्यन्नमदाविपाकावरोचकं मण्डलकोठजन्म ॥ ३० ॥

मांसक्षयं पाद-कर-प्रशोथं मूर्च्छां तथा छर्दिमथातिसारम् ।
दूषीविषं श्वास-तृषा-ज्वरांश्च कुर्यात् प्रवृद्धिं जठरस्य चापि ॥३१॥

( सु० क० अ० २ )

म०—निद्रेत्यादि । विश्लेषहर्षाविति विश्लेषो=गात्रस्य शैथिल्यम् । हर्षो=रोमहर्षः । एतानि वातकफजानि लिङ्गानि । तत इति पूर्वरूपादनन्तरम् । अन्नमदाविपाकाविति अन्नमदः=अन्ने=भुक्ते मदो=हर्षः अन्नमदः, कार्तिकस्त्वन्नविक्षेपणमन्नमदमाह, अन्नमदो=रसाजीर्णमिति गदाधरः, अविपाकोऽन्नस्यापाकः । पादकरप्रशोथमिति पादे करे च प्रकृष्टं शोथं करोति । "मूर्छां तथा छर्दिमथातिसारम्" इत्यस्य स्थाने "प्रलेपकं छर्दिम्" इत्यादि पाठान्तरे प्रलेपकं स्वेदप्रवृत्त्या पिच्छिलं गात्रं, ज्वरविशेषं वा ॥ ३० ॥ ३१ ॥

भा० टी०—दूषीविष पहले निद्राधिक्य, शरीर का भारीपन, जँभाई, शरीर का ढीलापन, रोमाञ्च, अँगड़ाई, इन रोगों को पैदा करता है और इस पूर्वरूप के बाद अन्नमद ( भोजन करने पर नशा सा मालूम होना ) अन्न हजम न होना, अरुचि, चकत्ता, दिदोरा उठना, कृशता, हाथ पैर में सूजन, कय, दस्त, श्वास, तृष्णा, ज्वर और पेट का बढ़ जाना, इन रोगों को पैदा करता है ॥ ३०—३१ ॥

अथ नानाविधविषस्यानेकविकारकर्तृत्वम् ।

तदेव नानाप्रकारं यद्यत् करोति तत्तदाह—

उन्मादमन्यत् जनयेत् तथाऽन्यदानाहमन्यत् क्षपयेच्च शुक्रम् ।
गाद्गद्यमन्यत् जनयेच्च कुष्ठं तांस्तान् विकारांश्च बहुप्रकारान् ॥३२॥

( सु० क० अ० २ )

म०—उन्मादमन्यदित्यादि । क्षपयेच्च शुक्रमिति षाण्ढ्यं करोतीत्यर्थः । तांस्तानिति विसर्पविस्फोटकादीन् ॥ ३२ ॥

भा० टी०—दूषी विष कई प्रकार का होता है । कोई तो उन्माद, कोई आनाह, कोई नपुंसकता, कोई गद्गद वाणी और कोई कुष्ठ पैदा करता है, इस प्रकार हर एक तरह का दूषीविष अलग २ अनेक प्रकार के रोगों को पैदा करता है ॥ ३२ ॥

अथ दूषीविषशब्दस्य निरुक्तिः।

दूषीविषस्य निरुक्तिमाह—

दूषितं देशकालान्नदिवास्वप्नैरभीक्ष्णशः।
यस्मात् संदूषयेद् धातून् तस्माद् दूषीविषं स्मृतम् ॥ ३३ ॥
साध्यमात्मवतः सद्यो याप्यं संवत्सरोत्थितम्।
दूषीविषमसाध्यं स्यात् क्षीणस्याहितसेविनः ॥ ३४ ॥

(सु० क० अ० २)

म०—दूषितमित्यादि। देशकालान्नदिवास्वप्नैरिति देशः=अनूपानिलाः—तद्दृष्टिरनूपादिः, कालः=शीतानिलदुर्दिनादिः, अन्नम्=सुरातिलकुलत्थादि, संदूषितं—कोपितम्, अभीक्ष्णशः=पुनःपुनः। धातुदूषकत्वेन दूषीविषम्। संयोगजं विषं द्विविधम्, एकम्,=सविषाविषसंयोगकृतम्, कृत्रिमसंज्ञं, अपरम्=निर्विषद्रव्यकृतं, गरसंज्ञम्। यदाह वृद्धकाश्यपः—संयोगजं च द्विविधं तृतीयं विषमुच्यते। गरः स्यादविषं तत्र सविषं कृत्रिमं मतम्" इति। अत एव रसायने चरकः—"दूषीगरे मूलविषे सगरे कृत्रिमे विषे"—इति ॥ ३३ ॥ ३४ ॥

भा० टी०—दूषीविष पेट में पड़ा रहता है और अनूप देश, जाड़ा, दुर्दिन, सुरा, तिल, कुलथा वगैरह से फिर दूषित होकर धातुओं को दूषित करता है इसलिए इसे दूषीविष कहते हैं। जितेन्द्रिय-पथ्याशी पुरुष का नया दूषीविष रोग साध्य होता है। एक वर्ष का पुराना याप्य और क्षीण तथा अपथ्यसेवी का असाध्य होता है। संयोगज विष दो प्रकार का होता है। क्रित्रिम और गर। सविष और अविष वस्तुओं के संयोग से बना विष क्रित्रिम और निर्विष वस्तु के संयोग से बना विष गर कहलाता है ॥ ३३—३४ ॥

अथ कृत्रिमविषस्य लक्षणानि।

तद् द्वयमपि दर्शयितुमाह—

सौभाग्यार्थं स्त्रियः स्वेदं रजो नानाङ्गजान् मलान्।
शत्रुप्रयुक्तांश्च गरान् प्रयच्छन्त्यन्नमिश्रितान् ॥ ३५ ॥
तैः स्यात् पाण्डुः कृशोऽल्पाग्निर्गरश्चास्योपजायते।
मर्मप्रधमनाध्मानं हस्तयोः शोथलक्षणम् ॥ ३६ ॥

**जठरं ग्रहणीदोषो यक्ष्मा गुल्मः क्षयो ज्वरः।**
**एवंविधस्य चान्यस्य व्याधेर्लिङ्गानि दर्शयेत् ॥ ३७ ॥**

म०—सौभाग्यार्थमित्यादि। स्त्रियः सौभाग्यार्थं शत्रुप्रयुक्ता वा सविषजन्तूनां स्वेदं, रजश्चूर्णं, नानाङ्गजान्=नानागरकरान् मलान् अन्नादौ ददति। तैरिति स्वेदरजःप्रभृतिभिः। गरश्चास्येति अपाकाज्जठरावस्थितस्वेदादिरेव गरः, अत एव तस्योदरामयः; किंवा वक्ष्यमाणमर्मप्रधमनादिलक्षणो व्याधिर्गरः। मर्मप्रधमनं=मर्मव्यथा। शोथलक्षणमिति शोथ एव लक्षणं जठरमुदरम्। अन्यस्य व्याधेर्लिङ्गानि दर्शयेदिति अन्यस्य विस्फोटादेर्लिङ्गं दर्शयति ॥ ३५-३७ ॥

भा० टी०—स्त्रियाँ अक्सर पतिको अपने वश में रखने के लिए पसीना, रज, अङ्गों की मैल वगैरह अन्न में मिला कर पुरुष को खिला देती हैं। शत्रु द्वारा भी ऐसी चीजें दी जाती हैं। ये चीजें जब अन्नके साथ पेट में पहुँचती हैं तो पाण्डुरोग,पसीना अधिक निकलना, मन्दाग्नि,कृशता,मर्मस्थानों में पीड़ा,आध्मान,हाथों में शोथ,पेट बढ़ आना, ग्रहणीरोग, यक्ष्मा, गुल्म, क्षय, ज्वर ये सब और फुन्सियाँ वगरह रोग पैदा होकर बड़ी तकलीफ देते हैं ॥ ३५—३७ ॥

### अथ लूताविषस्योत्पत्तिः।

सम्प्रति लूतानां घोरविषत्वप्रतिपादनार्थमैतिह्यमाह—

**यस्माद् लूनं तृणं प्राप्ता मुनेः प्रस्वेदबिन्दवः।**
**तस्माद् लूतास्तु भाष्यन्ते संख्यया ताश्च षोडश ॥ ३८ ॥**

( सु० क० अ० २ )

म०—यस्माल्लूनं तृणमित्यादि। इति किल श्रुतिः—"विश्वामित्रो नरपतिः कामधेनोर्बलात्कारपरिग्रहेण मुनिसत्तमं वाशिष्ठं कोपयांचकार, कुपितेन तेनान्तर्ज्वलदविरलकोपानलज्वालितं [1]कुकुलयुगलमिव बहलपाटलं लोचनद्वयं वहता भगवान् रविरवलोकितः। ततस्तस्य भ्रुकुटिभयङ्करललाटतटप्रस्यन्दी स्वेदबिन्दूत्करः प्रचण्डतरः प्रत्यासन्नलूनतृणे धेन्वर्थं संभृते निपतितो लूताऽभूत्"—इति।

---

१ कुकुलस्तुषवह्निः। पहलपाटलमतिशयरक्तवर्णम्। अत्रार्थे सौश्रुतं वचनं यथा—विश्वामित्रो नृपवरः कदाचिदृषिसत्तमम्। वशिष्ठं कोपयामास गत्वाश्रमपदं किल। कुपितस्य मुनेस्तस्य ललाटात्स्वेदबिन्दवः। अपतन् दर्शनादेव ह्यधस्तात्तीव्रवर्चसः। लूने तृणे महर्षेस्तु धेन्वर्थं संभृतेऽपि च। ततो जातास्त्विमा घोरा नानारूपा महाविषा—इति।

तास्तु षोडश । यदाह सुश्रुतः—"त्रिमण्डला तथा श्वेता कपिला पीतिका तथा । लालामूत्रविषा रक्ता कठिना चाष्टमी स्मृता । सौवर्णिका लाजवर्णा जा[illegible] तथा । कृष्णाऽग्निवक्त्रा काण्डा च माला[illegible]गुण्यष्टमी मता" ( सु. क. स्था. अ. ८ ) इति ॥ ३८ ॥

भा॰ टी॰—विश्वामित्र एक बार वशिष्ठजी के आश्रम आये और उनसे कामधेनु गाय माँगने लगे, उनके न देने पर जबर्दस्ती लेना चाहा, इस पर वशिष्ठजी को [illegible] क्रोध हुआ, और उनके ललाट से पास में रक्खी हुई घास पर पसीना गिरा उसी से मकड़ियाँ हुईं जो गिनती में सोलह होती हैं ॥ ३८ ॥

## अथ लूतादंशस्य सामान्यलक्षणानि ।

तासां सामान्यदंशलक्षणमाह—

> ताभिर्दष्टे दंशकोथः प्रवृत्तिः क्षतजस्य च ।
> ज्वरो दाहोऽतिसारश्च गदाः स्युश्च त्रिदोषजाः ॥ ३९ ॥
> पिडका विविधाकारा मण्डलानि महान्ति च ।
> शोथा महान्तो मृदवो रक्ताः श्यावाश्चलास्तथा ॥ ४० ॥
> सामान्यं सर्वलूतानामेतद् दंशस्य लक्षणम् ।

( [illegible] )

म॰-ताभिर्दष्ट इत्यादि । दंशकोथ इति दंशदेशे पूतिभाव[illegible] । [illegible] क्षतजस्येति रक्तस्य प्रवर्तनम् । सर्वलूतानामिति असाध्या[illegible]नामेव सामान्यलक्षणं ज्ञेयम् । यतस्त्रिमण्डलादीनामष्टानां [illegible] शिरोदुःखमित्यादिना सामान्यलक्षणमभिधाय सौवर्णिका[illegible] सुश्रुतः । माधवकरेण तु षोडशानां लूतानां सामान्य[illegible] पठितमिति ॥ ३९ ॥ ४० ॥

भा॰ टी॰—इन सोलह लूताओं में आठ से कम विष वाला है [illegible] होता है । इनमें आठ साध्यलूताके काटनेपर दंशस्थान सड़ जाता है [illegible], ज्वर, दाह, अतिसार, त्रिदोषज रोग, अनेक आकार की पिड़िका, [illegible], मुलायम, लाल, स्याह, और फैलने वाली सूजन, ये सब रोग पैदा होते हैं ॥ ३९-४० ॥

अथ दूषीविषाख्यलूतानां दंशलक्षणानि ।

त्रिमण्डलादयोऽष्टौ दूषीविषास्तासां लक्षणमाह—

दंशमध्ये तु यत् कृष्णं श्यावं वा जालकाचितम् ॥ ४१ ॥
ऊर्ध्वाकृति भृशं पाकं क्लेद-शोथ-ज्वरान्वितम् ।
दूषीविषाभिर्लूताभिस्तद् दष्टमिति निर्दिशेत् ॥ ४२ ॥

( च० चि० अ० २५ )

म०—दंशमध्ये त्वित्यादि । ऊर्ध्वाकृतीति ऊर्ध्वगस्वरूपम्, अन्ये "दग्धाकृति" इति पठन्ति, तद् व्यक्तार्थम् । दूषीविषाभिरिति कालान्तरप्रकोपिविषाभिः दष्टमिति दंशम् ॥ ४१ ॥ ४२ ॥

भा० टी०—दूषीविष-विषैली लूता के काटने पर दंशस्थान में काला, या स्याह, जाला के समान ऊँचा शोथ हो जाता है, वह पकता है और वहता है । ज्वर आ जाता है ॥ ४१—४२ ॥

अथ प्राणहरलूतानां दंशलक्षणानि ।

सौवर्णिकादीनामष्टानामसाध्यानां प्राणहराणां सामान्यलक्षणमाह—

शोथः श्वेताः सिता रक्ताः पीता वा पिडका ज्वरः ।
प्राणान्तिकाश्च जायन्ते श्वास-हिक्का-शिरोग्रहाः ॥ ४३ ॥

( च० चि० अ० २५ )

म०—शोथ इत्यादि । प्राणान्तिका इति प्राणहराः ॥ ४३ ॥

भा० टी०—असाध्य प्राणहर लूता के काटने पर शोथ होता है और सफेद, काली, या लाल या पीली पिड़कियाँ पैदा हो जाती हैं, ज्वर आता है । श्वास, हिक्का शिरोवेदना, ये रोग पैदा होकर प्राण नाश कर देते हैं ॥ ४३ ॥

अथाखुदूषीविषस्य लक्षणानि ।

आखुदूषीविषस्य लक्षणानि ।

आदंशात् शोणितं पाण्डुमण्डलानि ज्वरोऽरुचिः ।
लोमहर्षश्च दाहश्चाप्याखुदूषीविषार्दिते ॥ ४४ ॥

( च० चि० अ० २५ )

म०—आदंशादित्यादि—आदंशात् शोणितमित्यत्र "गलति" इति भेदः । आखवः=शुक्रविषाः । यदुक्तम्,—शुक्रं पतति यत्रैषां शुक्रस्पृष्टैः स्पृशन्ति यत्" ( सु. क. स्था. अ. ७ )-इति ॥ ४४ ॥

भा० टी०—दूषीविष-मूसा के काटने पर दंशस्थान से खून बहता है, पाण्डुवर्ण के चकत्ते हो जाते हैं। ज्वर, अरुचि, रोमाञ्च और दाह, ये रोग पैदा हो जाते हैं ॥४४॥

### अथ प्राणहरमूषिकविषस्य लक्षणानि ।

प्राणहरमूषिकलक्षणमाह—

**मूर्च्छाङ्ग-ऽशोथ-वैवर्ण्य-क्लेद-शब्दाश्रुति-ज्वराः ।**
**शिरोगुरुत्वं लालासृक्छर्दिश्चासाध्यमूषिकैः ॥ ४५ ॥**

( [illegible] )

म०—मूर्च्छेत्यादि । अङ्गशोथेति मूषिकाकार एवाङ्गशोथो ज्ञेयः । यदुक्तमन्यत्र,—"चीयते ग्रन्थिभिश्चाङ्गमाखुशावकसन्निभैः" ( सु. क. स्था. अ. ७ )-इति । शब्दाश्रुतिः=बाधिर्यम्, अन्ये "मन्दारुचिः" इति पठन्ति । असाध्यमूषिकैः=मारणात्मकैः ॥ ४५ ॥

भा० टी०—प्राणहर असाध्य मूसा के काटने पर मूर्च्छा, शरीर में शोथ, वैवर्ण्य, क्लेदस्राव, बहिरापन, ज्वर, शिर का भारीपन, लार बहना, खून की वमन, ये सब रोग पैदा होते हैं ॥ ४५ ॥

### अथ कृकलासदष्टस्य लक्षणानि ।

कृकलासदष्टलिङ्गमाह—

**कार्ष्ण्यं श्यावत्वमथवा नानावर्णत्वमेव वा ।**
**मोहोऽथ वर्चसो भेदो दष्टे स्यात् कृकलासकैः ॥ ४६ ॥**

भा० टी०—कृकलास ( गिरगिट ) का काटा स्थान काला या श्याव अथवा अनेक वर्ण का हो जाता है। बेहोशी रहती है। पतले दस्त होते हैं ॥ ४६ ॥

( [illegible] )

म०-काष्र्यमित्यादि । वर्चसो भेदोऽतिसारः ॥ ४६ ॥

अथ वृश्चिकविषस्य लक्षणानि ।

वृश्चिकविषलिङ्गमाह—

दहत्यग्निरिवादौ च भिनत्तीवोर्ध्वमाशु च ।
वृश्चिकस्य विषं याति दंशे पश्चात्तु तिष्ठति ॥ ४७ ॥
दष्टोऽसाध्यश्च हृद्-घ्राण-रसनोपहतो नरः ।
मांसैः पतद्भिरत्यर्थं वेदनार्तो जहात्यसून् ॥ ४८ ॥

( च० चि० अ० २५ )

म०-दहत्यग्निरित्यादि । वृश्चिकः स्वनामख्यातः, स च आराविषः । दष्टोऽसाध्यश्च हृद्घ्राणरसनोपहतो नर इति यदा हृदय-नासा-जिह्वोपघातो भवति तदा तद्दष्टो न साध्यः । मांसैः पतद्भिरत्यर्थं वेदनार्तो जहात्यसूनित्यादिनाऽयमपरोऽसाध्यप्रकारः । "दष्टोऽसाध्यैस्तु" इति पाठपक्षेऽसाध्यः सद्यःप्राणहरैर्वृश्चिकैर्दष्टो यथोक्तलिङ्गो भवति । चरकेऽप्ययमेव पाठः ॥ ४७-४८ ॥

भा० टी०—विच्छी के डंक मारने पर आग से जलने की तरह जलन होती है। दंश स्थान फटा पड़ता है। उसका जहर पहले ऊपर की तरफ बड़े वेग से चढ़ता है, बाद दंशस्थानमात्र में पीड़ा रहती है। असाध्य विच्छी के काटने पर यदि हृदय, नाक, जिह्वा शक्तिहीन हो जाँय तो रोगी नहीं बचता। अगर दंशस्थान से मांस गल २ कर गिरने हैं तो भी रोगी नहीं बचता ॥ ४७—४८ ॥

अथ कणभदष्टस्य लक्षणानि ।

कणभदष्टलिङ्गमाह—

विसर्पः श्वयथुः शूलं ज्वरश्छर्दिरथापि च ।
लक्षणं कणभदंष्टे दंशश्चैवावसीदति ॥ ४९ ॥

म०-विसर्प इत्यादि । कणभः कीटविशेषः ॥ ४९ ॥

भा० टी०—कणभ कीड़े के काटने पर विसर्प, सूजन, शूल, ज्वर, कय, ये रोग होते हैं और काटने की जगह गलने लगती है ॥ ४९ ॥

अथोच्चिटिङ्गदष्टस्य लक्षणम् ।

उच्चिटिङ्गदष्टलिङ्गमाह—

हृष्टलोमोच्चिटिङ्गेन स्तब्धलिङ्गो भृशार्तिमान् ।
दष्टः शीतोदकेनेव सिक्तान्यङ्गानि मन्यते ॥ ५० ॥

म०–हृष्टरोमेत्यादि ॥ ५० ॥

भा० टी०—उच्चिटिङ्ग के काटने पर रोमाञ्च, लिङ्ग का जकड़ना, और अत्यन्त पीड़ा होती है और रोगी को ऐसा जान पड़ता है मानो शरीर में पानी लगा है ॥५०॥

अथ सविषमण्डूकदष्टस्य लक्षणम् ।

सविषमण्डूकादिदष्टलिङ्गमाह—

एकदंष्ट्रार्दितः शूनः सरुजः पीतकः सतृट् ।
छर्दिर्निद्रा च सविषैर्मण्डूकैर्दष्टलक्षणम् ॥ ५१ ॥
मत्स्यास्तु सविषाः कुर्युर्दाहं शोथं रुजं तथा ।
कण्डूं शोथं ज्वरं मूर्च्छां सविषास्तु जलौकसः ॥ ५२ ॥

म०-एकदंष्ट्रार्दित इत्यादि ।–स्वभावादेकया दंष्ट्रया कृतो दंशो भवति ॥ ५१–५२ ॥

भा० टी०—मेघा के काटने पर पीली सूजन, पीड़ा और प्यास, ये रोग होते हैं। विषैले मेघा के काटने पर छर्दि, और निद्रा आती है। विषैली मछलियों के काटने पर दाह, सूजन और पीड़ा होती है। सविष जोंक के काटने पर सूजन, खुजली, ज्वर और मूर्च्छा होती है ॥ ५१—५२ ॥

अथ गृहगोधिकादष्टस्य लक्षणम् ।

गृहगोधिकादष्टलिङ्गमाह—

विदाहं श्वयथुं तोदं स्वेदं च गृहगोधिका ।

म०–विदाहमित्यादि । गृहगोधिका ज्येष्ठीः अन्ये तु ग्रामकमाहुः । अत्र वक्ष्यमाणं कुर्यादिति संबन्धनीयम्, तेन विदाहादीनां कर्मत्वम् ॥—

भा० टी०—गृहगोधिका ( छिपकली-बिस्तुइया ) के काटने पर सूजन, पीड़ा, और पसीना बहुत निकलता है।

### अथ शतपदीदष्टस्य लक्षणम् ।

शतपदीदष्टलक्षणमाह—

**दंशे स्वेदं रुजं दाहं कुर्यात् शतपदीविषम् ॥ ५३ ॥**

म०—दंशेत्यादि । कुर्यात् शतपदीविषमिति शतपदी=कारुण्डिका ॥५३॥

भा० टी०—शतपदी ( कानखजूरा, गोजर ) के काटने पर पसीना आता है। पीड़ा और जलन होती है ॥ ५३ ॥

### अथ मशकदष्टस्य लक्षणम् ।

मशकदष्टलिङ्गमाह—

**कण्डूमान् मशकैरीषत् शोथः स्यान्मन्दवेदनः ।**
**असाध्यकीटसदृशमसाध्यं मशकक्षतम् ॥५४॥**

कण्डूमानित्यादि । असाध्यकीटसदृशमिति असाध्यकीटैर्लूतादिभिः समलक्षणमिति असाध्यं मशकक्षतमिति पञ्चसु मशकेषु मध्ये पार्वतीयमशकक्षतमसाध्यम् । यदाह सुश्रुते,–"पार्वतीयैस्तु कीटैश्च प्राणघ्नैस्तुल्यलक्षणम्" ( सु. क. स्था. अ. ८ )–इति ॥ ४ ॥

भा० टी०—मच्छरके काटने पर दिदोरा पड़ जाता है और थोड़ी २ पीड़ा होती है, असाध्य-विषैले मच्छर के काटने पर असाध्य लूता आदि के काटने के समान लक्षण होता है ॥ ५४ ॥

### अथ सविषमक्षिकादष्टस्य लक्षणम् ।

मक्षिकादष्टलक्षणमाह—

**सद्यः प्रस्राविणी श्यावा दाह-मूर्च्छा-ज्वरान्विता ।**
**पिडका मक्षिकादंशे तासां तु स्थगिकाऽसुहृत् ॥ ५५ ॥**

म०—सद्यइत्यादि । तासां च स्थगिकाऽसुहृदिति तासां सुश्रुतोक्तषण्मक्षिकाणां मध्ये स्थगिका प्राणहरेत्यर्थः ॥ ५५ ॥

भा० टी०—मक्खी के काटने पर तुरन्त बहने वाली स्याह पिड़की हो जाती है, तथा जलन, ज्वर और मूर्च्छा होती है। इनमें स्थगिका नाम की मक्खी प्राणहर होती है ॥ ५५ ॥

